शब्दान्तरयोरेतदुपात्तैः प्रकरणादिभिर्लक्षितानां संसर्गादीनां चोपलक्षणपरं व्याख्येयम्।

**'संसर्गो विप्रयोगश्च'** इति। अर्थभेदाच्छब्दभेद इति नानात्वपक्षे, स्वभाव[2]भिन्नानां तुल्यश्रुतीनां शब्दानां रूपाभेदा[3]देक एव शब्दोऽर्थद्वयवृत्तिरित्येकत्वपक्षे वा भिन्नानां शक्तीनां शब्दश्रुतिमात्रादलब्धविभागत्वेनार्थस्यानवच्छेदे[4] संसर्गादि[5] निमित्तान्तरं विशेषस्मृतिहेतुर्भवतीत्यर्थः।

तत्र संसर्गाद्यथा–धेनुरानीयताम्, दोग्ध्री[6] दीयताम् इति विवक्षितस्य विशेषस्यासंप्रत्यये सकिशोरा सवर्करा सकरभा सवत्सेति नियतेन संसर्गिणा भेदाधिगमनिमित्तेन वडवादिषु दोग्ध्रीविशेषेषु सम्प्रत्ययो भवति। येषां तु धेनुरित्येष गवि रूढ इत्यागमस्तेषां सवत्सत्वलक्षणस्य धर्ममात्रस्य विवक्षा विज्ञायते। येषां च गवाँ[7]जालक्षणार्थद्वये धेनुशब्दस्य प्रसिद्धिस्तेषां सवत्सेति सवर्करेति वा विशेषस्मारकः संसर्गी नियतोऽवगन्तव्यः। शास्त्रेऽपि "अवाद् ग्रः" इति यस्यावेनोपसर्गेण सम्बन्धः सम्भवति स गृह्यते गिरतिः। गृणातेस्तु स्वभावादवेनोपसर्गेण सम्बन्धो न विद्यते। यथा ऊर्यादयः प्रादुःशब्दश्च कृभ्वस्तिविषय एव तथा अवशब्दोऽपि गिरतिविषय एव न गृणातिविषयः। यदुक्तम्–"न चावपूर्वस्य गृणातेः प्रयोगोऽस्ति" इति।

वियोगाद्यथा–अकिशोरा अवत्सा अकरभा अवर्करा धेनुरिति निर्ज्ञातसम्बन्धस्य[9] वियोगेन व्यपदेशात्[10]। शास्त्रेऽपि "भुजोऽनवने" इति यस्य भुजेरवनं चानवनं चार्थस्तस्य ग्रहणं विज्ञाप्यते न कौटिल्यार्थस्य। निभुजति वाससी। निभुजत्योष्ठौ। निभुजति जानुशिरसी इति।

साहचर्या[11]द्यथा–शिला आनीयतां गन्धद्रव्याणि च। शिला आनीयन्तां स्तम्भाश्च। शिला आनीयतां गदाधनुषी चेति। शास्त्रेऽपि "विपराभ्यां जेः"। अत्र साहचर्याद् वि-पराशब्दावुपसर्गावेव गृह्येते। तथाहि "नेर्विशः" इत्यत्र नेरुपसर्गस्य ग्रहणम्। अनन्तरसूत्रे च पर्यादीनामुपसर्गाणामेव। तत्प्रकरणसाहचर्याद् वि-पराशब्दावुपसर्गावेव गृह्येते इत्येके। **अपरे** तु वर्णयन्ति–साहचर्यं प्रत्यासत्त्युपलक्षणम्। येषां हि साहचर्यं तेषां नियोगतः प्रत्यासत्त्या भाव्यम्। अतः साहचर्यस्य प्रत्यासत्त्यविनाभावित्वात्तेन[12] प्रत्यासत्तिर्लक्ष्यते।

---

१ निसर्ग- ॥ २ तुल्यश्रुतित्वात् स्वभावभिन्नानामपि शब्दानां रूपाभेदादित्यर्थः, यस्मात्तुल्यश्रुतीनामिति विशेषणद्वारेण रूपाभेदादित्यस्य हेतुः ॥ ३ हेतौ तृतीया ॥ ४ अनिश्चये ॥ ५ रूढिनिमित्तम्। प्रथमतो यस्माद्धेनुशब्देन धेनुलक्षणोऽर्थः प्रोच्यते, रूढेः सकाशात्। ततः सैवार्थे धेनुलक्षणे निमित्तं प्राक्, तदनु संसर्गादि निमित्तान्तरम् ॥ ६ दोग्धुमर्हा। अर्हतौ तृच् ॥ ७ "अवङ् स्फोटायनस्य" इत्यव[ङ्ङ]ादेशः ॥ ८ भाष्यकृता ॥ ९ पुरुषस्य ॥ १० विशेषे सम्प्रत्ययो भवति ॥ ११ अव्यभिचारिणा व्यभिचारी यत्र नियम्यते तत्साहचर्यम् ॥ १२ साहचर्येण ॥

तदेतदुक्तं भवति । प्रत्यासत्तेर्वि-पराशब्दावुपसर्गौ गृह्येते इति । प्रत्यासत्तिश्च वि-पराभ्यामुपसर्गाभ्यामेव जयतेर्नानुपसर्गाभ्याम् । तथाहि—ताभ्यामेव तदर्थो विशेष्यते नेतराभ्यामिति । तथा **"अन्तरान्तरेण युक्ते"** इति । अत्रान्तराशब्दो यद्यपि स्त्रीप्रत्ययान्तो[1]ऽप्यस्त्यस्त्रीप्रत्ययान्तोऽपि । अन्तरेणशब्दस्त्वस्त्रीप्रत्ययान्त एव । तस्मादन्तरेणशब्देनास्त्रीप्रत्ययान्तेन साहचर्यादन्तराशब्दोऽप्यस्त्रीप्रत्ययान्त एव गृह्यते । यश्चास्त्रीप्रत्ययान्तोऽन्तराशब्दः स निपात एवेत्यन्तराशब्दस्य तावन्निपातस्य ग्रहणम्, अतस्तेन निपातेन साहचर्यादन्तरेणशब्दस्यापि निपातस्यैव ग्रहणम् । यद्यप्येको दृष्टव्यभिचारः[2] तथाप्यदृष्टव्यभिचारो दृष्टव्यभिचारस्य साहचर्यात्तुल्यधर्मतां[3] प्रसिद्धां प्रतिपादयति । **भाष्ये**ऽपि "अस्य गोर्द्वितीयेनार्थः[4]" इति गौरेवानीयते नाश्वो न गर्दभ इति ।

विरोधाद् यथा—अभिमन्यु[5]-लक्ष्मणौ[6] ।

अर्थाद् यथा—गोपालकमानय[7], माणवकमध्यापयिष्यतीति । सैन्धवमानय, मृगयां चरिष्यामीति । अञ्जलिना[8] जुहोति । अञ्जलिनोदकं[9] पिबति । अञ्जलिना[10] सूर्यमुपतिष्ठते[11] इति । शास्त्रेऽपि "गुणेन षष्ठी न समस्यते" इति अदेङां न सम्प्रत्ययः, किन्तु शुक्लादेरेव सम्प्रत्ययः इति । तथा "न शसददवादिगुणानाम्[12]" इति परतन्त्रस्याश्रयिणः शुक्लादेर्ग्रहणं न भवति, अपि तु "अदेङ् गुणः" इत्येवमभिनिर्वृत्तस्य गुणस्य ।

प्रकरणाद् यथा—अन्तरेणशब्दं भुंज्यङ्गेषु[13] उपसंह्रियमाणेषु सैन्धवमानयेति नाश्वे सम्प्रत्ययो भवति । तथा व्यायामे प्रवृत्ते शिलामानय धेनुमानय[14] । गृहकर्मणि रथसंस्कारे वा प्रक्रान्ते शिलामानय चक्रमानयेति नाविशिष्टः सम्प्रत्ययो भवति । छायोपगमने घर्माद्युपयोगे वा वटवृक्षं पश्येति । शास्त्रेऽपि उभयेगतौ[15][16] सत्यां "कर्तृकरणयोस्तृतीया" इति शक्तीनां प्रक्रान्तत्वात् क्रियाग्रहणं न विज्ञायते । "शब्दवैरकलहाभ्रकण्वमेघेभ्यः[17] करणे" इति धात्वधिकारात् क्रिया प्रतीयते । प्रकरणमशब्दम्, अर्थस्तु शब्दवानित्यनयोर्विशेषः ।

लिङ्गाद्यथा—अक्ताः शर्करा उपदधतीति[18] । अनेकस्याञ्जनद्रव्यस्य सम्भवे "तेजो वै घृतम्" इतिवाक्यान्तरे दृष्टाल्लिङ्गाद्विशिष्टसाधनत्वमञ्जनक्रियायाः[19] शर्कराकर्मिकाया निर्द्धार्यते ।

---

१ यथाऽन्तरस्यै शाटिकायै ॥ २ नन्वन्तराशब्दोऽस्त्रीप्रत्ययान्त एव गृह्यते । कथम् ? यावता दृष्टव्यभिचारोऽसौ वर्तते इत्याह ॥ ३ तुल्यो धर्मोऽस्त्रीप्रत्ययान्तत्वलक्षणो यस्य दृष्टव्यभिचारस्य ॥ ४ प्रयोजनम् ॥ ५ अर्जुनपुत्रः ॥ ६ दुर्योधनपुत्रः ॥ ७ वागीशं विद्वांसमिति यावत् ॥ ८ हवनाञ्जलि- ॥ ९ पानाञ्जलि- ॥ १० उपस्थानाञ्जलि- ॥ ११ आराधयति ॥ १२ गुणयोगाद् धातवोऽपि गुणाः ॥ १३ भुजिक्रियाधात्वर्थे विधानादिकः, "इक्श्तिपौ धातु[निर्देशे] स्वरूपेऽर्थे च" इति ॥ १४ शस्त्रिका ॥ १५ क्रिया कारकं चेति द्वयम् ॥ १६ परिच्छित्तौ ॥ १७ षि[!] ॥ १८ उपदध्युरित्यर्थः ॥ १९ घृतलक्षणात् ॥

शास्त्रेऽपि "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यत्राणप्रत्याहारः किं पूर्वेण[1] णकारेण उत परेण[2] इति सन्देहे "उरृत्"[3] इति वाक्यान्तरे तपरकरणं लिङ्गं परेणैव णकारेणेति नियमयति। तद्धि ऋकारेण सवर्णानां ग्रहणे सति अचीकृतदित्यत्र दीर्घस्य स्थानिन आन्तरतम्याद्दीर्घो मा भूदित्येवमर्थं क्रियते। यदि च "अणुदित्" इत्यादिसूत्रे पूर्वेण णकारेण अण्ग्रहणं स्यात् ऋकारोऽनण्त्वात् सवर्णानां ग्राहको न स्यात् ततश्च दीर्घस्यापि स्थानिनो यथाश्रुतेन ह्रस्वेनैव भवितव्यमिति तपरकरणं न कुर्यात्, व्यावर्त्याभावात्. कृतं च, ततोऽवगम्यते परेण णकारेण ग्रहणमिति।

शब्दान्तरसन्निधानाद्यथा—अर्जुनः[4] कार्त्तवीर्यः[5]. रामो जामदग्न्यः। शास्त्रेऽपि अक्षस्य देवनस्य[6]। अर्द्रस्य समद्योतनस्य[7]।

सामर्थ्याद् यथा—अनुदरा[8] कन्या। तथा अभिरूपाय कन्या दीयताम्, न चानभिरूपे प्रवृत्तिरस्ति, तत्र[9] अभिरूपतमायेति विज्ञायते। शास्त्रेऽपि "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति समासार्थे[10] शास्त्रे समासशब्दस्य वृत्तिः कष्टश्रितादिषु समासेषु प्रथमानिर्दिष्टस्य संज्ञिनोऽसम्भवात्।

औचित्याद् यथा—'राक्षसो दस्युर्भद्रमुख इति विपर्ययेण निन्दा प्रशंसा वा गम्यते। तथा रामसदृशः अर्जुनसदृशः इति रामार्जुनविशेषः प्रयोजनौचित्यात्[11] प्रतीयते।

देशाद् यथा—नगरादागतोऽस्मीति प्रत्यासन्नदेशविशेषसम्बन्धात् पाटलिपुत्रे[12] सम्प्रत्ययः। तथा क्वचिद्देशे ये प्रशंसावचनास्तेऽन्यत्र आक्रोशविषयाः। यथा प्रौढादयः[13]।

कालाद् यथा—दक्षिणापथैकदेशे पच्यतामिति पूर्वाह्णे यवागूसाधनो विक्लेदः प्रतीयते, सायाह्ने त्वोदनसाधनः। तथा जागृहि[14] जागृहीत्यहनि. रात्रौ च जागर्तेरर्थो भिद्यते।

व्यक्तेर्यथा—ग्रामार्द्रं ग्रामार्द्र इति, पद्मं पद्मः[15] इति च।

स्वरात्त्वर्थविशेषप्रतीतिः काव्यमार्गेऽनुपयोगिनीति नोदाह्रियते।

**उपलभ्यन्त** इति। संसर्ग इत्याद्येकवाक्यपठितत्वसाहचर्याल्लक्ष्यन्त इत्यर्थः।

---

१ अइउण् इत्यन्तर्वर्तिना ॥ २ हयवर[ट्]. लण् इत्येतत्सूत्रान्तर्वर्तिना ॥ ३ ऋवर्णस्य[र्णः?] अण् उदिच्चाप्रत्ययः सवर्णस्य ग्राहको भवति ॥ ४ स [:] ॥ ५ कृतवीर्यस्यापत्यं कृतवीरस्यापत्यमिति च यथाक्रममणि ण्ये च कार्तवीर्य इति ॥ ६ क्रीडनकस्य प्रासकस्येत्यर्थः ॥ ७ समं द्योतयति ॥ ८ सर्वथाऽभावे न नञ् किन्त्वीषदर्थे सामर्थ्यात् ॥ ९ ततोऽभिरूपग्रहणं निरर्थकं सद् यत्कृतं तत्सामर्थ्यादभिरूपतमायेति लभ्यते ॥ १० "विशेषणं विशेष्येण बहुलम्" इत्यादिके ॥ ११ औचित्यं शास्त्रे न घटते इति शास्त्रे न दर्शितम्। असम्भवाच्छास्त्रेऽपीति नोक्तमेवमन्यत्रापि ॥ १२ पाटलिपुत्रस्य। १३ आक्रोश- ॥ १४ विवेको जागरणं चेति यथाक्रमम् ॥ १५ निधिविशेषः ॥

**भिनत्ति** इति । तिमिरविनाशः कुमुदविकाशनं च कार्यं[1] चन्द्रलक्षणमेवार्थं स्मारयति । **मत्त** इति । कोकिलानां मदाधाने वसन्तस्यैव सामर्थ्यमिति । **ईक्षणम्** इति । चक्षुःशब्दोपादानेनैव नयनार्थस्य प्रतिपादितत्वादीक्षणशब्दप्रयोगोऽन्यथा नोपपद्यत इति सामर्थ्यमीक्षणलक्षणं व्यापारमत्र स्मारयति । **प्रश्ने** इति । किंविषयोऽयं प्रश्न इति शब्दार्थस्यानवच्छेदे पूर्वपूर्वप्रकारवैचित्र्यो[2]पदर्शन[3]विशिष्टतया क्रमो[4]पगमसामर्थ्यं[5] पुंव्यञ्जनलक्षणं विषयं स्मारयति । **अस्य** इति । विशिष्टे देशे वर्त्तमानः पुमानिदमा प्रत्यक्षेण[6] निर्दिश्यते । **उदा**–इति । "यत्पदमभिनयसहितम्"इति लक्षितस्य लक्षणस्य लक्ष्यप्रदर्शनार्थमिदम् । माषमिति मासमिति च सषयोर्वक्तव्ययोः षसावताद्दशावुक्तौ । शकासमित्यत्र च य आदावुच्चारणीयः सोऽन्ते निर्दिष्टो, यश्चान्ते निर्देष्टव्यः स आदाविति विपरीतता अस्वगोण्यादिशब्दानाम् इति । तथा च **भर्तृहरिः**–

"शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते ।
तमप[7]भ्रंशमिच्छन्ति विशिष्टार्थ[8]निवेशिनम्" ॥

शब्दप्रकृतिरपभ्रंशो नाप्रकृतिः स्वतन्त्रः[9] कश्चिद्विद्यते । सर्वस्य हि साधुरेवापभ्रंशस्य प्रकृतिः । प्रसिद्धेस्तु[10] रूढिमापद्यमानाः स्वातन्त्र्यमिव केचिदप[11]भ्रंशा लभन्ते । तत्र च गौरिति प्रयोक्तव्येऽशक्त्या प्रमादा[12]दभिन्ना[13] गोण्यादयस्तत्प्रकृत[14]योऽपभ्रंशाः प्रयुज्यन्ते । ते च सास्नादिमत्येव लब्धस्वरूपाः साधुत्वं विजहति । अर्थान्तरे तु प्रयुज्यमानाः साधव एव विज्ञायन्ते । न ह्येषां रूपमात्रप्रतिबद्धमसाधुत्वम् । तथा हि–

"अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे[15] ।
निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम्" ॥

आवपने गोणी इति स्व[16]वियोगाभिधाने च 'अस्व' इत्ये[17]तयो[18]रवस्थितं साधुत्वम् । तथा सास्नादिमति हेषिता[19]दिलिङ्गे च निमित्तान्तरात् प्रवृत्तावेतयोरन्यत्र विषये लब्ध[20]संस्कारयोः साधुत्वमेव विज्ञायते । "गोणी इत्येयं गौर्गोणी"इति क्षीरधारणविषया[21]द् आवप[22]नत्व-

---

१ थम्प्रत्ययार्थः ॥ २ इदम्प्रकृत्यर्थः ॥ ३ तृतीयार्थः ॥ ४ क्रमोपगमस्य ॥ ५ अयमेव[?] सामर्थ्यम् ॥ ६ प्रत्यक्षेण निर्दिश्यते इदमा करणेन ॥ ७ अपशब्दम् ॥ ८ गोरूपविशिष्टार्थे निविशते तच्छीलः ॥ ९ स्वतन्त्र इति नाप्रकृतिरित्यस्य पर्यायः ॥ १० क्वचिद्देशे ॥ ११ गोवाचकगोणी-गावी-गोपुत्तलिकादयः शब्दाः ॥ १२ लक्षणविषये निरवधानता ॥ १३ अभिन्नार्था इत्यर्थः ॥ १४ गवादिः परामृश्यते ॥ १५ निर्धने सणसूत्रपट्यां च ॥ १६ द्रव्य– ॥ १७ इत्यस्मिंश्चार्थे ॥ १८ अस्वगोणीशब्दयोः ॥ १९ हेषितादि लिङ्गं यस्य तुरगस्य ॥ २० गोणशब्दादावपने ईर्भवति, अन्यत्र गोणा इति संस्कारः ॥ २१ क्षीरधारणं विषयो यस्यावपनत्वस्य ॥ २२ धारण– ॥

सामान्यादभिधीयते । तथा अविद्यमानं स्वमस्येति अस्वोऽयमस्व इति । तस्माच्छन्दरूपमपरिगृहीतकारणं न किञ्चिन्नियतमस्ति यत्र साधुत्वमसाधुत्वं वा व्यवतिष्ठते ।

**असाधुत्वस्यापि** इति । पददोषाणामपि येषां कथञ्चित् सम्भाव्यमर्थदोषत्वं तान्यासतां ग्राम्यत्वाप्रतीतत्वानर्थकत्वानि । ययोस्त्वसाधुत्वकष्टत्वयोस्तदसम्भाव्यमेव तन्मध्याद्यदसाधुत्वं तस्यापीत्यर्थः । **अत एव** इति । यतः पददोषत्वम् । **तद्व्याख्यान**–इति । तस्यैव गूढार्थपदप्रयोक्तुरेव व्याख्यानम् । **कर्त्रभिप्राय**–इति । दृशोरश्रुपयोनिषेककरणक्रियायाः प्रधानं यत्फलं प्रियसम्प्रयोगस्तत्र कुरङ्गेक्षणामभिसम्बध्नाति। **चादिपदाप्रयोगेऽपि** इति । अयमर्थः । यत्र नाम द्योतकमात्रतया सदा प्रोषित[1]तार्थप्रायमव्ययं द्योत्यार्थमात्रविरहेणानर्थक्यदोषमश्नुते तत्र कथमन्यद्वाचकमेव स्वैक[2]शरणवाच्यार्थविरहेण नैरर्थक्यं नाश्नुवीतेति । **आनर्थक्याच्च** इति । ननु निरर्थकं निष्प्रयोजनं पुनर्वचनमपि तथैवेति नानयोर्विशेष इत्याशङ्कायामिदमुक्तम् । प्रयोजने सति ह्युक्तस्यार्थस्य पुनरुक्तिः । निरर्थके त्वर्थप्रतिपत्तिलक्षणस्य प्रयोजनस्य सर्वथा विरह एवेत्याशयः । **अत एव** इति । यतोऽर्थाभावान्नायं तदाश्रयो दोषो भवितुमर्हति । **साक्षाद्** इति । अव्यवधानेन वाच्यमर्थमभिधातुमप्रतीतः शब्दोऽर्थप्रतिपत्तये न भवतीत्यर्थः । **अन्य** इति । तेनावाचकमिति पर्युदासोऽयम् । ततश्च वाचकसदृशमवाचकम् । अपार्थं त्वपगतार्थं प्रसज्यप्रतिषेधवृत्त्या निरर्थकमुच्यते । **अन्यार्थम्** इति । अन्योऽर्थो वृद्धव्यवहारप्रसिद्धादर्थाद्यस्य पदस्य तदन्यार्थम् । **विगमे** इति । रूढ्यपगमे अथवा विगमे यथेति सम्बन्धः, यथा विशब्दसान्निध्ये इत्यर्थः । ननु चैवं शब्दहीनेऽस्यान्तर्भावः । विषयान्तरप्रयोगेऽप्यपशब्दो भवति, न केवलं लोपागमवर्णविकारादीनामयथाकरणे । तथा च–

"अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे" इति ।

तेन विपूर्वो हरतिः पादविक्षेपे प्रसिद्धसम्बन्धः, अस्य च परिमोषप्रयुक्तावपशब्दतैव । अपशब्दस्य च स्वप्नेऽप्यप्रयोगादनित्यदोषमध्येऽस्य[3] पाठो न सम्बद्ध इत्याह–**यत्र झटितीति** । **कश्चिद्** इति अपहरणलक्षणादिः । **न चासौ** इति अपि तु पादविक्षेपलक्षणादिः । **अदर्शनाद्** इति उपसर्गवशेनेत्यर्थः । **तथाभूत** इति अपहरणलक्षणादेः । **पादपूरणार्थम्** इति । धात्वर्थानुहारित्वान्निरर्थकत्वेऽपि न कश्चिद्दोष इत्यत्र तात्पर्यम् । **वीत्त**–इति । "अच उपसर्गात्तः" इति तत्वम् । विदत्तशब्दे तु न दृश्यते तत्वमिति विशब्दस्यात्र निपातत्वमिति सिद्धम् । **विहृतं च** इति विजहुरिति । विहरणं च तत् पादविक्षेपलक्षणायां क्रीडायां प्रसिद्धम्, न त्वपहरण इत्यर्थः । **प्रसिद्धार्थो** इति प्रसिद्धोऽर्थः पादविक्षेपलक्षणादिः ।

---

१ गत- ॥ २ आत्मीयवाचक- ॥ ३ अन्यार्थस्य ॥

**रूढिच्युतम्** इति । सामान्येनोक्ते योगरूढयोऽपि गृह्यन्ते । तेन तेष्वपि शब्देषु रूढिमनपेक्ष्य योगमात्रोपादानात् तद्वति यत्रार्थे पदं वर्तते तत्तेनार्थेनान्यार्थम् । तत्रारूढत्वेनातदर्थत्वात् । यथा—जलध्यादौ जलधरादिपदम् । अत्र रूढिभागत्यागयोगभागपरिग्रहोप[1]नमितयाऽभिधे[2]यैवार्थस्य सम्प्रत्ययान्न नेयार्थता । तत्र सर्वं सर्वेणाभिधाया अभावात् । नापि गूढार्थता । तत्र तत्तदंशविषयत्यागोपादानरूपव्याख्यासमायोजनाव्यतिरेकेणैवाप्रसिद्धार्थविषयाया अभिधायाः प्रवृत्तेः । अश्लीलता पुनरनाशङ्क्यैव । क्लिष्टत्वमपि न संश्लिष्ट[3]म् । तस्य भागविषयत्यागोपादानमन्तरेण व्यवधानोपघटिताभिधास्वभावत्वात् । तत्र प्रथमस्तावद्दोषोऽभिहितरूपभागविषयत्यागोपादानसंस्कारसंस्कृताभिधानिबन्धनः । द्वितीयः सर्वं सर्वेणाभिधादरिद्रशब्दविषयीकृताभिधेयविषयोपलक्षितलक्षणादिकविकल्पनामात्रसारः । तृतीयः पुनरप्रसिद्धार्थविषयाभिधाव्यापारशरीरः । चतुर्थस्य रूपं स्पष्टमेव । पञ्चमोऽपि व्य[4]वधोपाध्यभिधास्वभाव इति सम्भाव्यमानपरस्परान्तर्भावानाममीषामन्यनेयगूढार्थाश्लीलक्लिष्टदोषाणामेष भेदोऽवसेय इत्यस्या[5]भिप्रायः ।

**अन्ये तु** जलधरादिशब्दे जलध्यादौ प्रयुज्यमानेंऽशोऽपि शब्दलक्षणापूर्वकमेवार्थप्रतिपत्तिहेतुर्भवतीति नेयार्थ इति प्रतिपद्यन्ते । **गण्डं साधु** इति । अनुप्रासपरिपोषणादित्यर्थः । **आश्रय** इति । आश्रयो बन्ध[6]विशेषः प्रहेलिकादिः । वक्ता श्रोत्रियादिः । व्यङ्ग्यो रसादिश्च । **अनया** इति । यथा सन्निवेशविशेषाश्रयौ चारुत्वाय तथा प्रकरणविशेषादिरपीत्यर्थः । तेन समदकरिवर्णनावसरात् क्लिन्नगण्डशब्दौ द्वावप्यसभ्यार्थस्मृतिहेतू न विरसतामावहतः । एवं शिवपूजावर्णनावसरे लिङ्गशब्दः । राजवंशवर्णनसमये भगीरथशब्दः । ब्राह्मणगुणगणनप्रस्तावे ब्रह्मवर्चसशब्द इत्यादिः ।

**यथा-तद्वद्** इति । यथा-तद्वच्छब्दौ क्रमेणैव असाधीयःसाधीयःपदाभ्यां योजनीयौ । तेनायमर्थः । यथा असाधीयः साधीयस्त्वासाधीयस्त्वोभयरूपतया प्रयोजितं तथा साधीयोऽपि द्वैरूप्येण प्रयोजयेत् । तत्रासाधीयसो नैसर्गिकमसाधीयस्त्वमिति साधीयस्ता पूर्वं ज्ञापिता । साधीयसस्तु स्वभावेन साधीयस्त्वस्य सम्भवादुभयरूपताभिधानस्यासाधीयस्तापरत्वं द्रष्टव्यम् ।

**असभ्य** इति । यस्य पदस्यानेकार्थस्यैकोऽर्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम् । यत्तु पदमेकदेशद्वारेणासभ्यमर्थं स्मारयति तदसभ्यस्मृतिहेतुः । केवलासभ्यार्थं च विष्ठादिपदं दुष्टतया शक्यसम्प्रत्ययमिति न प्रदर्शितम् । **स्वशक्त्या** इति अभिधया ।

---

१ उपढौकितया ॥ २ शब्दशक्त्यैव ॥ ३ युक्तम् ॥ ४ व्यवधा उपाधिर्विशेषणमस्याः । ५ **वामनस्य** । ६ रूपकविशेषो भाणः प्रहसनं च ।

तया ह्रदः पुंसः पूर्वजनिवासवचनम्। **संवीतम्** इति बहुशः प्रयुक्तम्। **सुभगा** इति सुभगा भगिनी।· **उपस्थानम्** इति व्रीडारूपासभ्यार्थान्तरासभ्यस्मृतिहेतुरूपमभिप्रेतम्। **कुमारी** इति अमङ्गलातङ्करूपासभ्यस्मृतिहेतुभूतम्। **दोहदम्** इति त्व[1]जुगुप्सितरूपासभ्यस्मृति-हेतुस्वभावमश्लीलं लोकादृतत्वान्न दुष्टम्। **कामार्त्ता** इति काष्ठाप्राप्तमदनावस्थारूपेण मृत्युना प्रत्यासन्नमरणा विहितेत्यर्थः। **तम्** इति विवक्षितम्। **अभिधानतया** इति वाचकत्वेन पर्यायत्वेनेत्यर्थः। यथा—विषधरारिनन्दनशब्दो मेघे। विषधरारयो मयूरास्तेषां नन्दनः। अभिधानग्रहणाद्विशेषणत्वे तु न कश्चिद्दोषः। **साधारणमपरेषु** इति। यत्पदं गुणक्रिये निमित्तमुद्दिश्यान्येष्वप्यर्थेषु साधारणं सदेकस्मिन् विशिष्टेऽर्थेऽभिधानतया न तु विशेषणत्वेन कृतं तत् संशयवत्। **हिमहा** इति। हिमहननक्रिययैतद् रवौ वह्नौ च साधारणमभिधानतया चैकत्राप्यरूढमत एकत्र प्रयुज्यमानं संशयं कुरुते। **कल्पितम्** इति स्वधियैवाभिधानतया प्रयुक्तम्। **अश्व** इति। वडवामुखानलेत्यस्य योगनिमित्तस्य संज्ञाशब्दस्य च पर्यायोऽयम्। अत्र च मध्यपदं वडवामुखो वडवावदन इत्यादेर्दर्शनात् पर्यायपरिवर्त्तनं क्षमते। न च योगरूढशब्दे पर्यायपरिवर्त्तनक्षमत्वमस्तीति गीर्वाणादिः पर्यायपरिकल्पने नोदाहार्यः। न खलु वाक्सायक इत्यादिर्देवादिवाचकः। **यत्र** इति वक्तरि वस्तुनि च। **पदम्** इति तत्र नवन्नित्यादि।

**अधम** इति। अधमा हीनजातयो दासचेटादयः। मध्यमाः प्रतीहारपुरोहितसार्थ-वाहादयः। उत्तमा मुनिनृपमन्त्रिप्रभृतयः। **इदम्** इति द्वितीयकारिकोक्तम्। **वस्तुविषयम्** इति। उत्तमो मुनिमन्त्रिप्रभृतिरपि तत्रभवदादिपूजापदानि वक्तुं योग्योऽपि राजानमेभिर्वक्तुं नार्हति। तथा स एवोत्तमो राजादिर्मुनिं परमेश्वरादिभिरामन्त्रणपदैरिति वस्तुविषयमेतत्। राजा हि परमेश्वरादिभिर्मुनिश्च तत्रभवदादिभिः पदैराहूयते। **वक्तृविषयम्** इति। गरीयसो मुनिप्रभृतींस्तत्रभवदादिशब्दैर्वक्तुमुचितानप्यधमो नैतैर्वक्तुमर्हति। तथैतान् भट्टारकेत्यादि-भिर्नृपादिरिति वक्तृविषयमेतत्। दिङ्मात्रं चेदम्, विस्तरतस्तु **कल्पपल्लव** एव प्रपञ्चिताद् दशरूपविधानादन्योन्याभाषणविधिं यथाव[2]देवगम्य तदन्यथोपनिबन्धे दोषोऽयमुद्भावनीयः।

क्लिन्न-गण्डेतिशब्दावार्द्रे कपोले च सभ्येऽर्थे प्रयुक्तौ पूतियुक्तं पिटकं चासभ्यमप्यर्थं मनसि कुरुतः। असभ्यद्वययोगाच्चात्र विशेषणविशेष्यभावे सति दुष्टतरार्थप्रतिपत्तिः। **अर्थविशेषवशाद्वा** इति। अतिव्याप्तिपरिहारार्थमिदम्। सभ्येऽर्थे आर्द्रकपोलादौ प्रयुक्तम-सभ्यार्थान्तरं सदपि तद् ग्राम्यं क्लिन्न-गण्डादिपदमनुचितत्वं मुञ्चतीत्यर्थः।

**सभ्येऽपि** इति। अपिर्विस्मये संभावनायां वा। **मञ्जीरादि**—इति। आदिग्रहणं

---

१. -ति तु जु-ख॥ २. यथा विद्यते यत्र तत्तथेति क्रियाविशेषणम्॥

रशना-घण्टा-भ्रमराद्यर्थम्। प्रायग्रहणं सदृशार्थवृत्तिक्वणि-शिञ्जि-गुञ्जीत्याद्यर्थम्। प्रभृतिग्रहणं वाश्यत्याद्यर्थम्। पुनरादिग्रहणं सिंह-मृगाद्यर्थम्। प्रायग्रहणेमपिध्वनत्याद्यर्थम्।

**एवंप्रायान्** इति। ये शास्त्रे सामान्येन पठ्यन्तेऽथ च विशेष एव दृश्यन्ते तानित्यर्थः। तद्यथा—हेषतिरश्वेषु, भणतिः पुरुषेषु, कणतिः पीडितेषु, वातिर्वायौ, न त्वन्यत्र। नहि भवति पुरुषो वातीति। एवमन्यदपि बोद्धव्यम्। **बलवद्** इति अत्यर्थं मुग्धिकासीत्यर्थः। **अवधिः** इति प्रवासमर्यादावच इति। "मामुद्दिश्य" इति लक्षणम् विरहानलकरालिताया मर्तुमनस उक्तिरियम्। **प्रियाम्** इति। या या यक्षेश्वराणां वनिता भवद्वल्लभा सा सा एतीति सम्बन्धः। **प्रवासयति** इति। अत्र प्रवासयति-संस्थित-विनाशशब्दा निराच्छादयत्याद्यशस्तार्थान्तराः, पिशाचीशब्दस्तु अशस्तार्थोऽप्यशस्तार्थान्तरत्वेन कथञ्चिदुदाहृत इति चिन्त्यम्।

**मारीच** इति कश्यपः। कृत्याः क्रियाः। पत्न्या अदितेः। **सङ्क्रन्दनादीनाम्** इति। आदिग्रहणात् धाता मित्रोऽर्यमा वरुणोंऽशुर्भगः पूषा विवस्वान् सविता त्वष्टा विष्णुश्चेति। अत्र कृत्याशब्दोऽशस्तार्थान्तर इति अशस्तार्थस्मारकत्वेन न व्याख्यातः **कल्पलतायाम्**।

**मत्यार्द्रयन्तः** इति। अत्र रूढव्रण-क्लेद-पुरीषण्डशब्दानां घृणावत्स्मृतिहेतुत्वम्। **ग्राम्यं घृणावद्** इति। घृणावदादिकमेकैकमपि त्रिप्रकारं क्रमेणैव संवीत-गुप्त-लक्षितेषु न दुष्यतीत्यर्थः। **सुदुस्त्यजेति**। अश्लिष्टैस्त्रिभिर्वाक्यखण्डलकैरश्लीलार्थान्तरे उदाहरणचतुष्टयम्।

**भद्रे मारी** इति। अत्र मारी-कृत्यादीनां पदानां समस्तमङ्गलायतनस्य भगवतो विश्वेश्वरस्य सम्बन्धेनोक्तेः संवीतत्वाद् गुप्तत्वम्। **वहति** इति परिणयति सति। **कोऽभिप्रेत** इति। अत्र अभिप्रेत इत्यादीनामशस्तस्मृतिहेतूनामपि लोकेऽन्यत्र लक्षितत्वाद्गुप्तत्वम्। **विपूय** इति। अत्र विपूय-पलाश-ब्रह्मवर्चस-पोगण्डशब्दानां घृणावदर्थस्मृतिहेतुत्वेऽप्यन्यत्र लक्षितत्वाददुष्टत्वम्। **एवमन्यद्** इति। "किञ्चिदाश्रयसौन्दर्याद्" इति, "सन्निवेशविशेषात्तु" इति च इत्यादि **भामहोक्तानुसारेणेत्यर्थः**।

**निरूढाः** इति भ्रष्टोपचारप्रतीतयः। **लक्षणाः** इति लक्षणाशब्दाः। **अभिधानवद्** इति वृक्षादिनामशब्दवत्। **तथाविधे** इति। तादृशेऽपरस्मिन् गौर्वाहीको गङ्गायां घोष इत्यादौ परिदृष्टः सादृश्यनिबन्धन-सारोपगौणोपचारत्वसम्बन्धनिबन्धन-लक्षणात्मकशुद्धत्वादिलक्षणः स्वभावो यासां क्लिन्नवियदित्यादिकानां ता इत्यर्थः।

**दुरालोकम्** इति। दुःसहविरहवह्निदन्दह्यमानमानसः कामपि सुखकलामिदानीमिह कथञ्चिदप्यनासादयन् तदर्थमेव किल नभःसरोऽनुसरामीति यावदुदङ्मुखमवलोकये तावत्तदसमदुःखनिमित्तं प्रत्युत भवतीत्यर्थः। भवतु तर्हि प्रतीचीं दिशमाश्रयामि। एषापि

---

१. पुनरर्थे ॥ २. शब्दशास्त्रेऽभिधानशास्त्रे च।

सूक्ष्मजलोद्गारिणा समीरणेन इत एवाभिसरता व्याप्तेति किं करोमि । इमां तु प्राचीमाविशामि । इयमपि तथैवेत्येवं दिक्षु विदिक्षु च चक्षुर्यावन्निक्षिपामि तावत्ताः सर्वा अपि सोढुमशक्या-स्तदाह–**दिशोऽपि दुःसहा** इति । **मन्द**–इति सूक्ष्मजलोद्गारित्वात् मन्दमन्दत्वमित्यर्थः ।

**तेषु च** इति व्याख्यानान्तरमिदम् । **ताश्च** इति । वैदेहीविरहवह्निदाहदुःखमा-त्मनैव तावद्दुःसहमन्यत् केकाश्रवणात् स्मर्यमाणेन मेघदर्शनेन द्विगुणतामनिलस्पर्शेन च त्रिगुणतां केकाश्रवणेनैव च चतुर्गुणतामापद्यमानमतिदुःसहतमं गुहासु संपद्यत इति भावः । **साधारण्यम्** इति । यथेमे मम पयोदादयो दुःखौघदायितया जीवितव्यव्ययहेतवः शङ्क्यन्ते तथा वैदेह्या अपीति समानत्वम् । **इतः** इति । अस्मात् विभावसाधारणत्वाभिमननकालात् । **हृदये** इति । मनसि दुर्ललिते भय उपस्थितेऽनुकम्प्यो डिम्भादिर्बाहुभ्यामुरसि विन्यस्य पित्रादिना हि रक्ष्यत इति तदर्थमुरसि तां निधायेति ध्वनिरपि ।

**अथ च** इति पक्षान्तरसूचनार्थम् । **भवनम्** इति जीवनमित्यर्थः । **स्मरण–**इति । सजलजलधरादीनामुद्दीपनविभावानां साधारणत्वावधारणादिना स्मरणम् **वैदेही** इति शब्दः । **कथं भविष्यति** इति विकल्पपरम्परा । **युक्तम्** इति यतः क्षत्रिया त्वमिति । **अर्थः** इति वियल्लक्षणः । **लक्ष्यते** इति । लक्ष्यमाणस्यार्थगतेषत्तिरोधीयमानत्वादिधर्मसदृश-वियद्गतेषत्तिरोधीयमानत्वादिधर्मलक्षणाद्वारेणेत्यर्थः । **मैत्री** इति पयोदैः सहेत्यर्थः । **–धर्मा** इति एतद्धर्मभाजनभूतो विशिष्टो राम इत्यर्थः । **विशिष्ट** इति दृढमित्यादिपद-सन्निधानमेव । **सामग्री लक्षिता** इति । सामान्यविशेषात्मकसम्बन्धनिबन्धनया लक्षणात्मिकया शुद्धया लक्षणयेत्यर्थः । **तस्मिन्** इति यो वृद्धव्यवहारे निरूढः । **तज्जातीयेषु** इति । ये वृद्धव्यवहारे कुन्ताः प्रविशन्तीत्यादयो लक्षणाविषयत्वेन प्रयुज्यन्ते तत्प्रकारेष्वित्यर्थः ।

**न चासौ** इति । शूद्रे राजशब्दवत् तज्जातीयोऽसौ भविष्यतीति चेदित्याह–**नापि च** इति । तज्जातीया हि लिखादयः शब्दाः सातिशयत्वेन प्रतीतिव्यवधायिशब्दलक्षणापुरःसरतया विनापि[1] वियदादिलक्षणमर्थं लक्षयन्तः परिदृष्टाः । **तथाविधार्थ**–इति तथाविधो लक्ष्यमाण-शब्दद्वारकोऽर्थः । **तज्जातीये** इति तुरङ्गकान्ताननहव्यवाहसदृशे ।[3] **निर्जितत्वं लक्ष्यते** इति । ततः साम्यमाधिक्यं चेति नेयार्थता ।

**तन्नामनि** इति 'शिशुपरिप' इत्येवंरूपे । **उत्तरपदमेव** इति । पूर्वपदं तु पर्यायेण परिवर्तनं क्षमत इत्यर्थः । किन्तु पयस्-तोय-वारिप्रभृतिना रूढेनैव, न तु वह्निशत्रु-हिमा-

---

१. रक्षार्थम् ॥ २. भाषायाम् ॥ ३. तज्जातीये.. सदृशे—अयं पाठः ख. पुस्तकस्य, क. पुस्तके तु निराकृतः ॥ ४. मतविशेषेण ॥

पहामित्रेत्यादिना यौगिकेन पर्यायेणेति । **पूर्वपदमेव** इति । अत्राप्युत्तरपदमग्निप्रभृतिना न त्वर्चिष्मदित्यादिनेत्यर्थः ।

**कल्पितार्थम्** इति । विनैव शब्दव्यापारसंस्पर्शं लक्षितलक्षणादिनाऽर्थस्य कल्पनात् समारोपणादित्यर्थः। **दशसङ्ख्या** इति लक्षितलक्षणया । तथा हि—पङ्क्तिशब्दः पङ्क्तिच्छन्दोगतान्यक्षराणि लक्षयित्वा तद्गतां दशसङ्ख्यां लक्षयति । **विहङ्गम**—इति पक्षिलक्षणसामान्यरूपार्थवाच्यपि विशेषे लक्षितः[1] । **तन्नामभृतः** इति। तन्नामानि चक्राणि बिभ्रति ये तन्नामेव नाम येषामिति "सप्तम्युपमानपूर्व[ पद ]स्योत्तरपदलोपश्च" इत्यनेनोपमानभूतस्य नामपदस्य लोपः। अत्र 'उलूकजिता' इति व्यक्तमुदाहरणं नेयार्थस्य, पङ्क्तीत्यादि तु नेयार्थस्य क्लिष्टस्य च, पङ्क्तिविहङ्गमनामेत्यंशे कल्पितार्थत्वात्, तद्भृतो रथा[2] इत्यत्रांशे व्यवहितार्थप्रतीतिकारित्वाच्च ।

**अत्रिलोचन** इति । अत्रैकपदप्रत्याय्योऽप्यर्थः कुमुदलक्षणोऽत्रीत्याद्यनेकपदप्रत्यायितार्थपर्यालोचनाव्यवहिततया क्लिश्यमानो वाचकस्य क्लिष्टतामावहति। **काञ्चीगुणस्थानम्** इति । अत्र रूढत्वादवान्तरपदार्थप्रत्ययमन्तरेणैवैकपदवदर्थप्रतीतिरिति नैतत् क्लिष्टम् । **अनुशयम्** इति पश्चात्तापं कोपं च । **अभिमनाः** इति प्रसन्नमना निर्भयचित्तश्च । **माननाम्** इति पूजां निर्बर्हणं[3] च ।

**अपुष्टार्थम्** इति । यत्रैकशब्दप्रतिपाद्योऽप्यर्थो निरभिप्रायैर्बहुभिः शब्दैः प्रतिपाद्यते तदपुष्टार्थम्, यत्र तु साभिप्रायबहुशब्दप्रयोगस्तत्र न दोषः । यथा[4]—

या स्रष्टुः सृष्टिराद्या[5] पिबति विधिहुतं या हविर्या[6] च होत्री[7]
ये द्वे[8] कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्[9] ।
यामाहुः सर्वबीजप्रकृतिरिति[10] यया प्राणिनः प्राणवन्तः[11]
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ।।[12]

**'द्विरष्ट'** इति । वाक्यखण्डद्वयेनोदाहरणत्रयम् । **मडहादि** इति । मडह—लडह-होरग-कन्दोट्ट-एल्ल-हुक्क-कुसुमाल-वाणवालादिकं यथाक्रमं सूक्ष्म-श्रेष्ठ-वस्त्रोत्पल-दरिद्राञ्जलि-चौर-शक्रादिवाचकम् । **रूढिः** इति रूढिभ्रान्त्या । कश्चिद्धि स्वदेशप्रसिद्ध्याऽस्यार्थस्य शब्दोऽयं सर्वत्र[13] वाचक इति मन्यमानः प्रयुञ्जीत । "व्युत्पत्तिर्यस्य नास्ति" इति वचनाच्च सव्युत्पत्तिकं देश्यं कदाचित् प्रयोज्यमेवेत्युक्तं भवति यथा—दूर्वायां छिन्नोद्भवाशब्दः, ताले

१. लक्षणाविषयीकृतः ॥ २. रथ—॥ ३. मारणम् ॥ ४. आगमस्वरूपनिरूपणेन साभिप्रायत्वम् ॥ ५. जलम् ॥ ६. अग्नि ॥ ७. यजमानरूपा ॥ ८. सूर्यचन्द्राख्ये ॥ ९. नभः ॥ १०. क्षितिः ॥ ११. वायुः ॥ १२. [ सृष्टिः स्रष्टु—, वहति, प्रपन्नः इति पाठान्तराणि । ] १३. देशे ॥

भूमिपिशाचः, सर्वे महानटः, वृक्षे परशुभक्तः, चन्द्रामृतयोः समुद्रनवनीतम् , जले मेघक्षीर-मित्यादि । **त आकाशम्** इति वाक्यखण्डद्वयेनोदाहरणद्वयम् ।

इति पददोषाः ।

[ अथ वाक्यदोषाः ]

**यद्भिन्नार्थम्** इति भिन्नार्थविशेषे मृग्यार्थमित्यर्थः। **शराद्यर्थतया** इति। शर-स्मर-क्षान्ति-पद्मार्थतया प्रसिद्ध्या हेतुभूतयेत्यर्थः। **कथञ्चन** इति। केनचित् प्रकारेण यद्गूढ-शब्दार्थं तन्न प्रयुञ्जीत। न पुनरेवं यद्गूढशब्दाभिधानं तन्न कथञ्चन प्रयुज्यतेऽनित्यदोषत्व-हानिप्रसङ्गात्। किं पुनः कारणं गूढशब्दाभिधानं बाहुल्येन दोष इत्याह—**सुधियामपि** इति। शास्त्रीयन्यायद्वारेण याऽर्थप्रतिपत्तिः सा सुधियामपि सरसकाव्यबन्धेषु नेष्टा। **असितर्तितुग्** इति। महेश्वरेण पार्वतीं प्रति रममाणेन रहःक्रीडां वीक्षमाणे देवप्रेरितेऽग्नौ वीर्यं प्रक्षिप्तं ततः कुमारो जात इति ह्याम्नायः। **अद्रिदृग्** इति। द्विनेत्रत्वप्रतिषेधेन द्वादशनेत्रत्वप्रतीतिर्विवक्षिता। **अर्थान्तरम्** इति। तन्तुवायवस्त्रनिर्माणतन्तु, विवस्त्रत्वलक्षणं कौपीनादि, दानशीलत्वप्रशंसा, जरापाण्डुरत्वमहेलालक्षणं च।

**न सा** इति। परार्थवद्धकक्ष्याणामसौ न धनोन्नतिर्या कलत्रमात्रसुखदायिनी। यस्मात् सत्यं धनं पेलवमिति प्रकृतोऽर्थः। अथ चैतद् वाक्यमसभ्यस्मृतिहेतुः। सा धनोन्नतिः कलत्ररतिदायिनी वद्धकक्ष्यापटानां वृषणपीडनमित्यर्थस्मरणात्। ननु च " पदसन्धेर्विश्लेषो-ऽश्लीलत्वम् " इत्यनेनैव वाक्यस्याश्लीलत्वं वक्ष्यते तत् किमिह तदतिदेशेन। नैतत्, नात्रासभ्यपदार्थमात्रस्मृतिहेतुः पदसन्धिकृतं वाक्यस्याश्लीलत्वं विवक्षितम् अपि त्वसभ्य-वाक्यार्थान्तरतया तत्स्मृतिहेतुत्वेन वा। यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाशु जायते पातो न तथा पुनरुन्नतिः॥ इति।

तथा—'न सा धनोन्नतिः' इत्यादि तत्र यदि नामात्र दैवमिलितं पदसन्धिवैरूप्यं तदानी-मयमपरो वाक्यदोषोऽस्तु न पुनस्तेनास्य विभिन्नरूपस्य वाक्यदोषस्य गतार्थत्वं वक्तुं शक्यत इत्यस्याशयः। **अन्येषां** तु मतम्—न हि भवत्यसभ्यवाक्यार्थान्तरत्वमेव वा, तत्स्मृतिहेतुत्वमेव वा वाक्याश्लीलत्वस्य व्यापकं लक्षणम्। 'तेऽन्यैर्वान्तम्' इत्यादौ वाक्यार्थस्वभावतामना-पन्नस्यानेकस्यासभ्यस्य पदार्थमात्रस्य प्रतीयमानस्य प्रयोजकत्वदर्शनात्। ततो यत्र सन्धानेन विनाऽनेकं पदमनेकस्यासभ्यस्य पदार्थस्य स्मारकं भवेत् तत्रायं दोषः। यत्र तु सन्धानवशा-दसभ्यार्थस्य प्रतिपत्तिस्तद् विसन्धि इत्यतस्तन्मतेऽन्यदसङ्कीर्णमुदाहार्यम्।

---

१. वैयाकरणानामुपहासोऽयम्॥ २. यस्य येन सम्बन्धः स तेन साकं दूरस्थोऽपि सम्बध्यत इत्यादिशास्त्रीयन्यायद्वारेण॥ ३. **वामनस्य**॥

'न सा' इत्यत्र 'सोपान' इत्यत्र च निदर्शनद्वये साधनोन्नतिरिति पेलवं धनमिति सोपानपथमिति च सन्धिवैरूप्यविशेषस्याश्लीलत्वस्येतरत्रैतस्य वाक्याश्लीलत्वस्य च विद्यमानत्वात्।

**वाच्यमहिम्ना** इति। वाच्यमुदाहरणे कस्यचिद् विदुषो नृपतेश्च सदनम्। तत्र च नृपतिसदनं नृपतिसम्बन्धाद् विशालस्वर्णभाजनादिपरमसमृद्धिसम्पन्नमेव प्रतीयते। न तु बालकसम्बन्ध्यार्त्तस्वरपात्रतादिदारिद्र्यातिशयवत्। अत एवातिनिःस्वेन केनचिद्विदुषा स्वसदनसमतापादनव्याजेन नृपतिभवनस्य स्तुतिः कृतेति पर्यवसितोऽर्थः।

**श्रुतेः** इति। सामान्यधर्मा यत्र श्रूयन्ते न तु विशेषाः श्रुतिपथमवतरन्ति तत्रोभयविशेषस्मरणनिबन्धनं विमर्शज्ञानं प्रकृतयोर्द्वयोर्वस्तुनोरेकत्राप्यलब्धप्रतिष्ठमुच्यते, न पुनरुभयालम्बनम्, उभयालम्बनत्वे निर्णयस्वरूपापत्तेः। **अनेन तु ग्रन्थकारेणात्र** श्लोके 'न सम्माति' इत्युभयविशेषस्मरणं संशयनिमित्तत्वेन नोपात्तं, न पुनस्तदनभिमतम्। तस्मिन्नसति संशयायोगात्।

**न लौकिक** इति, **न च यत्र** इति च। प्रथमो हि पक्षो रसभाव-तदाभासालङ्काराणां विषयः। द्वितीयस्तु ससन्देहालङ्कारस्येति। एतच्च ससन्देहालङ्कारे **कल्पलतायां** वितनिष्यते।

**भेद-संसर्गाभ्यां ज्ञानम्** इति। भेदेन ज्ञानमिदं ध्येयम् एतद्गुणमेतत्क्रियमिति। यथाऽयं गौः शुक्लश्चल इति। संसर्गेण ज्ञानमिदं ध्येयमिदमपि ध्येयमिति। यथायं गौरयमपि गौरिति। **तस्मान्निष्क्रान्त** इति प्रत्यक्षमेवैकं तत्र व्याप्रियत इत्यर्थः। तद्धयशेषैर्विशेषावच्छिन्नं परेभ्यो व्यावृत्तं ध्येयमभिन्नासंसृष्टत्वेन गोचरीकरोति। यथा—गोः स्वलक्षणमिति।

**मायेव** इति। ऐन्द्रजालिकविद्येव भद्रा दृष्टेरुच्छेदकारिणीत्यर्थः। **बभूव** इति। एतत् पदं स्वरूपेणोपमानैः सम्बध्येत, विभक्त्यन्तरपरिणामेन वा। तत्राद्ये विकल्पे देवताग्निशिखे न बभूवतुः, सर्वदा वर्त्तमानत्वात्। द्वितीये विकल्पे मायालक्ष्म्यौ तस्य राज्ञो बभूवतुः। नानयोरविरामलक्षणो वर्त्तमानः सम्भवतीति भवनक्रियामात्रमविवक्षितविभक्त्यर्थमुपमानोपमेययोः कल्पनीयमित्ययमपि शास्त्रीयन्यायो न युक्त एवेत्यर्थः।

**सा चेति** इति। धर्मपदानां यथायोगं सम्बन्धलक्षणा भवनक्रियामात्ररूपा च व्याख्येया। **वेणुदारेरिति च** इति। वेणुदारिसम्बन्धित्वेन च तां दुहितरमवगमयन्ति। **वचनाद्** इति वेणुदारिवाचकात्। **क्लिष्टम्** इति। अम्लानविशीर्णपदतया व्यवहितार्थप्रत्ययकारि यदिति। **स्वसम्बन्ध्यन्तरायेण** इति स्वसम्बन्धिव्यवधानेनेत्यर्थः। **भिन्नार्थमपि तद्** इति तदप्यन्यार्थभिन्नं भिन्नार्थं ज्ञेयमित्यर्थः।

---

१. अन्येषु भागेषु ॥ २. विशेषणमुपसर्जनम् ॥ ३. संशयज्ञानम् ॥ ४ तद्धि शेष-ख ॥ ५. आक्षेप-॥ ६. पूर्वमाम्लानानि तदनु विशीर्णानि ॥

**अयमेव न्यक्कारः** इति। अत्र इदमर्थ-न्यक्कारयोरनुवाद्यविधेयभावो विवक्षितः, स च रूपणास्वभाव इति रूप्यस्यानुवाद्यस्येदमर्थस्य प्रागुपादानं न्याय्यम्। पश्चाच्च रूपकस्य विधेयस्य न्यक्कारस्य। विध्यनुवादभावे हि यथाश्रुतपदार्थसम्बन्धनिबन्धनोऽर्थप्रतीतिक्रम इति न तत्रानुवाद्य-विधेययोः पौर्वापर्यविपर्ययः कर्त्तुमुचितः। अन्यथा विवक्षितार्थाप्रतीता-वविमृष्टविधेयांशता दुर्निवारैव। पौर्वापर्यकामचारस्य तु विशेषण-विशेष्यभाव एव विषयः। यत्र[2] स्वसौन्दर्यादेव[3] तयोर[4]न्योन्याक्षेपः। **न वृथात्वविशेषितम्** इति। अयं भावः—अत्र वृथात्वोच्छूनत्वयोर्विशेषण-विशेष्यभावाभ्युपगमेऽपि वृथात्वरूपं विशेषणं प्राधान्यविव-क्षया विधेयधुरामधिरोहदितरेणा[5]नूह्यमानकल्पतया न्यग्भावमिव भजता न वृत्ते[6]र्विषयो भवितुमर्हति। अन्यथा तु तस्य न्यग्भूतत्वेन विधेयधुराऽधिरोहित्वं न स्यात्।

**विवक्षितम्** इति। योऽसौ इति पदद्वयं क्रमेणैवानुवाद्य-विधेययोः प्रत्यायनप्रयोजन-त्वेन वक्तुमिष्टमित्यर्थः। **तच्छब्दस्य** इति—पूर्वस्मिन् वाक्यार्थे यत् प्रक्रान्तं वस्तु तद्विषयस्य, कुत्सितमकुत्सितं वा यत् कर्मादि तद्विषयस्य वाऽर्थसामर्थ्यादेवाक्षिप्यमाणस्येत्यर्थः। 'साधु चन्द्रमसि' इत्यत्र हि प्रक्रान्तवस्तुविषयता, 'आत्मा जानाति यत् पापम्' इत्यादौ तु कल्पिततत्कर्मादिविषयतेति।

**श्रितक्षमा** इति। क्षमा क्षान्तिः, पृथिवी च। अनुरक्तप्रजाः, रुधिरस्थानानि च। शिवं भद्रम्, शिवा च जम्बुकः, विग्रहः कलहो, देहश्च। असुखानि सुखाभावाः, प्राणेन्द्रियाणि च। **जहति** इति त्यजन्ति, विकिरन्ति पातालमध्यमपि प्रकाशयन्तीत्यर्थः। **उचितार्थ-वृत्ती** इति उचितार्थवर्त्तनरूपे इत्यर्थः। **दुड्डी** इति मदनमन्दिरे, **चिंत्कु** [ङ्कु] इति च तदन्तर्वर्तिनि मणौ **कश्मीरेषु** स्मृतिमुत्पादयति। **लण्डा** इति दुश्चर्मणः स्मारकम्। **यस्य** इति द्वितीयस्य पदस्य। **तद्** इति द्वितीयं पदम्। **विसन्धि** इति विगतसन्धि विरुद्धसन्धि चेत्यर्थः। सति हि द्वितीयस्मिन् पदे विसन्धित्वं भवतीति द्वितीयं पदं विसन्धी-त्युक्तम्। आदिपदं विना द्वितीयस्यापि विसन्धित्वं दुर्घटमिति आदिपदमप्यर्थाद् विसन्धीत्यत एवायं वाक्यदोषोऽत्र निर्णीतः।

'स इत्थम्' इति 'भरत आहूत' इति चासन्ध्युदाहरणम्। 'मन्थरया भरत' इति विरुद्धसन्धिनिदर्शनम्। संहितया हि पाठे सति पदभङ्गवशात् सविलासे मैथुने रत इत्यश्लीलार्थप्रतीतेः। **अयुक्तितः** इति अयोगेन पूर्वोत्तरपदयोरमिश्रीभावेन हेतुनेत्यर्थः। यदि वा अयुक्तितश्च पदं दुष्टं भवेदिति चार्थोऽत्र व्याख्येयः, यथा गामश्वमित्यादिवाक्ये।

---

१. विध्यनुवादभावे ॥ २. विशेषणविशेष्यभावे ॥ ३. स्वमाहात्म्यात् ॥ ४ विशेषण-विशेष्ययोः ॥ ५. सह ॥ ६. समासस्य ॥ ७. चित्किवति ख. ॥

अथ कासावयुक्तिर्नाम यतिसन्धिस्थानं पूर्वापरदीर्घस्वरवत्[1]। यथा—

आपन्नस्वपरोपभुक्तविभवा आदाय शुभ्रं यशः
शोभन्ते मलिनार्धजीर्णवसना दौर्गत्यमप्यागताः।
सन्तो न त्वपरे सुवर्णकटकग्रैवेयकाद्युज्ज्वलाः
सत्तामात्रफलैरभङ्ग्युपचितै[2]रायास्यमाना धनैः॥

अत्र द्वाद्यपादे यतिस्थाने दीर्घवत्यसन्धौ वाक् त्रुटितेव[3] लक्ष्यते इत्ययुक्तित एतद्-सन्धिपदं सकृदपि दुष्टम्। **यदिहान्यद्** इति। अत्र स्वरसन्धिकृतेऽपि नाम्नोऽन्यशब्दस्य भेदे यतिभ्रष्टत्वप्रतीतेरश्रव्यत्वम्। **इय णवर** इति। एष केवलं सकारभकाराविति बन्धशैथिल्यादश्रव्यावित्यर्थः। **कन्या** इति कुमारी, अद्य यावदेनं विमुच्य नानया कश्चिदन्यो विहित इत्यर्थः। **यतिभ्रष्टताभाष**—इति। यतिभ्रष्टमेतदिति न कश्चिद् भाषते न चानुभवतीत्यर्थः।

**भ्रमति भ्रमर** इति। अत्रास्थाने गुरुः कृतः। एवमस्थानलघावप्युदाहार्यम्। **विकसितसहकारेत्यादि। धातुनामभागभेदे** इति[4]। यदि धातुनाम्नोर्भाग इति व्याख्या तदा 'एतासां गजति' इत्यदुष्टमेव स्यात्, जकारस्यानच्कतायामसत्कल्पत्वेन सकलस्यापि धातोर्भिद्यमानत्वात्।

'एताभ्यो दास्यति सुमनसां[5] दाम कण्ठेऽवसक्तम्।' इति तु निर्विवादमेवादुष्टं भवेत्।

'कुरङ्गाक्षीणां कुत्र रुचि[र]रुचिरं लुभ्यति जनः।' इति च। अथैतदानुगुण्येन पदापेक्षया धातुनामनी च ते भागौ च ताविति तदा एतासां जागृहीति, कुरङ्गाक्षीणां गण्डेति चापरिहार्यं स्यात्। अथैवमेकतः सन्धीयमानमन्यतस्त्रुटच्चतीत्येकशेषेणोभयमप्याश्रयणीयम्। तदा—

शोभां पुष्यन्ति बत सुतरां सुन्दरीणां विलासाः।
विमिश्रः श्यामान्तेषु मलयसमीरप्रसरणैः।

इत्यादिधातुनामभागातिरिक्तभागभेदे।

कवीनां सूक्तैर्हन्त लसति सुधाक्तं मम मनः।

इत्यादि निपातादिभेदे चादरणीयमेव स्यात्। तस्मात् "तद्धातुनामभाग" इत्यादिसूत्रस्थाने "तत्पदमध्यभेदे" इति वाच्यम्। शोभां पुष्यत्ययमिति, विमिश्रः श्यामान्तेष्वररी[र]ति

---

१. मत्वर्थीयः॥ २. अन्यायोपार्जितैः॥ ३. वा कुटिते च इति मूले॥ ४. धातुनाममेद इति ख.॥ ५. सुमनसा ख.॥

च पदमध्ये नायं भेदः, किं तर्हि पदान्त एव। यणादेशे कृतेऽप्यशब्दाकारस्यान्ते शब्दैकारस्य चान्तत्वात् अगणितव्यञ्जन एव हि स्वरैकशरणोऽयं यत्यादिव्यवहारः। किञ्चिद्भावेत्यत्राप्यलसमिति पदे भिन्नेऽपि न पदमध्यभेदः। दीर्घत्वादेशे हि कृते किञ्चिद्भावेत्याकारान्तस्य पदान्तत्वम्। अलसमित्यस्य तु लकारादेः पदत्वम्। आदेशस्य च क्वचित् पूर्वपदानुगतत्वं, क्वचिदुत्तरपदानुगम इति। किञ्च वदतु यदिहान्यदित्यादौ यतिभ्रष्टत्वसिद्धये "क्वचित् सन्धावपि" इति सूत्रशेषः कार्यः। एवं च ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यत्रापि यतिभ्रष्टत्वं सिद्ध्यति। दीर्घत्वादेशे कृते व्यञ्जनस्याविवक्षायां केशब्दैकारस्यान्तभावेन पदान्तभेदात् यतिभ्रंशाभावः प्राप्तोऽपोद्यते। यतिभ्रष्टत्वप्रतीतेः श्रव्यत्वानापत्तेः।

**वाच्यम्** इति। यतोऽत्रापिशब्दं विना विवक्षितस्यार्थस्य न प्रतिपत्तिः। क्वचित्तु दुष्टस्यार्थस्य प्रतीतिर्भवति। यथा

सम्पदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि।
शारदाभ्रमिव पेलवमायुः किं धनैः परहितानि कुरुध्वम्॥

अत्र हि धनशब्दादनन्तरं यावत् कार्यशब्दो न प्रयुक्तस्तावद्धनैः किमिति परहितानि कुरुध्वं, मा कार्ष्टेति दुष्टोऽर्थः प्रतीयते। एतदुभयरूपमपि न्यूनपदम्। अनभिहितवाच्यमिति **अन्ये**। तर्हि विवक्षितार्थाप्रतिपत्त्यादेरवश्यवक्तव्यमनुक्तं यत्र सोऽनभिहितवाच्यस्य विषयः, यत्र तु वक्तव्यमात्रस्यानभिधानं स न्यूनपदस्येत्यभिसन्धाय उभावप्येतौ दोषौ **विवेके** न[१] प्रदर्शिताविति।

**सेलसुयारुद्ध**—इति। अत्र न ज्ञायते किं प्रमथनाथं नमत उत शैलसुतादिस्त्रीषु सक्तमिति कृत्वा निन्दतेति सन्देहाद्विवक्षितक्रियाया अप्रतीतिः। **तथा** इति स्तुवन्निन्दन्तौ समुच्चीयेते। ननु हर्षेण स्तूयते भयेन च निन्द्यते इति स्तुतिनिन्दाग्रहणमनर्थकम्। नैष नियमोऽन्यथापि दर्शनात्। यथा

तुङ्गात्मताऽस्तशिखरस्य मुधैव भानोर्नालम्बिनी भवति यत् समये प्रपित्सोः।
श्लाघ्यः स तामरसनालगुणोऽपि दैत्य—भीत्यायमेत्य मरुतां पतिराललम्बे॥

**वद वदेति** इति। अत्र हर्षभयाद्भुतशोका यथाक्रमं प्रतीयन्ते। **जय जय** इति। अत्र पूर्वेऽर्द्धे स्तुतिरपरे तु निन्दा। **एवं प्रसिद्धं च** इति। एवं वीप्सातुल्यं न तु वीप्सायां यत् कविलक्ष्येषु प्रसिद्धं तदपि न दोषाय। वीप्सापदं यथा द्विगुणमेवमवीप्सायामपि यत् प्रसिद्धं तदपि न दोषायेत्यर्थः। यथा वारंवारमिति।

---

१. –भिधायोभावेऽप्येतौ विवेके न ग.॥

यथा च

टव टव टव त्ति पडियं वैंासं सोऊण तुंबिवत्तेसु ।
रुण्णं पैहुत्तरणरणयणिब्भरं पहियजायाए ॥

यथा च

ता किं पि किं पि ता कैंह वि कह वि अव्वो निमीलियच्छीहिं ।
कडुओसहं व पिज्जइ अहरो थेरस्स तरुणीहिं ॥

नन्वेकस्मिन्नर्थे यदसकृत् पदं तत्पर्यायो वा प्रयुज्यते तत्पुनरुक्तमुच्यते, न त्वर्थान्तरमभिधातुम्, अतश्च तत्राधिक्यदोषाशङ्कैव नास्तीति किमेतेनापवादेन । तथा वीप्सायां यत् पुनः प्रयुज्यते तस्य वीप्सैव प्रतिपाद्या, न ह्यकृते द्वित्वे सा प्रतीयते ग्रामो रमणीय इति । तथा यत् पदं लोकप्रसिद्धं कलकलरणरणादिकं तत्ताद्दृगेवार्थस्य वाचकम् । अपुनरुक्तं हि विवक्षितार्थानभिधायकमेव स्यादित्येतदप्यनधिकमिति सर्वमेतद्वाक्यमनर्थकमेव ।

अत्राहुः **केचित्** । अयमभिप्रायोऽत्र । कवेरनेकस्मिन्नर्थे प्रतिपाद्येऽनेकार्थमेकमेव पदं प्रयोज्यमिति । दृष्टा ह्यनेकार्थस्य पदस्य सकृत्प्रयुक्तस्यानेकार्थप्रतिपादने शक्तिः ।

यथा

प्रदीप इव निर्वाणे देव दैत्यकुलेऽधुना ।
कृष्णस्य तिमिरस्येव प्रसरः केन वार्यते ॥

अत्र हि निर्वाण इत्यनेन दैत्यकुलं बाणासुररहितं प्रदीपश्च शान्त उच्यते । कृष्णशब्देन च वासुदेवः स्वातन्त्र्येण कार्ष्ण्यगुणयुक्तं च तिमिरं प्रतिपाद्यते । अतश्चान्यत्रापि तस्य तत्पर्यायस्य वा पुनः प्रयोगे पौनरुक्त्यमाशङ्कैतैव । वीप्सायामपि जातिपदार्थपक्षे पौनरुक्त्यं कश्चित् सम्भावयेदेव । जातौ पदार्थे सकृत्प्रयुक्तेनैव शब्देनाशेषपदार्थावगतिर्भवति । यथा गौर्न हन्तव्येति । प्रसिद्धेऽपि पदे यः केवलस्यार्थः स एव क्वचिद् द्विरुक्तस्य दृश्यते ।

यथा

अणुदियससयाभोया जह जह थणया विणेंति बालाण ।
तह तह लद्धावासो व्व वम्महो हिययमाविसइ ॥

मानिनीजनविलोचनपातानुष्णबाष्पकलुषानुपगृह्णन् ।
मन्दमन्दमुदितः प्रययौ खं भीत भीत इव शीतमयूखः ॥

धार्ष्ट्यलङ्घितयथोचितभूमौ निर्दयं विलुलितालकमाल्ये ।
मानिनीरतविधौ कुसुमेषुर्मत्त मत्त इव विभ्रममाप ॥

---

१ वर्षम् ॥ २. तुम्बीपत्रेषु ॥ ३. प्राप्त- ॥ ४. ता वा क-ख ॥

अत्र हि य एवैकेन यथाशब्देन तथाशब्देन मन्दशब्देन भीतशब्देन मत्तशब्देन चार्थः स एव द्वाभ्यामिति प्रकारार्थत्वे द्विःशब्दस्यानर्थक्यं स्यादिति ।

अन्ये त्वाहुः—सत्यमेतद्यथा चोदितम् । किन्तु यः कश्चिन्मन्दबुद्धिः पुनः प्रयोगं पश्यति स बुध्येतानर्थकमेतत् पदं सरूपत्वादिति । तं प्रति नानारूपोऽभिधाव्यापार एव पुनः प्रयोगस्य कथ्यत इति सर्वमेवानवद्यम् ।

**यच्च** इति । यत्पुनर्वस्त्विति सम्बन्धः । वा शब्दोऽपवादप्रकारान्तरसमुच्चयार्थः । **न प्रतिपद्येत** इति अन्यचित्ततयेत्यर्थः । **तत्र** इति वस्तुनि । **किं चिन्तयसि** इति । कश्चिन्मित्रमाह—सखे इदमीदृक् सुन्दरं रम्यं स्त्रैणं स्त्रीसमूहं पश्येति । तेन त्वन्यत्र गतचित्तत्वान्न श्रुतम् । अतः स पुनराह—किं चिन्तयसीत्यादि । तत्र पश्य पश्येति पदं पुनरुक्तम् । नन्वित्यादि तु वाक्यम् । ननुरभिमुखीकरणे ।

**अन्याभिधेयमपि** इति । उक्तात् प्रशंसालक्षणाच्चार्थादन्यदभिधेयं[1] वाच्यं यस्य पदस्य तदन्याभिधेयम् । अपिशब्दादुक्ताभिधेयमपि[2] । अन्यार्थस्य हि प्रकृतार्थानुपयोगादाधिक्यं स्यात् । स्वाभिधेयस्य तु पदान्तरेणैव तदर्थस्योक्तत्वात् पौनरुक्त्यमिति । यथा मुनिशार्दूलः कर्णतालः केशपाशो नृपपुङ्गवश्चूतवृक्षो मलयाचल इति । अत्र शार्दूलादिशब्दानां वृक्षादिशब्दानां च प्रशंसार्थत्वान्नाधिक्यपौनरुक्त्ये इति ।

**मेरुमहीधरस्य** इति । नन्वत्र महीधरशब्दः सामान्याभिधायी मेरुशब्देन विशेषेऽवस्थाप्यत इति विशेषणविशेष्यभावे तत्समासे च सति कीदृशमत्र पौनरुक्त्यं प्रशंसार्थत्वं वा । नैतदस्ति । "संभवे व्यभिचारे च सति विशेषणविशेष्यभावो न्याय्यस्तत्समासो वा" इति । अत्र केशहस्त इत्यत्र च "प्रशंसावचनैश्च" इत्यनेन मयूरव्यंसकादित्वात् "सुप्सुपा" इति वा समासः कार्य इति सर्वमनवद्यम् ।

**ताला** इति तदा । **जाला** इति यदा । **तदिति** इति । अत्र तच्छब्दस्तस्मादर्थे, स च मसृण इति विरचय इति च वाक्यद्वये सम्बद्धः । यत इति चाध्याहृत्य भूरिति घर्म इति च वाक्यद्वये सम्बन्धनीयम् ।

**गुणानां च** इति । अग्न्याधान[3]वैकङ्कत[4]पात्राणां पवमान[5]हविषां च न परस्परेण सम्बन्धः । अग्न्याधानं ह्यग्नेरेव गुणः संस्कारार्थः । पवमानहवींष्यप्यग्नेरेव गुणभूतानि । गुणानां च समत्वमेव प्रधानानुयायित्वादित्येवं रूपो न्यायः "गुणानां च परार्थत्वाद्"

---

१. -लक्षणादर्था- ख. ॥ २. उक्ताभि- ग. ॥ ३. अग्निराधीयते येषु पात्रेषु ॥ ४. वृक्षविशेषः ॥ ५. पवित्र ॥

इत्यादिना सूत्रेण **जैमिनि**ना यः प्रतिपादितस्तदनुसारेणात्र तैरिति विधेयतया प्राधान्येन क्षपाचारिभिरिति यत् प्रत्याययितव्यं तत्परत्वेन यच्छब्दनिर्देश्यानामर्थानामनुवाद्यत्वादेव गुणभूतानां न परस्परं समन्वयः, प्रधानानुयायित्वेन समत्वात्। अतः क्षपाचारिणामिति विशेष्याभिधायिपदोपादाने येषां येषामिति यच्छब्दद्वये सामानाधिकरण्याद्भवति विशेष्यस्य प्रतीतिः। यैरित्यत्र तु सामानाधिकरण्येन यत्क्षपाचारिभिरिति विशेष्याभिधायि पदं तदन्तरेण कथं विशेष्यमवगम्यते। विभक्तिविपरिणामेन वा अध्याहारेण वा। यैः क्षपाचारिभिरिति यत् समन्वयपरिकल्पनं स शास्त्रीयो न्यायः। एष च पञ्चसु काव्यप्रभेदेषु न युक्त इति ह्युक्तचरं तत्र तत्रेति। यदि तु क्षपाचारिणामित्यस्य स्थाने क्षपाचारिभिरिति पठ्येत ततस्त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा प्रधानेन तैः क्षपाचारिभिरित्यनेन प्रतिस्वमञ्जसतयैव सम्बन्धमनुभवेयुः।

**सङ्ग्रामाङ्गण** इति। अत्र द्वितीयपादे येन येनेत्यादि यत् प्रतिपादितं तस्याहत्य समनन्तरमेव[1] दूषणं देयमिति मनसि सम्प्रधार्यात एव च गजनिमीलिकयैव तत्तावदत्रधीर्य प्रथमं दूषणपक्षद्वयमाशङ्कापुरःसरं सामान्येनोद्भावयति अत्रेत्यादिना प्राप्तमित्यन्तेन। तत्राकर्णनक्रियाकर्मत्वं चेत् कोदण्डादीनां पदार्थानां तदा कोदण्डं शरानित्यादि प्राप्तमित्येकं दूषणम्। अथ कोदण्डादिपदार्थसमुदायरूपस्य वाक्यार्थस्य कर्मता तर्हि अश्रूयमाणायां क्रियायाम् "अस्तिर्भवन्तीपरः" इतिन्यायेन प्रयुज्यमानया सन्तीतिक्रिययान्वितस्य वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इत्यादि प्राप्नोतीति द्वितीयम्। उत किमेवमसत्प्रलापरूपैराशङ्कितोत्तरैः[2], येन येनेत्यादिद्वितीयपादे यदुक्तं तदुल्लिखितो वाक्यार्थः कर्मभावेनाभिप्रेत इत्युच्यते। हन्त, दत्तस्तर्हि जलाञ्जलिः शब्दार्थवेदितायाः। न हि यच्छब्दार्थस्तैर्द्विशेषणं[3] वा कोदण्डादिस्तज्ज्ञैर्व्याह्रियते, येन यच्छब्दसमन्वयः कोदण्डादिभिः स्यात्। आहोस्विदन्तरा केन केनेत्यादिप्रश्नमुद्भाव्य समन्वयः करिष्यते। दिष्ट्या वल्गन्तु आयुष्मन्तः। सहृदयाः वयमप्येतदेवोपालभेमहि कुतः केनेत्यादिप्रश्नप्रतिपादकः शब्दोऽत्र नोपात्त इति।

**यस्य प्रविशेद्** इति। यस्य महतो वाक्यस्य सम्बद्धार्थत्वेन गर्भकल्पमल्पं वाक्यमन्तः प्रविशेत्तद्यथार्थं गर्भितम्। का तर्ह्यस्य दोषरूपतेत्याह—**गमयेदित्यादि**। यावत्तद्गर्भवाक्यं पृथक् न कृतं तावद् महावाक्यं निजमर्थं कष्टकल्पनया गमयेदित्यर्थः। **रसान्तर** इति। रसविशेषेण तिरोधीयमानं सद् वाक्यं गर्भितमिष्टमित्यर्थः। गता निशापीति तु युक्तमिति। एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात्।

१. प्रत्यासन्नम्॥ २. दूषणद्वयानन्तरम्॥ ३. यच्छब्दार्थस्य सामान्यम्॥

यथा

ताला जायंति गुणा जाला ते सहिअएहि घेप्पंति ।
रविकिरणाणुग्गहियाइं होंति कमलाइं कमलाइं ॥

यथा च

एमेय जणो तिस्सा देइ कवोलोवमाए ससिबिम्बं ।
परमत्थवियारे उण चंदो चंदो च्चिय वराओ ॥ इति ।

अत्र ह्युत्कर्षापकर्षमात्रविवक्षया परिकल्पितभेदेऽप्येकस्मिन्नर्थे विधेयानुवाद्यविषयेणैकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम् । केवलं पर्यायप्रक्रमभेदनिवृत्तये शशिबिम्बमित्यत्र चंदमिणमिति पाठः परिणमयितव्यः । सुखमीहितुं वेति युक्तमिति । एवं च तुल्यकक्ष्यत्वेन विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतं भवति । यथा च

रुदता कुत एव सा पुनर्भवता नानुमृतेरवाप्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथाः शरीरिणाम् ॥ इति ।

अत्र हि कुत एव तु सानुरोदनादिति युक्तः पाठः । इह तु न दोषः ।

पृथ्वि स्थिरीभव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम् ॥

अत्र हि पृथ्व्यादिविषयः प्रैषलक्षणोऽर्थः कविना वक्तुं प्रक्रान्तः प्रत्ययभेदेऽपि निर्व्यूढः ।

**कम्पमानो**[1] **इति** इति । अत्र तिङन्तस्य प्रक्रमभेदः प्रस्तावादुपदर्शितः । **अनुभवस्मृतिक्रमश्च** इति । अनुभूयमानार्थापेक्षयोदयावस्थत्वेनानुभवः प्रथमभावी अनुभूतार्थविषया च स्मृतिः पश्चाद्भाविनीत्यनयोः क्रम इत्यर्थः । **अनुभवक्रमविवक्षा** इति । प्रथमपक्षोल्लेखोऽयम् ।

**अथाक्रमम्** इति । अत्र पदस्यास्थाननिवेशित्वेऽपि क्रमाभाववैशिष्ट्यं विवक्षितमिति अपदस्थपदादस्य[2] भेदः । तत्र हि काचिन्न विजहाविति वा न विजहौ काचिदिति वा वाच्यम् । केवलं नञ[3] उत्तरवर्त्तिना किं[4]शब्देन योगः परिहार्य इति । लग्नः केलिकचेत्य-

१. **कम्पमाना** इति... अपदस्थपदादस्य भेदः ( पृ २१, पं. १९ ) अयं पाठः ग. पुस्तके " गमयेदित्यर्थः " " रसान्तर " इत्येतयोर्मध्ये ( पृ २०, पं. २५ ) निवेशितः ॥
२. अपदस्थपदस्य क. ॥ ३. नञ् क ॥ ४. किमु ख. ॥

त्रापि मुद्राङ्कस्य लग्नत्वादिधर्मान्तरप्रतिपादनं यत्र तत्रैव कुटिलाताम्रच्छवित्वमपि प्रतिपादयितुं युक्तं नान्यत्रेत्यस्थानपदतैव। विवक्षितधर्मविशिष्टो हि मुद्राङ्कः करपल्लवेनेत्यतः पश्चादप्युच्यमानो न कामपि क्षतिमादधातीति।

**त्वं शब्दाद्** इति। समुच्चयद्योतको हि चकारः समुच्चीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः। एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोगमर्हति। अन्यत्र तु प्रयुज्यमानोऽक्रमदोषं प्रयोजयति। यथा

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः।

अत्र हि पुनः शब्दस्तेनेत्यनन्तरं प्रयोक्तव्य इति।

**श्रीनियोगादिति** इति। तथा चोक्तम्[1]

उक्तिस्वरूपावच्छेद--फलो यत्रेतिरिष्यते।
न तत्र तस्मात् प्राक्किञ्चिदुक्तेरन्यत् पदं वदेत्॥
उपाधिभावात् स्वां शक्तिं स पूर्वत्रादधाति हि।
न च स्वरूपावच्छेदः पदस्यान्यस्य संमतः॥

**शक्तिम्** इति अवच्छेदनसामर्थ्यम्।

इतिनैवेतरेषामप्यव्ययानां गतिः समा।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम्॥
यतस्ते चादय इव श्रूयन्ते[2] यदनन्तरम्।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा॥
अथानन्तर्यनियमस्तेषामर्थौचितीवशात्।
अन्यतस्तर्हि तत्कार्यसिद्धेस्ते स्युरपार्थकाः॥

**अर्थौचितीवशाद्** इति। अन्यत्र पठितानामपि भवेदिति शेषः। **अन्यत** इति अर्थसामर्थ्यात्।

कैश्चिदेव हि केषाञ्चिद्दूरस्थैरपि सङ्गतिः।
न जातु सर्वैः सर्वेषामित्येतदवसीयताम्॥ इति।

**प्रकृते रसे** इति बीभत्से। **विभिन्न**—इति। आदिग्रहणात् कोमलकठोराणि ग्राम्योपनागरनागराणि च गृह्यन्ते। युक्तिशब्दश्चात्र प्रकृतिस्थादिभिः प्रत्येकमभिसम्बध्यते।

---

१. उक्तं च ग॥ २ श्रयन्ते ख॥

तेन प्रकृतिस्थपदयोगः कोमलपदयोगः कठोरपदयोगो वा यत्रेतरव्यामिश्रणेन विभिद्यते विच्छिद्यते, अथवा ग्राम्यपदयोग उपनागरपदयोगो नागरपदयोगश्च यत्रेतरव्यामिश्रणेन विच्छिद्यते तदपदमित्यर्थः। तत्र प्रकृतौ तिष्ठन्तीति प्रकृतिस्थानि। इतरजनप्रसिद्धानि न कोमलानि न च कठोराणीत्यर्थः। कोमलानि मृदूनि कठोराणि परुषाणि ग्राम्याणि अतिप्रसिद्धानि अविदग्धानीत्यर्थः। उपनागराणि नात्यप्रसिद्धानि विदग्धाविदग्धानीत्यर्थः। नागराणि नातिप्रसिद्धानि विदग्धानीत्यर्थः।

**आउज्झिय** इति। अत्र पूर्वार्द्धपदानि पिक्खंतहेति च प्रकृतिस्थानि। लाउलकलणियाहेति कोमलानि। हा कस्स कंदेमीति च कठोराणि। प्रकृतिस्थेषु प्रसिद्धेरुत्कटोऽतिशयः, ग्राम्येषु त्वनुत्कट इति विशेषे स्थितेऽपि प्रसिद्ध्यतिशयमात्रकृतमुभयेषां साम्यम्। तथा किञ्चित्कोमलत्वमुपनागरेषु किञ्चित्कठोरत्वं नागरेष्वस्तीति कोमलोपनागराणां कठोरनागराणां च सादृश्यमस्तीति प्रकृतिस्थादित्वेन निदर्शितानामपि आउज्झियेत्यादिपदानां ग्राम्यादित्वं सुभणमित्यत एवाह—**तदेतत् प्रकृतिस्थे**त्यादि।

**भाषाचित्र** इति। उपलक्षणपरमेतत्। तेन शब्दगुणे प्रौढावश्यनुज्ञेयमित्यर्थः। **हा तो इति** इति जोज्जलदेओ इत्यन्तम्। **नैवेति** इति भूतल इत्यन्तम्। **ता किमिति** इति श्रूयत इत्यन्तम्। अत्र वपुरित्युपनागरं शेषाणि ग्राम्याणि। **पदमिति** इति विवाहोत्सव इत्यन्तम्। अत्र रूपपतिनेति नागरम्। उत्सव इत्युपनागरम्। शेषाणि ग्राम्याणि। **एसें इति** इति वोल्लुपर्यन्तम्। **ग्राम्यादिभिः** इति। आदिशब्दादुपनागराणि गृह्यन्ते। **हस्तेति** इति ईक्ष्यत इत्यन्तम्। अत्र हस्तेति ग्राम्यम्। शेषाण्युपनागराणि। **ग्राम्याणि** इति। आहत[?] कामः किल श्रूयते इत्येतानि। **उपनागराणि** इति। नैवं मदनः साक्षादयं भूतले, उत्सवकटकः किं दर्पणेनेक्ष्यत इत्येतानि।

**शशिलेखेव** इति। अस्मिन्नुपमावाक्यद्वये यदा पूर्वोक्तधवलत्वधर्माभिसम्बन्धस्तदैव दोषोऽयमित्यर्थः। **यस्य** इति। अत्र श्वसन्निति साधारणे धर्मे उपमेयपरत्वेन वाक्यभेदं विनोपमानेन सम्बध्यमाने[1]ऽपि नोद्वेग इति चिन्त्यम्। **कोमलापाटलो** इति। यथात्रेतरेतरयोगेनोपमानोपमेययोरेकशेषेण च तद्विशेषणयोः समुदायेनाभिधानादिवादिना विनाप्युपमात्वं वक्ष्यते तथा प्राज्यप्रभाव इत्यत्र द्योतकलोपेऽपि नेमेरन्येषां चापमा प्रतीयते। **अभिधानम्** इति तन्त्रेणेत्यर्थः। यथा प्राज्यप्रभाव इत्यत्र तुल्यधर्माणाम्।

**यत्र तु** इति। प्रसिद्ध्यनुरोधेनार्थयोः परस्परं प्रतीयमानाभिधीयमानभूयोऽवयवसामान्ययोग उपमेति हि प्रवक्ष्यते। तेन कोमलेत्यत्रोपमैव। सदृशयोरर्थयोस्तन्त्रेणाभिधाना-

१. नैष ख.॥ २. -नो- क ख.॥

भावान्न श्लेष इत्यर्थः। **तत्प्रसिद्धौ** इति तेषां धर्माणां प्रसिद्धौ।

**क्रमेणानेन** इति। अनन्तरपाठादनेनेत्यनेन न्यूनोपमापवादः परामृश्यते। यथा तत्र प्रसिद्धत्वाद्धर्माणामदुष्टत्वं प्रतिपादितं तथानेनैव न्यायेनात्रापि धर्माणामविवक्षातो न दुष्टत्वमित्यर्थः। साधारण्येनोपात्तेनैव धर्मेणोपमाया विवक्षितत्वात्। **विशेषस्तु** इति। विशेषः पुनरयमनुपात्तेंऽशेऽनुमानं वात्र व्याप्रियते इत्यर्थः। **उपमानधर्म**—इति उपमानधर्मोद्घट्टनमेवानुमानम्। **अरीतिमद्** इति रीतयो वैदर्भीप्रमुखा यत्र न सन्ति। क्वचित् कस्यचिद्गुणस्याभावात्। समग्रगुणा हि वैदर्भी। कतिपयगुणा गौडीया पाञ्चाली चेति।

**श्लेषस्य** इति। भिन्नानामपि पदानामेकपदप्रतिभासहेतुरनतिकोमलो बन्धविशेषः श्लेषस्तस्य। **आलि** इति हे आलि सखि। **भवेत् स एव** इति। समताया विपर्ययरूपो यः सन्दर्भः स एव विषमो भवेदित्यर्थः। **अप्रसन्नम्** इति। अर्मीषामुद्देशक्रमपरिहारे कारणं चिन्त्यम्। **अनङ्गक**—इति। अत्र शब्दानामनतिप्रसिद्धार्थत्वादप्रसन्नत्वम्। **विरहे** इति। अत्र उक्तेर्ग्राम्यतया कान्तिहीनत्वम्। **तद्विपर्ययम्** इति ओजःप्रभृतीनां विपर्ययः। **स्मरः खर** इति। अत्रासमस्तपदाभिधानेनार्थस्य सौकुमार्येण च विपर्ययस्योभयप्रधानता। **नखिनां च** इति। अत्र चकारषष्ठ्योरनितिहिंगामयुगर्थत्वेन च विपर्यय उभयप्रधानः। **दीर्घपुच्छः** इति। अत्रापुष्टानुत्कृष्टविशेषणत्वेनानुदारार्थत्वेन च शब्दार्थप्रधानो विपर्ययः।

क्रमेणैवापवादानाह—**श्लिष्टमस्पृष्टेत्यादि। दीप्तमिति** इति चित्तस्य विस्ताररूपदीप्तिजननं दीप्तमोजस्वीत्यर्थः। **मा भवन्तम्** इति। अत्र धार्क्षीदित्यादयोऽतिप्रसिद्धत्वात् प्रतीयन्ते। **कामम्** इति। अत्र ग्राम्यत्वेऽपि ग्राम्यार्थस्य विदग्धोक्त्या तिरस्कृतत्वाद्गुणत्वम्। **समस्तम्** इति समासवत्। **असमस्तम्** इति समासरहितम्। **समस्तरीत्या** इति समस्तायाः समासवत्याः रीतेर्गौडीयायाः। **रीत्यन्तर**—इति रीत्यन्तरस्य वैदर्भीलक्षणस्य।

इति वाक्यदोषाः।

[ अथ अर्थदोषाः ]

**अपुष्टा** इति। यत उपात्ता अपि स्वरूपमात्रप्रतिपादकत्वेन न किञ्चित् साधयन्तीति। **न त्वसङ्गता** इति। अनेनैवंविधानामर्थानामसङ्गतत्वमभिमन्यमानेन **भट्टरुद्रटेन** दोषस्यास्य यत् असम्बद्ध इति नाम विहितं तन्निराकरोति। **प्राप्त** इति अर्थादभिधातुम्। **य** इति अर्थो बहुफेनत्वादिः। **प्रक्रान्तप्रसङ्गाद्** इति प्रक्रान्तो यो जलध्यादिस्तदभिधानप्रसङ्गात्। **बहुफेनत्वम्** इति असम्बद्धमित्यर्थः। जलध्युल्लङ्घनेन यः कीर्त्तेरतिशयः प्रक्रान्तस्तत्रानुपयोगित्वात्। यदि हि बहुफेनत्वं समुद्रस्य दुस्तरत्वे हेतुर्भवेत्तदा तद्विशिष्टस्य तस्योल्लङ्घनं कीर्त्तेरतिशयाय स्यात्। न च बहुभिः फेनैः समुद्रो दुस्तरोऽपि तु स्वभावादेव।

**यो यस्य** इति यस्याग्न्यादेर्यो गुणक्रियादिः। **तद्वान्** इति सोऽव्यभिचारी गुणादिर्विद्यते यत्र स तद्वानिति। **कविरुचीनाम्** इति कवीनां रुचयः प्रतिभारूपाः प्रभाः। **ता गम्भीर**–इति। ताः कविरुचयो गम्भीरकाव्ये सर्गबन्धलक्षणेऽनभिनेये परिचयमागता इतरस्मिन्नभिनेये दशरूपक इव कथं प्रसन्ना भवन्तु। न भवन्त्येवेत्यर्थः। शक्तिमात्रख्यापनफलो हि सर्गबन्धः। तथा चोक्तम्–"यस्तु सरिदद्रिसागरनगतुरगपुरादिवर्णने यत्नः" इत्यादि। एतच्च **कल्पलतायामेव** यमकेषु निदर्शयिष्यते। **विरुद्धार्थम्** इति परस्परं विरुद्धावर्थौ यत्र। विरुद्धलक्षणार्थमाह–**विरुद्धं तूपदिश्यत** इत्यादि। **आतिष्ठ**–इति। आचर उपासितेत्युदाहरणान्तरप्रदर्शनं कल्पितोदाहरणशङ्कानिरासार्थम्। एतदुक्तं भवति। लक्ष्ये शतश इत्थंभूतानि काव्यानि दृश्यन्ते। यथा

इत्येकशः प्रतिदिनं विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः॥

अत्राविरामविवक्षया कालमात्रलक्षणं वर्त्तमानत्वं, न पुनर्नित्यप्रवृत्तकाललक्षणम्। तेन भूतभविष्यद्विवक्षे विरुध्येते इति। गता यास्यन्तीत्येतयोर्यान्तीत्यनेन विरोधः। यत्र नित्यप्रवृत्तकाललक्षणं वर्त्तमानत्वं तत्रेमे न विरुध्येते। यथा ऊढाश्च वहन्ति च वक्ष्यन्ति च महानद्य इति। नैवमुक्ते श्लोके सर्वकालभाविन्या अस्थिकूटवृद्धेरयोगादिति।

यथा च

त्वरितमथ स दैत्यगन्धहस्ती
ललितगतिर्ललनाकरेणुयूथम्।
समद इव विवेश गन्धहस्ती
स्तिमितघनौघनिभं करेणुयूथम्॥

अत्रोपमारूपकयोरेकत्र समावेशविरोधाद्विरोधः। अथ दैत्यगन्धहस्तीत्यादौ नैवं विवक्षितम्। दैत्य एव गन्धहस्ती, ललना एव च करेणवः। किं तर्हि दैत्यो गन्धहस्तीव, ललना करेणव इवेति। एवमप्येकार्थदोषः। सर्वथात्र श्लोके व्यर्थैकार्थदोषयोरन्यतरस्योपनिपातः परिहर्तुं न शक्यत इति।

**सङ्गतमिति** इति। यतस्तस्यासम्बद्धस्य परमतस्याश्लिष्टवचनं सङ्गतं सदृशम् उपमानभूतमतस्तस्यासम्बद्धत्वप्रतिपादनाय तत् कथनम्। असम्बद्धस्य ह्यसम्बद्धमेव सदृशम्।

**किमिदमित्यादि**। असम्बद्धं **परवचनं** क्षिपन् **कश्चिद्** एतद्वाक्यमुक्तवान्। तत्र किमिदमसङ्गतमस्मिन्निति सोपहासमनुवादोऽयम्। अस्मिन् वस्तुनि किमिदमसङ्गतं, न किञ्चिदसङ्गतम्। यादृशं त्वं ब्रवीषि तादृशमेवेति। अयमर्थः। सर्वमसङ्गतमेवेदमिति। कुत इत्याह–**आदावित्यादि**। चो हेतौ। यस्मादादावन्यदुक्तं तथान्तेऽन्यदिति। अत्रैव दृष्टान्तमाह–**यत्नेनेत्यादि**। माषवापे कोद्रवोत्पत्तिर्यादृक् तादृगेवेदमित्यर्थः। परमतस्यासम्बद्धताप्रतिपादनकारणेनार्थस्वभावो यद्यप्यन्यथोपनिबद्ध इव भासते तथापि कोद्रवोत्पत्तिलक्षणोऽर्थः पश्चादुच्यमानस्तद्वक्तृकमेव पूर्वोक्तं माषवापलक्षणमर्थं बाधयेत्। अयमंशोऽत्रोद्भूततर इति बाधयन्निति दोषेऽपवादोऽयमुपदर्शितः।

**मुग्धाया** इति। मुग्धाशब्दस्य मनोहरार्थत्वेऽदुष्टत्वादिदमुदाहार्यम्।

वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव।
तदनु सहसा खिन्नेनेव प्रजापतिना भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली॥

[1]**क्रियाविशेषणत्वेऽपि** इति। मधुरं विशदाक्षरशालि च जगादेति। **न युक्तमुक्तम्** इति। **वापनेने**त्यर्थः। **चरणत्रपरित्राण**–इति। अत्र हि चरणत्रेत्यादिविशेषणं पादयोरेव सङ्गच्छते, न तु व्रजेः, तेन क्रियाविशेषणत्वे विवक्षितार्थप्रतिपत्त्यसिद्धेश्चरणत्रपरित्राणरहितत्वलक्षणस्य विशेषणस्य दानाय व्रजिनैव गतार्थस्यापि पादाभ्यामिति विशेष्यस्य प्रयोगो युक्तः। **तत्तदेव** इति। तदेव तदेवेत्यर्थः। स्थूलत्वेन शब्दपुनरुक्तस्यानुपवर्ण्णनात् सर्वथा परिहारः प्राप्नोति। इष्यते च तत् क्वचिदत आह–**भयशोक–इति**। **जने** इति। स्थितेऽपि सतीति शेषः।

**कविवर्णनम्** इति। "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युटि कविभिर्वर्ण्यते इत्यर्थः। यदि वा कविवर्णनविषय एव कविवर्णनमित्युपचारः। **एकार्थावपि** इति न दुष्टावित्यर्थः। **विदीर्ण**–इति। अत्रारूढत्वावगतेः प्रयोजनं विवक्षितार्थप्रतिपत्तिः। न ह्यसत्यां तदा रूढिप्रतीतौ ज्याकिणचिह्नेन दोष्णा इत्युक्तेऽनवरतदृढाकर्षणाहितकिणमण्डितत्वं दोष्णः प्रतीयेत। वेष्टच्चर्मणि[2]ऽप्यमानया ज्यया कृतकिणचिह्नत्वस्य सम्भवात्। यत्र पुनरेतन्न विवक्षितं तत्रोपादीयते न धनुःशब्दः। शशिधरधनुर्ज्येत्यादौ तु विशेषणस्य चेति वक्ष्यमाणः परिहारः।

**दोलाविलासेषु** इति। अत्र विलासनिर्वाहार्थं प्रतिनियतस्वदेशसन्निहितैराभरणैः प्रयोजनमिति तदर्थं कर्णशब्दप्रयोगः। एवमुत्तरयोरपि वाच्यम्। तत्रापि लीलापदेन लीलावत्त्वस्योक्तेः। अदादिन्द्राय कुण्डले इत्यादौ तदविवक्षायां न कर्णशब्दप्रयोगः।

---

१. रूढ–ख॥ २. भुजे॥

**प्राणेश्वर**–इति। अत्र उत्प्रेक्ष्यमाणस्य स्तनद्वयकर्तृकस्य हासस्य सातिशयधवलताप्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थं मुक्तानामेव हार इत्यवधारणार्थो मुक्ताशब्दः। यत्र पुनरेष विशेषो न विवक्ष्यते न तत्र मुक्तापदमाबध्यते। यथा 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यादौ। अत्रापि प्रपातपानीयसादृश्याय तारत्वपरिवर्तुलत्वादि विवक्षितमिति चेत् तर्हि तत[1] एव तदवगतेर्न मुक्तापदेन किञ्चित् प्रयोजनम्।

**प्रायशः** इति। विदग्धजनमनोविलोभनक्षमकन्यारत्नोपमानभावेन मालाया उपादानादुत्कृष्टपुष्पग्रन्थि[2]मत्त्वावगमाय पुष्पपदप्रयोगः। एतदविवक्षायां तु न प्रयुज्यते। यथा मालाकार इवाराम इति। **त्यज करिकलभ**–इति। करिणीप्रेमानुबन्धक्षमताप्रतिपादनायात्रोपयुज्यते कलभस्य प्रौढकरिरूपारोप इति। तत्प्रतिपादनाय करिपदोपादानम्। यत्र तु नैतद्विवक्षितं न तत्र करिपदप्रयोगः। यथा

सोऽयं गुणः सकल एव **कुमारिल**स्य
ब्रूते विवादपदवीषु यदस्मदादिः।
दिग्दन्तिदन्तदलितासु वनस्थलीषु
लम्बेषु वर्त्मसु सुखं कलभाः प्रयान्ति॥ इति।

**गामउडो** इति ग्रामकूटः। **चित्रहेतौ** इति। कारणस्य शीघ्रकारितां प्रतिपादयितुं कार्यस्य पूर्वमुक्तेराश्चर्यहेतुर्यत् काव्यं तत्रेत्यर्थः। यदि वा चित्रणम् इति चित्र्यतेऽनेनेति वा चित्रशब्देनालङ्कारः प्रतिपाद्यते। स चात्रातिशयोक्त्यादिस्तल्लक्षणे हेतौ सतीत्यर्थः। **स्वपिति** इति निद्राति। **स्वपिमि** इति कामये। **व्यवहार** इति व्यवहारश्चेष्टा। आकारः स्वाभाविकं रूपम्। कृत्रिमं तु वेषः। वचनं भाषणम्। किंविषयाणां व्यवहारादीनामित्याह–**देश**–इत्यादि। देशो मध्यदेशादिरार्यानार्यादिभेदभिन्नः। कुलं गोत्रं भरतादिकं स्वप्रभवाणां व्यपदेशहेतुः। देवदैत्यादिकमिति तु **अन्ये**। जातिः स्त्रीपुंसादिका ब्राह्मणत्वादिका वा। विद्या शास्त्रज्ञत्वम्। वित्तं धनम्। वयः शैशवादिकम्। स्थानं पदमधिकारः। पात्राण्युत्तममध्यमादीनि भरतादिनिरूपितानि।

**व्यवहाराकारवेषवचनानाम्** इति देशादिभिः प्रत्येकमभिसम्बध्यते। तेन देशे व्यवहारस्य वा आकारस्य वा वेषस्य वा वचनस्य वा अनौचित्यं ग्राम्यतेत्ययमर्थो जायते। एवं कुलादौ योज्यम्। तत्र **कन्यकुब्जा**यार्यदेशे दारुणो व्यवहारः भयङ्कर आकार उद्धतो वेषः परुषं वचनमनुचितम्। म्लेच्छेषु त्वेतदेवोचितम्। तथा ग्रामीणेषु यदुचितं

१. हारशब्दात्॥ २. ग्रथि–ख. ग.॥

तदेव नागरेषु ग्राम्यम्। एवं कुलजेषु परिभवसहत्वादिको व्यवहारः असौम्य आकारः विकृतो वेषः वितथं वचनमनुचितानि। देवेषु च ये व्यवहारास्ते दैत्यादिष्वनुचिताः। पुरुषेषु सूदवर्जमन्नपाकादिर्व्यवहारः स्थूलस्तनं श्मश्रुरहितं च रूपं रक्तं वासः काञ्च्यादिकं चाभरणं वेषः सलीलमविस्पष्टं च वचनमनुचितम्। स्त्रीषु त्वेतदेवोचितम्। छान्दसेषु द्यूतमेव व्यवहारः सुकुमारं रूपं सरागं परिधानं वेषः सललितं वचनमनुचितम्। पण्डितेष्वशास्त्रको व्यवहारः सव्याधि वपुर्माल्यादिधारणं वेषः असंस्कृतं वचनमनुचितानि। मूर्खेषु तान्येवोचितानि। ईश्वरेषु दानोपभोगवर्जितो व्यवहारः दुःस्पर्शं रूपं मलिनवस्त्रादिको वेषो दीनं वचनमनुचितानि। द्रमकेषु तान्येवोचितानि। वृद्धेषु विषयसेवा व्यवहारः इन्द्रियपाटवं रूपं कुण्डलादिधारणं वेषः सललितं वचनमनुचितानि। तरुणेषु तूचितान्येव। राज्ञां सक्रोधलोभादिको व्यवहारो निर्लक्षणं रूपं कुण्डलादिरहितो वेषः परुषं दीनं वचनमनुचितम्। एवं पात्रेषु **भीमसेनस्य** यानि व्यवहाराकारवेषवचनानि उचितानि तान्येव **युधिष्ठिरे** ग्राम्याणि।

अत्रैव दिक्प्रदर्शनार्थमाह— **प्रागल्भ्यम्** इति। कन्याशब्देनात्र नवोढा लक्ष्यते। तासां वैयात्यमनुचितम्। यत्र हि प्रेमान्योन्यं वृद्धं तत्रैतदुचितम्। यास्तु नवोढास्तासां नायकस्योपरि न विश्वासो भवतीति लज्जैव तासां भूषणम्। तद्यथा

व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः।

वेश्यानां पण्यस्त्रीणामकृत्रिमं मौग्ध्यमनुचितम्। इयं हि तासां चेष्टा।

उपचरिताप्यतिमात्रं प्रकटवधूः क्षीणसंपदः पुंसः।
पातयति दृशं व्रजतः स्पृहया परिधानमात्रेऽपि॥

यत्तु धनाद्याकर्षणार्थं सव्याजमधाष्टर्च्यं तदुचितमेव। ग्रामेयकाणां वैदग्ध्यमनुचितम्। अयं हि तेषां व्यवहारः।

ग्राम्याः स्मः शिक्षिता वप्तुं गोधूमं चणकं यवान्।
शालिं षष्टिकमिक्षुं च विद्याऽस्माकं कुतोऽपरा॥

कुलजानां धूर्त्ततानुचिता। इदं हि तेषां स्वरूपम्।

अयं बन्धुः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

एवमन्यदपि विज्ञेयम्। तदाह—**इत्यादीत्यादि**। इतिरेवमर्थे। आदिशब्दः प्रकारे। **एतद्विज्ञाय इति**। एतच्छब्देनानुचितत्वं निर्दिश्यते। **महीयोयत्न**ग्रहणे अस्य दोषस्य दुर्लक्षत्वसूचनार्थं। महाकवीनामतिदुर्लक्षोऽयं दोषस्तदेतत्परिहारे महान् प्रयत्नः कर्त्तव्य इत्यर्थः। तद्यथा

परिभ्रमन्मूर्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः।
मुखैश्चलत्कुण्डलरश्मिरञ्जितै-
र्नवातपामृष्टसरोजचारुभिः॥ इति।

गोपीनां हि ग्राम्यत्वात् कनककुण्डलान्यनुचितानि।

**तथात्वे** इति। स्थलत्वलक्षणे विशिष्टेऽर्थे हेतुभावमर्थो यातीति सम्बन्धः। **युक्त्या बाध्यते** इति। धूलेर्बहलत्वलक्षणोऽर्थः स्थलत्वे हेतुतां यात्येव। किन्तु स्थलस्य गगने निराधारत्वादवस्थानमसंभाव्यमेवेत्यनयोत्तरकालभाविन्या बलवत्या युक्त्या स्थलोपजननं बाध्यते। स्थलोपजननकार्यबाधायां च हेतुरेव बाध्यत इत्यर्थः।

**कथं दौत्यम्** इति। सन्देशविशेषप्रापणार्थं हि दूतसम्प्रेषणम्। न चैते सन्देशविशेषान्प्रतिपादयितुमलम्। **यदि चोत्कण्ठया** इति। उत्कण्ठावानुन्मत्त इव यदि मेघादीन् दूतीकुर्यान्न तदा कश्चिद्दोषः। यदि पुनरनित्यदोषत्वमस्य नेष्यते तदा लक्ष्यव्याघात इति दर्शयति—**भूम्नेदं सुमेधोभिः प्रयुज्यत** इति। **स्वभावाद्** इति। ल्यब्लोपे पञ्चमीयम्। स्वभावमाश्रित्येत्यर्थः। ततश्च देशवस्तुस्वाभाव्यान्यथावर्णनेऽयं दोष इत्युक्तं भवति। **षोढेह भिद्यत** इति। युगसंवत्सरादीनामुपलक्षणपरमेतत्। ऋतुविशेष इव युगविशेषे हि भावानामन्यथाभावाः प्रादुर्भवन्ति। यथा पुरुषादीनामायुःसंख्याभेदादयः। संवत्सरेऽपि कचित् किञ्चित् निमित्तादि नियतं भवत्येवेति।

**स च तद्व्यवहारोऽत्र** इति। व्यवहारशून्येन निश्चेष्टेन लोकेन व्यवहाराभावात् लोकव्यवहार एवात्र लोकशब्देन विवक्षित इत्यर्थः। **निमित्तम्** इति अश्वप्राचुर्यलक्षणम्।

"निमित्ततो यत्तु वचो लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं ताम्"

इति हि वक्ष्यते। **सर्वः** इति। सर्वोऽर्थो द्रव्यगुणक्रियाजातिलक्षणः। **देश**—इति। अयमर्थोऽस्मिन् देशेऽस्मिंश्च काले भवति न देशान्तरे न कालान्तर इति। **तम्** इति अर्थम्।

---

१. ष्टे ग.॥

**अन्यथा न बध्नीयाद्** इति। किन्तु ये नित्या भावास्तत्र वर्तमानेन निर्देशो[1] न्याय्यः। यथा

अस्ति स्वकर्मनिरतप्रकटप्रमोद-
नित्याकुलाखिलजना भुवि पूरयोध्या। इति।

अतीतानां भूतेन यथा

श्रीमानभूद् भूपतिरर्जुनाख्यः इति।

अनागतेषु भविष्यत्कालेन यथा

भविष्यत्यपरः कश्चित् तस्मिन् गिरिकुटुम्बके।
हिमवानिव बन्धात्मा जाह्नवी यस्य निर्झरः॥

एवं चराचरसचेतनाचेतनादिषु बोद्धव्यम्। देशकालनियमो[2] यथा हिमस्य। तद्धिमवत्येव भवति। तत्रापि न सर्वदा सर्वत्र। कश्मीरेषु च पद्मानि वर्षासु जायन्तेऽन्यत्र तु वसन्ते शरदि च। एवमन्यदपि।

**निष्कारण**ग्रहणं कारणसद्भावे सत्यन्यथाबन्धस्यादुष्टत्वख्यापनार्थम्। यथा

तीव्रातपाहतवपुर्विशति द्विजिह्वः
पत्रान्धकारगहनं शिखिनः कलापम्।
सिंहाङ्गना मृगवधूमवधूय शङ्का-
मङ्कागतां रसनया प्रणयेन लेढि॥

तत्र हि सिद्धसन्निधानं कारणं विद्यते। अवाप्ताष्टगुणैश्वर्यसन्निधाने हि निरस्तशाश्वतिकविरोधाः प्राणिनो भवन्ति। तथा चाह—"तत्सन्निधौ वैरत्यागः" इति। यथा च **हनूमति** सागरतरण**मर्जुने** च स्वर्गपातालगमनम्। **मारुतेर्हि** या शक्तिर्देवपुत्रत्वं तत्र कारणम्। **विजये** तु देवमैत्री। शुकसारिकादीनां व्यक्तवाक्त्वे पुरुषप्रयत्नः।

अथ कुतोऽन्यथाभिधानप्रसङ्ग इत्याह—**अतिरसाद्** इति। अतिरसहृतहृदयानां हि प्रायशो लङ्घनं दृश्यते। तथा चोक्तम्

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न चार्थस्य।
रसिकत्वेनाकुलिता वेश्यापतयश्च कवयश्च॥

**तत्र विरहे** इति। अत्राश्रुलक्षणोऽर्थोऽतिशयेन मात्रां त्यक्तवान्। परा ह्यश्रुणो भूयस्ता वस्त्रार्द्रीकरणं न तु प्रलयजलवज्जगत्प्लावनम्। यथा च

१. श्यो ग.॥ २. मेन ग.॥

विरमत घनाः किं वो वृष्ट्या मुधैव विसृष्टया
व्रजत ककुभं कामप्यन्यां मनोरुचितामितः ।
न तदिह वनं नासौ मार्गो न तच्च शिलातलं
विरहगलितैर्यत्रार्यस्य प्लुतं नयनाम्बुभिः ॥

**अमूर्त्तमपि** इति । यशःप्रभृतीनामर्थानां स्वभावान्यथोपनिबन्धे कविप्रसिद्धिः कारणम् । **अभिधेयस्य** इति । अर्थस्य यदा तथ्यमन्यथात्वं तदनुपपन्नमपि उन्मादादिभिः कारणैरतिशयेनोपपन्नमित्यर्थः । उन्मादो निरुत्कण्ठमुन्मत्तत्वम् । यथा

नभःखण्डं जलं शुष्कं गजगर्जितमिश्रितम् ।
भुक्त्वैतत् पीयतां काष्टं ततः स्वस्थो भविष्यति ॥

मौर्ख्यं जाड्यम् । यथा

पाण्डित्यमहो कीदृग् वाल्मीकेर्येन भारतं विहितम् ।
भीमस्य च कीदृग् बलमिन्द्रजिदपि मारितो येन ॥

उत्कण्ठा प्रियजनं प्रत्यौत्सुक्यम् । यथा मेघदूतकाव्यम् । **सेउल्लियं** इति । स्वेदार्द्रितम् । **देशोद्रीति** इति । **चराचराणाम्** इति च । आद्यस्योत्तरार्द्धं द्वितीयस्य च चतुर्थपादो विद्याविरुद्धे व्याख्यास्यते । **युक्तिविरुद्धत्वेऽपि** इति । गुणेभ्यस्ते इत्यादेरर्थस्य युक्तिविरुद्धत्वप्रतीतये ससङ्कोचश्चन्द्रादिवेत्यादीनां त्रयाणामर्थानां युक्तिविरुद्धत्वेऽपि विदग्धोक्त्योपमानत्वेन प्रतिपादनाद् गुणत्वम् । तत्र इति । "गुणविपर्ययात्मानो हि दोषाः" इति कान्तिगुणस्वरूपे उपदर्शिते । तद्विपर्ययात्मनोऽतिमात्रस्य स्वरूपं सम्यग् विज्ञायत इति धर्मिद्वारेण कान्तिगुणमेवादावभिधत्ते—**वार्त्ताभिधानेषु** इति सद्भूतवस्तुस्वरूपमात्रोक्तिषु । **वर्णनासु** इति असद्भूतमात्रवस्तुस्वरूपकीर्त्तनासु ।

**कान्तम्** इति कान्तिगुणयुक्तम् । काव्यं कर्तृ । कान्तमेव व्याचष्टे— **जगतीत्यादि** । **लौकिक** इति अनतिमात्रमित्यर्थः । **तद्** इति कविप्रतिभामात्रनिर्माणरूपमतिमात्रमित्यर्थः । **अत्युक्तिरिति** इति अतिशयोक्तिबुद्ध्या । **देवधिष्ण्यमिव** इति । अत्र कस्यचिन्मुनेः सद्भूतस्वरूपमात्रोक्तावपि देवधिष्ण्यमिवेत्येवंरूपं[1] कविप्रतिभामात्रनिर्माणोऽत एवाध्यारोपित इवेति प्रचुरलोकागोचरोऽप्यर्थः कान्तोऽयमिति विदग्धजनेनाभ्यनुज्ञातत्वादतिशयोक्त्योपवर्णितः । **अल्पं निर्मितम्** इति । अत्रापि स्तनजृम्भणस्यासद्भूतमात्रस्वरूपवर्णनेऽपि गगनाल्पत्वनिर्माणादिरर्थोऽत्यन्तमसद्भूतोऽप्युपवर्णितः । **अनतिमात्रं कीदृग्** इति । अनतिमात्रापरपर्यायं कान्तं यत् पूर्वमुपवर्णितं तस्योदाहरणप्रदर्शनाय प्रश्नोऽयम् ।

---

१. रूपः, ख, ग. ॥

**अहिंसा** इति[1]। अहिंसा प्राणिपीडानिवृत्तिः। सत्यं भूतहितं वाक्यम्। अस्तेयमचौर्यम्। ब्रह्मचर्यं कामनिवृत्तिः। अपरिग्रहो द्रव्याद्यस्वीकरणम्। शौचं वाक्कायमनोमलप्रक्षालनम्। सन्तोषो यथाप्राप्तेन स्थितिः। तपः उपवासादिः। स्वाध्यायः प्रणवादिजपः। ईश्वरप्रणिधानं तद्भक्तिः। यस्मिन् सति स्थैर्येण सुखेन च स्थीयते तत् स्वस्तिकाद्यासनम्। तस्मिन्नासने सति श्वासस्य प्रश्वासस्य च वायुविशेषस्य यो निरोधः स प्राणायामः। स्वविषयः शब्दादिः, तेन असम्बन्धे सति श्रोत्रादीनां चित्तस्य स्वरूपानुकार इव अन्तर्मुखाकारत्वाद् यद्विषयेभ्यः प्रत्याहरणं स प्रत्याहारः। देशे ध्येये चलतश्चित्तस्य यो बन्धः सा धारणा। तत्र प्रत्ययो विज्ञानम्। तस्य एकतानता एकत्रैवार्थे निश्चलता सैव ध्यानमुच्यते। तदेव ध्यानमर्थमात्राकारं स्वरूपेण शून्यमिव, तदाकारपरिणतत्वात् समाधेः। सत्त्वप्रधाना बुद्धिः। सत्त्वं पुरुषः। आत्माह्लाद इन्द्रियसमाधिसुखम्। एकरूपात्मिका अर्थमात्रा संवित्, अभेददर्शनमित्यर्थः। विरामो वैराग्यं परमित्यर्थः। तदात्मको यः प्रत्ययः तस्याभ्यासः परा कोटिः तत्पूर्वस्तत्कारणकः संस्कारमात्रं ध्येयशून्यं यत् सोऽन्योऽसंप्रज्ञातो निर्बीजः समाधिरित्यर्थः। सर्वाः क्लिष्टाक्लिष्टाः क्लेशहेतुभूताः संसारिणां विपरीताश्च योगिनां याः प्रमाणविपर्ययविकल्पनिद्रास्मृतयो वृत्तयः तासां प्रत्यस्तमये विरामे निमित्तभूते इत्यर्थः। प्रमाणं प्रत्यक्षादि। विपर्ययो मिथ्याज्ञानम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। अभावप्रत्ययावलम्बना वृत्तिर्निद्रा। अनुभूतविषयासम्प्रमोषः स्मृतिः। वैराग्यं द्विविधम्। परमपरं च।[2]

**नृत्तनाटच**—इति। पाठ्यरहितं करणाङ्गहारादिनिर्वर्त्यं ताण्डवादि नृत्तम्। पाठ्यपूर्वीकारेण ध्रुवा-गीत्यादियुक्तं करणाङ्गहारादिसाध्यं नाटकादि दशरूपकं नाटचमिति संक्षेपेण ज्ञेयम्। **ग्रामरागविशेष** इति। द्वौ हि ग्रामौ। तथा चाह

"स्वराः षड्जादयः सप्त ग्रामौ द्वौ षड्जमध्यमौ।
केचिद् गान्धारमप्याहुः स तु नेहोपलभ्यते॥"

एवं च सति मध्यमग्रामस्य षड्जग्रामाद् ग्रामविशेषत्वमुपपन्नम्। रागत्वं च रञ्जकत्वसाम्यात्।

**आघट्टनया** इति आहननेनेत्यर्थः। **नभस्वतः** इति। हेतौ पञ्चमी। कृद्योगे कर्त्तरि वा षष्ठी। **ग्रामविशेषमूर्च्छनाम्** इति। मूर्च्छनानां किल द्वैविध्यमेव स्थितम्। तथा हि। षड्जग्राममूर्च्छनात्वेन सप्त। मध्यमग्राममूर्च्छनात्वेन च सप्त। तथा चाह

१–२. इत आरभ्य 'वैराग्यं द्विविधं परमपरं च' इत्यन्तः पाठः ख. ग पुस्तकयोर्नास्ति॥

"उत्तरमन्द्रा रजनी तृतीया तूत्तरायता ।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरी कृता ॥
अश्वक्रान्ता तु षष्ठी स्यात् सप्तमी चाभिरुद्गता ।
स्वरक्रमकृता विद्यात् सप्तैताः षड्जमूर्च्छनाः ॥
सौवीरी मध्यमग्रामे हा[हृ]रिणाश्वा तथैव च ।
स्यात् कलोपनता चैव चतुर्थी शुद्धमध्यमा ॥
मार्गी च पौरवी चैव हृष्यका च यथाक्रमम् ॥" इति ।

**न संभवति** इति दृष्टोपनिबद्धत्वादिति भावः । **वैचित्र्येण** इति आनुलोम्यादिना । **श्रुतिसमधिकम्** इति । श्रुत्या समधिकं पञ्चश्रुतिकमित्यर्थः । **पीडयन्तः** इति श्रुतिह्रासेनाल्पीकुर्वन्त इत्यर्थः । **भिन्नकीकृत्य षड्जम्** इति भिन्नषड्जं कृत्वेत्यर्थः । प्रातःकाले भिन्नषड्जो गेय इत्याम्नायादेवमुक्तम् । **परिणतिम्** इति अवसानमित्यर्थः । **धांश** इति धैवतांश इत्यर्थः । **षड्जोदीच्यवतीजाते:** इति । जातयो ह्यष्टादश । तथाहि **मुनिः**

"षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी ।
षड्जोदीच्यवती चैव तथा स्यात् षड्जकैशिकी ।
स्यात् षड्जमध्यमा चैव षड्जग्रामसमाश्रयाः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥
गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
कार्मा रवी[कर्मारवी]च विज्ञेया तथान्ध्री कैशिकी मता ॥"

इत्येतासां मध्ये या षड्जोदीच्यवतीजातिस्तस्याः सकाशादित्यर्थः ।

**अन्यासु** इति नृत्तनाट्यादिकासु । तत्र नृत्तकलाविरुद्धं यथा—रङ्गद्वारे विष्णुव्यतिरेकिणो देवतान्तरस्य स्तुतिनिबन्धनं, चार्यामुमातिरिक्तस्य, महाचार्यां पशुपतिव्यतिरेकिणः । आसां च रङ्गद्वारचारीमहाचारीणां लोके पुष्पाञ्जलिलास्यताण्डवशब्दैः ख्यातिः । किं पुनः कारणमुक्तव्यतिरिक्तदेवतान्तरस्तुतौ रङ्गद्वारादिषु कलाविरुद्धं काव्यं भवति । उच्यते—यतो **भरतमुनेरियं** व्यवस्था ।

"रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ।
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ॥

१. रचनम् ॥

महाचार्यां प्रयुक्तायां तुष्टो भूतपतिर्भवेत् ।"

न च नाम अन्यदेवतास्तुतौ स्तुतादन्यस्य परितोषः कल्पयितुं युक्तः । लोकानुसारव्याघातात् । मुख्यस्तावदेष पक्षः । लोके यस्य स्तुतिस्तस्य प्रीतिरिति । तस्माद्विष्णुगौरीमहेश्वराणामेव रङ्गद्वारचारीमहाचारीषु स्तुतय उपनिबन्धनीयाः ।

अन्यथाकरणे कलाविरोधो यथा

जाह्नव्यां धृतमत्सरं गुरुघृणामन्दं कपालोदरे
सत्रासाकुलितं भुजङ्गमपतौ चन्द्रे प्रसादोल्लसत् ।
शुश्रूषार्थमुपेतया पशुपतेरावर्ज्यमानैः शनै-
र्गौर्याऽनेकरसाश्रयोऽस्तु भवतां भद्राय पुष्पाञ्जलिः ॥

अत्र पुष्पाञ्जलौ **भरत**विरुद्धो महेश्वरः स्तुत्यत्वेनोपात्तः ।

युक्तं मानदमामनन्यमनसं वक्षःस्थलस्थायिनीं
भक्तामप्यवधूय कर्त्तुमधुना कान्तासहस्रं तव ।
इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव दृष्ट्वा तनुं
निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलक्षस्मितम् ॥

**कर्त्तुम्** इति काकुभणितिरियम् । करोतिरत्र स्वीकारे वर्त्तते । दण्डं करोति इत्यादिवत् । न त्वभूतप्रादुर्भावे, विरोधात् । अत्र लक्ष्मीस्तुतिर्**भरत**मतेन विरुद्धा ।

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरैः
भ्रूभङ्गोत्कम्पजृम्भास्मितललितकृता दिव्यनारीजनेन ।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन
ध्यायन् बोधेरवाप्तावचलित इति वः पातु दृष्टो मुनीन्द्रः ॥

अत्र महाचार्यां बुद्धः स्तुतो **भरतेन** विरुध्यते ।

ननु चैतेष्वाङ्गिकाद्यभिनयोपेतत्वान्नाटयत्वं, न तु नृत्तत्वम् । नृत्तस्योद्वेष्टितादिकरणचतुष्टयसमाश्रयस्य ललितोद्धतकरणाङ्गहारभेदेन द्विविधत्वेनावस्थितत्वात् । तस्य चाभिनयात्मके नाटये संस्कारहेतुत्वेनात्र प्रवृत्तत्वात् । संस्कारकाः खलु पदार्थाः संस्कार्यपरतन्त्राः । अतो नृत्तसंस्कार्यं यदत्र नाटयमभिनेयात्मकं तद्विरोधेन कलाविरोधोऽभिधातव्यो न तु नृत्तकलाविरोधेन ।

उच्यते—अत्राङ्गिकाद्यभिनेयोपेतत्वेऽप्याशीःपरत्वेन रामवद्वर्तितव्यं न रावणवदिति

---

१. व्यवहार ॥ २. कपोलो–ग. ॥ ३. दीयमानः ॥ ४. नृत्तत्व–ग ॥ ५. –नया–ग. ॥

हितोपदेशाभावान्नाभिनयप्रपञ्चो नाट्यम्। अयमभिप्रायः। नाभिनयादिप्रयोगमात्रेण नाट्यत्वं, रसात्मकत्वान्नाट्यस्य। रसाश्च चतुर्वर्गतदितरप्राप्तिपरिहारोपायभूतचित्तवृत्त्यनुकारात्मकाः। एतेषु च पुष्पाञ्जलिलास्यताण्डवेष्वाशीर्वादपरत्वाच्चतुर्वर्गतदितरप्राप्तिपरिहारोपायनिष्ठरसास्वादजननद्वारकं सामाजिकजनमनोनिष्ठं हितोपदेशहेतुत्वं नास्तीति न नाट्यरूपता। अपि तु नाट्यतुल्यवृत्तान्तत्वमिति नृत्तकलाविरोधः।

अथैवमुच्यते— भाविनो नाट्यस्यैतानि पुष्पाञ्जल्यादीन्यङ्गानि। अङ्गानां च प्रधानोपकारितया प्रधानतिरस्कृतत्वेनावभासमानत्वात्तद्व्यपदेश एव न्याय्यः। न खलु राजानुयायिनो भृत्याः स्वरूपेण व्यपदिश्यन्ते, देवदत्तो याति यज्ञदत्तो यातीति, किन्तु राजा यातीति। एवमिहापि पुष्पाञ्जल्यादीनां नाट्याङ्गानां न नाट्यतुल्यवृत्तान्तत्वनिबन्धनो नृत्तरूपतया व्यपदेशो न्याय्यः। अपि तु नाट्यव्यपदेश एव युक्तः। तर्ह्यङ्गस्यालब्धनिजरूपस्याङ्गिनं प्रत्यनुपकारकत्वात् स्वरूपापेक्षयात्र नृत्तत्वं, प्रधानापेक्षया तु नाट्यत्वमित्युभयमप्यत्र वक्तुं शक्यं, नृत्तकलाविरोधो नाट्यकलाविरोधश्चेति। अतो भवन्त्येतानि नृत्तकलाविरोधस्याप्युदाहरणानीत्यत्रोपदर्शितानि। रङ्गद्वारादीनि तु पूर्वरङ्गस्याङ्गानि।

तथा चाह **मुनिः**

“अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना॥
सङ्घोटना ततः कार्या मार्गासारितमेव च।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च॥
एतानि तु बहिर्गीतान्यन्तर्जवनिकागतैः।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि तु॥
ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत्।
विघाट्य वै जवनिकां नृत्तपाठ्यकृतानि तु॥
गीतानां म(मु)द्रकादीनां योज्यमेकं तु गीतकम्।
वर्द्धमानमथापीह ताण्डवं यत्र युज्यते॥

१. अवनद्धं पुष्करमिति यावत्॥ २. भावे॥ ३. मध्ये॥ ४. प्रयोज्यमित्यर्थः॥ ५. वर्द्धमाने॥

ततश्चोत्थापनं कार्यं परिवर्त्तनमेव च ।
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिगतं(त्रिकं) प्ररोचना च(चा)[पि] पूर्वरङ्गे भवन्ति हि ॥"

**अस्य** इति पूर्वरङ्गस्य । **एतानि तु** इत्यादि । प्रत्याहारादीनि आसारितान्तानि नव अन्तर्जवनिकं प्रयोज्यानि । **ततः सर्वैस्तु** इति । ततोऽनन्तरं गीतकादीनि प्ररोचनान्तानि दश जवनिकाया बहिः प्रयोज्यानीत्यर्थः । **मद्रकादीनाम्** इति । मद्रकोल्लोप्यकापरान्तकप्रकर्युवेणकरोविन्दकोत्तराणाम् । **वर्द्धमानम्** इति । वर्द्धमानं तालरूप[1]विशेषः । **अथापि** इति अथवेत्यर्थः । तेन गीतानामन्यतमं वर्द्धमानं वेति[2] । **ताण्डवम्** इति ताण्डवाख्यं नृत्तम् । **यत्र** इति वर्द्धमाने । **पूर्वरङ्गे** इति । गीततालवाद्यनृत्तपाठ्यं व्यस्तसमस्ततया पूर्वमेव प्रयुज्यते । यत्र रङ्गे मण्डपे नाट्ये वा बुद्धिस्थे भविष्यति स पूर्वरङ्गः ।

एतेषामेव क्रमशो लक्षणान्याह

"कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ।
तथावतरणं प्रोक्तं गायिकानां निवेशनम् ॥
परिगीतक्रियारम्भः आरम्भ इति कीर्त्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः ॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ।
तन्त्र्योजःकरणार्थं च भवेच्च परिघट्टना ॥
तथा पाणिविभागार्थं भवेत् सङ्घोटनाविधिः ।
तन्त्रीभाण्डसमायोगान्मार्गासारितमिष्यते ॥
कला[3](काल)पातविभागार्थं भवेदासारितक्रिया ।"

नेपथ्यगृहद्वारयोर्मध्ये पूर्वाभिमुखो मार्दङ्गिकः । तस्य पाणविकदार्दरिकं वामतः । रङ्गपीठस्य दक्षिणत उत्तराभिमुखो गायनः । तस्याग्रे उत्तरतो दक्षिणाभिमुखस्थितयो गायन्यः । अस्य वामे वैणिकोऽन्यत्र वंशवादकाविति । एवं कुतपस्य कुतं पातीति कुं तपतीति च शब्दविशेषपालकस्य नाट्यभूमिकोज्ज्वलताधायिनश्च वर्गस्य यो विचित्रो न्यासः स विप्रकीर्णानामेकत्र ढौकनात्मा प्रत्याहारः । यद्यपि कुतपविन्यासमध्य एव गायनस्याभिमुख्यो रङ्गपीठस्योत्तरतो गायन्य इति गायिकानां विन्यासस्तथापि त्ववतरणं नाम पृथगङ्गमुक्तम् । अङ्गनागीतस्यावश्यंभावित्वं रञ्जकवर्गे ख्यापयितुम् । यदुक्तम्

१. स्वरूप- ॥ २. चेति ग. ॥ ३. पञ्चनिमेषात्मिका कला ॥

"यद्यपि पुरुषो गायति गीतविधानं तु लक्षणोपेतम् ।
स्त्रीविरहितः प्रयोगस्तथापि न सुखावहो भवति ॥" इति ।

वस्तुतस्तु अवतरणान्तमेकमेवाङ्गमुपरञ्जकवर्गढौकनरूपमवगन्तव्यमित्यर्थः । गेयत्वेने गीतस्योपरञ्जकस्य प्राधान्यात्तस्य च बिम्बभूतशारीरस्वरमूलत्वात्तदनुसन्धानात्मा आलापस्य आरम्भः । मानरूपतालप्रधानसर्वातोद्यगरूपानुसन्धानमासमन्तात् श्रावयतीत्याश्रावणा । प्रतिबिम्बभूतवैणस्वरस्वरूपानुसन्धानाय दक्षिणादिवृत्तिविभागानुसन्धानात्मा वक्त्रपाणिः । वक्त्रे प्रारम्भे हस्ताङ्गुलिव्यापारात् ।

**दक्षिणादि**–इति । दक्षिणा-वृत्ति-चित्राख्या वृत्तयः । तास्वयं विधिः । प्रधानं गीतमुभयं वाद्यं चेति यथाक्रमम् । गीतप्राधान्ये वाद्यगुणतायां दक्षिणा । गीतवाद्योभय-प्राधान्ये वृत्तिः । वाद्यप्राधान्ये गीतगुणतायां चित्रेति[3] । तद्वृत्तिविभागगतशुष्कप्रयोगानु-सन्धानात्मा परिघट्टना । "घट्ट चलने" इति पाठात् । **शुष्कप्रयोग**–इति । निर्गीतं बहिर्गीतं शुष्कमित्युक्तम् । तत्रार्थप्रत्यायकपदरहितं यद् गीयते तन्निर्गीतम् । गीयमानेभ्यः सार्थकेभ्यः पदेभ्यो यद् बहिर्भूतं तद् बहिर्गीतम् । शुष्कैरक्षरैरनर्थकैः कन्दुमाद्यैर्यत् प्रयुज्यते तत् शुष्कमित्यर्थः । वीणावाद्योपजीवकत्वादवनद्धवाद्यस्यानुसन्धानं समपाण्यादिना प्रहार-पञ्चकयोगेन च क्रियत इति सङ्घोटना । "घुट परिवर्त्तने" । यत उक्तं **पुष्कराध्याये**

"पूर्वं शरीराद्उद्भूतास्ततो गच्छन्ति दारवीम् ।
ततः पुष्करजं चेति........................॥

**समपाण्यादिना** इति ।

"अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः ।" इति ।

पाणिस्तालस्याङ्गभूतः । स च त्रिविधः । तथा चाह

"समपाणिश्च विज्ञेयो ह्यर्धपाणिस्तथैव च ।
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः ॥
लयेन यत् समं वाद्यं समपाणिः स कीर्त्यते ।
लयाद् यदर्धकृष्टं स्यात् सोऽर्द्धपाणिः प्रकीर्त्तितः ॥
लयस्योपरि यद्वाद्यं पाणिः सोपरि कीर्त्यते ।"

**सोपरि** इति । "सोऽचि लोपे चेत् पादपूरणम्" । स[सु]इत्येतस्य सलो[सोर्लो]पो-भवति, लोपे चेत् पादपूरणम् । यदि लोपे सति पादः पूर्यते । **महारपञ्चक**–इति ।

---

१. मेयत्वेन ग. ॥ २. अप्रधानतायाम् ॥ ३. चित्र्येति ग ॥ ४. कन्दुमाद्यैः ख. कैर्झन्दु ग. ॥
५. गीतविशेषाः ॥

समपाण्यर्द्धपाण्यर्द्धार्द्धपाणि-पार्श्वपाणि-प्रदेशिनीपाणिभिर्यत् प्रहारपञ्चकं तद्योगेनेत्यर्थः। प्रकृतिविकृतिमेयमानानुहार्यानुहर्तृरूपस्य वैणपौष्करशब्दस्य परस्परसम्मीलनं कार्यमिति मार्गासारितम्[1]। मार्गे प्रकृत्यादिलक्षणे निजे गोचरे विकारादिरूपस्य पुष्करवाद्यस्यासमन्तात् सारणं गमना यत्रेति। गेयवस्तुगततालस्वरूपोपक्षेपः कलानामावापाद्यानां पातानां सम्यादीनां चानुसन्धिनेत्यासारितविधिः। **आवापाद्यानाम्** इति। आवाप-निष्क्राम-विक्षेप-प्रवेशादिरूपाणाम्।

"उत्तानाङ्गुलिसङ्कोच आवाप इति संज्ञित.।
निष्क्रामोऽधोगतस्य[2] स्यादङ्गुलीनां प्रसारणम्॥
तस्य दक्षिणतः क्षेपो विक्षेप इति संज्ञितः।
निवर्त्तनं च हस्तस्य प्रवेशोऽधोमुखस्य तु॥"

**सम्यादीनाम्** इति। सम्यादीनां[3] सम्या-ताल-सन्निपात-ध्रुवादीनाम्।

"सव्यहस्तनिपातः स्यात् सम्या तालस्तु वामतः।
हस्तयोस्तु समः पातः सन्निपात इति स्मृतः॥
कला या त्रिविधा[4] प्रोक्ता तस्याः पाताद् ध्रुवः स्मृतः।"

एवमन्तर्जवनिकाङ्गानां लक्षणान्युक्त्वा वहिर्जवनिकाङ्गानां लक्षणान्याह।

"कीर्त्तनादेवतानां च ज्ञेयो गीतविधिस्तथा।
यस्मादुत्थापयन्त्यत्र[5] प्रयोगं नान्दिपाठकाः।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं[6] मतम्॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम्।
वन्दनानि प्रकुर्वन्ति तस्माद्द्वि[7]परिवर्त्तनम्॥
आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति[8] संज्ञिता॥
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः।
तस्मात् शुष्कावकृष्टेयं जर्ज्जरश्लोकदर्शिका॥
यस्मादभिनयश्चात्र प्रथमं ह्यवतार्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता।
रौद्रप्रचरणाच्चापि महाचारीति शब्दिता[9]॥

१. -ताम् ग. ॥ २ हस्तस्य ॥ ३ अयम्पाठः ग. पुस्तकस्य ॥ ४. दक्षिणादिवृत्तिभेदेन ॥ ५. रचयन्ति ॥ ६ उत्थापनाङ्गे । ७. -द्धि ग. ॥ ८. स्तुति ॥ ९. उक्तिः ॥

विदूषकः सूत्रधारस्तथा वै पारिपार्श्विकः ।
यत्र कुर्वन्ति संजल्पं तच्चापि त्रिगतं मतम् ॥

उपक्षेपेण काव्यस्य हेतुयुक्तिव्यपाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥"

**कीर्त्तनाद्** इति । कीर्त्तनं स्तुतिः । **तस्माद्** वाच्याद्धेतोः । तेनेतः परं शुष्काक्षर-निवृत्तिः । **गीतविधिः** इति । गीतानामन्यतमं वर्द्धमानं वा । **प्रयोगम्** इति । प्रत्याहारादि-रूपं नाटचम् । **नान्दिपाठकाः** इति । सूत्रधारः पारिपार्श्विकौ च । अत्रायं भावः । प्रत्याहारादीनामुत्थापनं गीतकविध्यन्तानां तदीयस्वरूपफलाद्युपवर्णनात्मककाव्यप्रयोगात्मकं प्रत्याहारादिप्रयोगस्य चोत्थापनप्रयोजनं नाटचस्योपादेयत्वादिप्रकटनम् । तेन समुचित-प्रवृत्तिगुम्फितं प्रयोगोत्थापनात्मकं साभिनयं पाठ्चं प्राधान्येन प्रयोज्यमिति ।

**नित्यम्** इति । अनेनास्याः अवश्यंभाविनं प्रयोगं निरूपयन्नन्याङ्गानां सद्भाव-विकल्पं ज्ञापयति । अत एवास्याः प्राधान्यादेतदुपलक्षितपूर्वरङ्गद्वारेणैव **पुराणकवयो** लिखन्ति स्म--**नान्द्यन्ते सूत्रधारः** इति । अहरहश्चैषा प्रयोगे प्रयोज्या । एषा च नित्यमेवं-रूपैव । अन्यपाठ्यानामुत्थापनादीनां प्रयोगवशादन्यथापत्तिर्दृश्यते, न तु नान्दीपाठचस्येति नित्यशब्दस्याभिप्रायः । आदिग्रहणात् प्रेक्षापतिप्रभृतयः ।

**अत्र** इति अस्यां दशायाम् । **शुष्काक्षरैः** इति । शुष्कैरक्षरैरनर्थकैः क्रन्दु[1]माद्यैः । **अवकृष्टा** इति अवकृष्टाभिधाना । **जर्ज्जर**-इति । जर्ज्जरः सर्वविघ्ननिबर्हणं महेन्द्रप्रहरणं, तस्य स्तुतिप्रदर्शकः श्लोको जर्ज्जरश्लोकः, तस्य दर्शिका । **अभिनयः** इति । अभिनीयत इत्यभिनयो रूपकविशेषः । **रङ्गद्वारम्** इति । अभिनयोऽवतार्यते संक्षेपेण त[2]दर्थप्रयोजनादिनिरूपण-पाठ्चद्वारेण, तथैव चाभिनयः क्रियते यत्र तद्रङ्गस्य भाविनो रूपकस्य द्वारमिव रङ्गद्वारम् । उत्थापनाङ्गे सामान्येन नाटचमुत्थापितमिह तु रूपक[3]विशेषेणेति भेदः । **चारी** इति । शृङ्गारप्रधानं भगवतो महादेवस्य[4] देव्या सह यत्र चरितं वर्ण्यते काव्ये तत्स्[5]तुतिप्रधाने तदेव[6] यत्राङ्गहारचार्यादिना प्रदर्श्यते सा चारीति । **महाचारी** इति । रुद्रस्य त्रिपुरान्धकप्रभृति-प्रजाकण्टकचक्रं रोदयतो यत्कर्म तत् प्रध्वंसनादि, तदभिधायकं काव्यं यत्र तदुचितैरेवोद्धतै-र्मण्डलाङ्गहारैः प्रयुज्यते सा महाचारी ।

**विदूषकः** इति । पारिपार्श्विकयोरेवान्यतरो विदूषकवेषभाषाचारः । **यत्र** इति । **नागानन्दादौ** नाटके । **संजल्पम्** इति । संजल्पो भविष्यन्नाटकविशेषविषयो हास्यमिश्रः ।

---

१. झन्दु-ग ॥ २. नाटकस्यार्थ-! ॥ ३. रूपवि-ग. ॥ ४. कर्तरि ॥ ५. देवी ॥ ६. काव्यम् ॥

**उपक्षेपेण**–इत्यादि । काव्योपक्षेपेण[1] हेतुभूतेन तद्[2]विषये सामाजिकानां या आमन्त्रणा निमन्त्रणं, सिद्धेन सिद्धया उपलक्षितमित्थं खल्वतः प्रीतिव्युत्पत्ती भविष्यतस्तस्मादवलोक्यतामेतदिति सा प्ररोचना, प्रकृष्टरुचिहेतुत्वात् । न च तद्[3]वचनात् प्रवृत्तिर्भवतीत्याह–[**हेतुयुक्तिः** इति] हेतोर्या युक्तिर्योजना संक्षेपणाभिधानं तन्निमित्तमस्याः ।

इदानीममीषां प्रयोगस्य प्रयोजनमाह

"आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति नित्यशः ।
वक्त्रपाणौ कृते चैवं[4] नित्यं तुष्यन्ति दानवाः ।
परिघट्टनायां तुष्टाः स्युर्युक्तायां रक्षसां गणाः ॥
सङ्घोटनक्रियायां तु तुष्यन्त्यपि च गुह्यकाः ।
मार्गासारितमासाद्य प्रीता यक्षा भवन्ति हि ॥
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ।
वर्द्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः[5] ॥
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ।
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्त्तने ॥
नान्दीप्रयोगे च कृते प्रीतो भवति चन्द्रमाः ।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ।
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ॥
.................................... ।
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ॥
महाचार्यां प्रयुक्तायां तुष्टो भूतपतिर्भवेत् ।"

अथ नाट्यकलाविरुद्धं यथा

"स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः सञ्चारिणो यथा ।
रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ।।" इति ।

अत्र स्थायिनो रसस्येति मतत्रयेऽप्यपवाचो युक्तिः ।

**ब्रह्म**मते तावत् रसाश्चेतोवृत्तयः सर्वाः, तत्र[6] च सर्वोऽयं रसस्थायिव्यभिचारिभावव्यवहारः आलूनविशीर्ण इति नेष्टः । **भरततच्छिष्यमतयोरपि** स्थायिनः इति किं षष्ठ्यन्तं पदम्, उत प्रथमाबहुवचनान्तम्, उतस्वित् पञ्चम्यन्तम्, उताहो द्वितीयाबहुवचनान्तम् ।

१. क्षेपण-ग ॥ २. नाटक- ॥ ३. प्रयोक्तृ- ॥ ४ नैव ख. ॥ ५ सगणः ॥
६. ब्रह्ममते ॥

यदा षष्ठ्यन्तं तदा स्थायिशब्दः किं मुख्यार्थवृत्तिरुत लाक्षणिकार्थावगाही । यदि मुख्यार्थवृत्तिः, स्थायिनो रसस्येति सामानाधिकरण्यानुपपत्तिः । भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तौ सत्यां सामानाधिकरण्यं भवति । अत्र च स्थायिरसशब्दयोः सत्यपि भिन्नप्रवृत्तिनिमित्तत्वे यथाक्रमं भावरसविषयत्वेन एकार्थवृत्तित्वं नास्ति, कुतः सामानाधिकरण्यम् । तदेवं स्थायिशब्दस्य मुख्यार्थवृत्तित्वे सामानाधिकरण्यासम्भवः ।

अथ स्थायिभावप्रभवत्वाद्रसानामायुर्घृतमितिवदध्यारोपगर्भशुद्धोपचारमिश्रलक्षणासमाश्रयेण स्थायिनो रसस्येति सामानाधिकरण्यं समर्थ्येत । एवमपि स्थायिभावप्रभवत्वं रसा न व्यभिचरन्तीति व्यभिचाराभावादुष्णोऽग्निरितिवद्विशेषणस्यानुपयोगः ।

अथ प्रथमाबहुवचनान्तं स्थायिनो भावाः सञ्चारिणश्च । यथा

रसस्यार्थे प्रवर्त्तन्ते तद्धेतुर्महीभृतः ॥ इति ।

चशब्दश्चात्राध्याहरणीयः । तन्न । न हि बहवः स्थायिन एकस्य रसस्यार्थे प्रवर्त्तन्ते । सर्वरसानां खलु प्रतिनियताः स्थायिनस्ते प्रत्येकं रसोत्पत्तौ उपयोगमनुभवन्ति । न चैतत् "जात्याख्यायां बहुवचनम्" इति वक्तुं शक्यम् । स्थायिशब्दस्य जातिनिमित्तत्वाभावात् । न खलु स्थायिशब्दो गवादिवज्जातिनिमित्तकः । तिष्ठन्त्यभीक्ष्णमिति स्थायिन इति । न च यो योऽभीक्ष्णं तिष्ठति पर्वतादिस्तस्य स्थायिशब्देनाभिधानम् । पदार्थान्तरानन्वयिन्या रत्यादिभावनवकैकनियतायाः स्थितेः स्थायिशब्दप्रवृत्तिनिमित्तत्वात् । इति जातिशब्दत्वाभावेन तदपेक्षस्य बहुवचनस्यानुपपत्तिः ।

पञ्चमीविभक्तिपक्षेऽपि व्यर्थमेवैतत्स्थायिग्रहणम् । न ह्यस्थायिनः सकाशात् कस्यचिद्रसस्य संभवः ।

कर्मत्वापादन[1]क्रियायाश्चाभावान्न द्वितीयाबहुवचनान्तमेतत्पदमत्र वाक्ये समन्वेति । न चान्या गतिरस्तीति । तेनात्र स्थायिन इति बहुवचनपक्षे एकस्य रसस्यार्थे बहूनां स्थायिभावानामप्रवर्त्तमानत्वान्नाटयकलाविरोधः । षष्ठीपञ्चमीपक्षयोस्तु स्थायिशब्दस्यास्थायिकारणकत्वं[2] व्यावर्त्तयितुमुपात्तत्वाद्रसानां चास्थायिकारणकत्वस्यासंभवाद् व्यावर्त्तनीयापेक्षया नाट्यकलाविरोधो योज्यः ।

**न्यायः शास्त्रम्**[3] इति । न्यायः शास्त्रं ये तां त्रिवर्गोक्ति दण्डनीतिं च विदुरित्यर्थः । **लोकपक्त्या**(रक्त्या?) इति । लोकरञ्जनार्थत्वेनेत्यर्थः । **अर्जन** इत्यादि । तथा च **स्मृतिः** ।

"अलब्धमिच्छेद् दण्डेन लब्धं यत्नेन पालयेत् ।
पालितं वर्द्धयेद् वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥"

---

१. कर्मत्वापादान–क. ॥ २. कत्वं रसानां व्यात्र–ख. ॥ ३. न्यायशास्त्र–ख. ॥

**गुणाढ्यः** इति । गुणाढ्यः कविः । **सुबन्धुर्व्याख्याता** । **सालङ्कायनः** इति । सालङ्कायननामा प्रद्योतस्य राज्ञो यन्त्रमल्लाध्यक्षः । **गजच्छद्म**–इति । वनविचारिचर्ममयगजान्तर्गत[१]योद्धृपुरुषशतेन **वत्सराजो** बद्ध इति ह्याम्नायः । **तथैव कार्यसिद्धिम्** इति । यथैव स वत्सराजबन्धः प्रस्तुतस्तेनैव **वासवदत्ता**लाभलक्षणां स्वार्थसिद्धिमिच्छन्त इत्यर्थः । **उपेक्षितम्** इति । शत्रुभिरभिभवनं भावीति शेषः । **शरादृढधनुः** इति । एतदुक्तं भवति । तेजस्वी वत्सराजः, स नैवमेव बन्द्धुं शक्यते । तेन युध्यमानस्यास्य द्वेषिमुक्तैर्बाणैर्न विपत्तिर्भविष्यतीत्यत्र किमनुमानं, का युक्तिरित्यर्थः ।

अथ न चारशून्यता नापि सचिवोपेक्षा । किन्तु **रुमण्वत्**प्रभृतिभिर्वत्सराजमन्त्रिभिः **प्रद्योतेन** सह संभूय मन्त्रयुक्त्या तत्समुत्थानं कृतमित्यदोष इत्याह–**हतोऽनेन** इति । **नमोऽस्तु** इति । संभूय समुत्थाने हि वक्ष्यमाणानां पञ्चानां चोद्यानां स्थूलमतिविकल्पनया दुष्परिहारमाशङ्कमानस्य सोत्प्रासेयमुक्तिः । परमार्थतस्तु कृतात्मभिस्तान्यपि परिह्रियन्त एव । यत् स एवात्मन औद्धत्यं परिहरन्नध्यायसमाप्तावुक्तवान्

न दूषणायायमुदाहृतो विधि-
र्न चाभिमानेन किमु प्रतीतये ।
कृतात्मनां तत्त्वविदां च मादृशो
जनोऽभिसन्धिं क इवावभोत्स्यते ॥

नायं प्रपञ्चो मया कृतो महतां कवीनां मतानि दूषयिष्यामीति मत्सरेण । किन्तु निदर्शनानि विना सर्वप्रतिपाद्यानां स्पष्टाः प्रतीतयो न भवन्तीति स्थूलमतिजनप्रकल्पितार्थं गुणाढ्यादिकाव्यमुदाहरणीकृतम् । किं कारणमित्याह–**कृतात्मनाम्** इत्यादि । कृतात्मनां संस्कृतमतीनां तत्त्वविदां परमार्थवेदिनां मादृशो जनः परितुच्छमतिरभिप्रायमवबोद्धुं नालमिति वाक्यार्थः । अनेनैतद्दर्शयति । **बृहत्कथादौ** यदि प्राज्ञास्तात्पर्यान्तरं प्रकल्पयेयुस्तदाप्यस्मन्मतदूषणपरं तन्न भवतीति । यतो वयं स्थूलमतिप्रकल्पितार्थं **बृहत्कथा**खण्डमुदाहरणीकृतवन्त इति ।

ननु च प्राज्ञैः **सुबन्धु**प्रभृतिभिरिह **बृहत्कथा**प्रदेशे **महासेनेन** सह रुमण्वदादीनां मन्त्रिणां संभूय समुत्थानं वत्सेश्वरबन्धनाय कन्यालाभहेतुत्वात् न्याय्यं स्थापितम् । अत्र च दुष्परिहाराणि पञ्च चोद्यानि **विष्णुगुप्ते**नोद्भावितानीति कथं निरवद्यपक्षाशङ्क्येदमुक्तम्–**कृतात्मनां तत्त्वदृशाम्** इत्यादि । तानि पुनश्चोद्यानि–वत्सेशस्य बद्ध्वोज्जयनीनयनेन[२] न किञ्चित् प्रयोजनम् [१] । स्वराष्ट्रे सत्यपि वत्सराजे[३] प्रत्यासन्नात् पञ्चालाधिपाद् आरुणे-

---

१. गतं क. ॥ २. नयने ग. ॥ ३. राजप्रत्या–क ॥

वत्समण्डलोपद्रवाशङ्का किमङ्ग पुनर्बद्ध्वोज्जयनीं नीते। तेन स्वमण्डलानर्थोपनिपातदोषोऽपि। व्यसनानां हि प्रधानं स्वामिव्यसनम्। छिद्रप्रहारिणश्च रिपव इति [२]। बन्धनकाले च तेजस्वी **वत्सराजो** नैवमेव बन्द्धुं[1] शक्यत इति अवश्यमेव भवितव्यं सम्प्रहारेण। तत्र च व्यापत्तिशङ्का दुर्निवारेति [३]। **उज्जयनीं** च नीतस्य न **महासेनो** व्यभिचरिष्यति वत्सेशस्येत्यत्र किं प्रमाणम्। अनन्तरमण्डलत्वेन रिपोः **प्रद्योतस्य** हस्तस्थिते[2] वत्सेश्वरे व्यभिचार एव युक्त इति ४। पञ्चमं पुनश्चोद्यं सचेतनस्य वनहस्तिनश्चर्मनिर्मितस्य च **कथमुदयनो** विशेषं न विद्यादिति [५]। तस्माद्गम्भीराभिप्रायत्वख्यापनं **गुणाढ्यस्य** व्यर्थमेवेति।

अत्र समाधीयते। यत्तावदुक्तं प्रयोजनाभाव इति। तत्रेदमुच्यते। **प्रद्योतो** दुहितरं **वत्सेशाय** दित्सति। वत्सेशोऽपि तूष्णीहारः प्रद्योतोऽहं पुनरर्जुनवंशसंभूत इति तन्मनोरथं न पूरयति। तेनावमान्यमानः कदाचिन्मित्रत्वाच्चलिष्यति प्रद्योत इति **यौगन्धरायणा**दिभिः सम्भूय बन्धनं प्रस्तुतम्। **विशालागतो** हि वत्सेशो **वासवदत्तां** दृष्ट्वा नियमेन तस्यामनुरज्यत इति। अनन्तरमण्डलत्वेऽपि हि मैत्री निमित्तवशेन शतशो दृश्यते।

यदप्युक्तम्—**आरुणे**र्मण्डलोपद्रवसंभावना स्पष्टैव स्वामिव्यसनस्योपनिपतितत्वादिति। तदपि न सम्यक्। सचिवन्यस्तभरः खलु वत्सराजस्तेनास्य सन्निधानासन्निधानं अकिञ्चित्करं। विरूक्षिते पुनः प्रद्योते प्रद्योतारुणिभ्यामारब्धस्य वत्समण्डलस्य नास्ति प्रतीकार इत्यभिसन्धाय रुमण्वत्प्रभृतिभिर्वत्सेशबन्धनमनुचितम्। तथा च **उन्मत्तयौगन्धरायणे**

स्वामी सदैव मृगयाव्यसनप्रयुक्तो  
राज्यं विसंस्थुलमरिः शिरसि प्रवृद्धः।  
मित्रं त्ववन्तिपतिरेव कुलाभिमानाद्  
दैवेन सोऽपि हि मनाग्विकृतिं च नीतः॥ इति।

यदप्युक्तं बन्धनसमये एव व्यापत्तिः शङ्क्यते वत्सराजस्येति। एतदपि **सुबन्धुना** आशङ्क्य परिहृतम्। **अङ्गारवतीं** प्रति **साङ्कृत्यायनी** प्राह—अथ तस्मिन्नेव संप्रहारे व्यापादितः स्यात्। **अङ्गारवती**—तस्सय्येव सो परिअणो कधं सामिणं वावादयिस्सिदि। **प्रेक्षकवत्सराजः** प्राह—उपपद्यत एतत्। तथा चैते पुरुषा मषीमलम्रक्षणदुर्विभावाः शाखासु मां घ्नन्ति शनैः कथञ्चिदिति।

यदप्यन्यदुक्तं विशालागतस्य वत्सेशस्य महासेनात् प्रत्यपायशङ्केति। तदप्यसत्। यत उदयनस्य मातुलः प्रद्योतः स कथं तत्प्रत्यपाये प्रयतिष्यते। अतिशयस्नेहवांश्च

१. बद्धुं ग.॥ २. स्थिते न वत्से-ख.॥

**साङ्कृत्यायन्या** सुपरीक्षितः कृतः। तथाच **नाटयधारे** नाटके। प्रेक्षाजीवात् **प्रद्योतस्य वत्सेशेन** मातुलत्वेऽवगते उक्तम्। **रुमण्वन्**! किमेतत्। रुमण्वान्–देव! एवमेवैतत्। **सिंहो** नाम लिच्छिविनाथः **सिंहदत्तेना**काण्डावस्कन्दपातिना व्यापादितस्तत्रान्तरे भ्रातृ-भगिनीद्वयमेतद्विप्रयुक्तमिति। स्नेहवत्तां च ख्यापयता महासेनेन वत्सेशं प्रति उक्तम्

आराधितोऽपि न च वत्सलतामुपैति
बध्नाति वैरमुपकारिणि बन्धुवर्गे।
गर्वं न मुञ्चति गुरुष्वपि मानदोषाद्
अस्मच्छिशुः स किल वञ्चयितुं प्रवृत्तः॥ इति।

साङ्कृत्यायन्याश्च वत्सेशं प्रत्यव्यभिचारिता स्पष्टैव। यतः सा **कौशाम्ब्यां**[2] ब्राह्मणी स्वेन पत्याभिगृह्य साटकेन च गलकबन्धान्निरुच्छ्वासीकृत्य यमुनायां प्रक्षिप्ता, सलिले वहन्ती नौभिः क्रीडता वत्सराजेन दृष्टा प्रत्युज्जीविता चेति। तथा **चोन्मत्त-यौगन्धरायणे** साङ्कृत्यायनी–अहो नु खलु भो! वत्सराजस्येहानयनेन पीडिता चाह-मनुगृहीता च। यतः

स्वामी क्रमागत इहैवमवस्थितः सन्
द्रष्टव्य इत्यतितरां बत पीडिताऽस्मि।
नौक्रीडयाऽधियमुनं स तथोपकारी
शक्योऽत्र किञ्चिदुपकर्तुमिति प्रहृष्टा॥

नन्वेवं मातुलदुहितृपरिणयनमागमविरुद्धं स्यात्। एतदपि **नाटयधारे** परिहृतम्। दक्षिणापथाचाराश्रयणात्। तथा च **रुक्मिणो** दुहिता मातुलस्य **प्रद्युम्नेन** परिणीतेति। अथवा **महासेनस्य वासवदत्ता** दुहितैव न भवति, किन्तु[3] **चण्डकौशिकस्य** तनया लक्ष्म्यं-शोत्पन्ना दुहितृवत् प्रद्योतेन पालिता इति।

यदपि तच्चोदितं **सचेतनस्य** इत्यादि। तदपि **उन्मत्तयौगन्धरायणे** परिहृतम्। भट्टा से खलु[4] महावालणे पीलुगहणं घर्यालम्वणं खणं पि न मिळदि। इति म्लेच्छेन निवेदिते वत्सराजः प्राह–मदातिशयसन्तापोऽस्यातिगरीयानिति तर्कयामि। तस्मान्न किञ्चिदवद्यं[5] वासवदत्तालम्भके इत्यभिप्रेत्यैतदुक्तम्। **कृतात्मनां तत्त्वविदाम् इत्यादि** इति।

सम्प्रति त्रिष्वपि शून्यतोपेक्षासमुत्थानपक्षेषु यत् पञ्चमं दूषणमुद्भावितं तद् ग्रन्थकारः स्वयमेव दित्सुराह–**सचेतसो वन** इत्यादि। एतदुक्तं भवति। वत्सराजो

१. वैरम–ग.॥ २. कौशाम्ब्या ग.॥ ३. कि च ग॥ ४. खु–ग.॥ ५. वया–ग.॥

महाकुलीनः स्वजन्मनः प्रभृति हस्तिपरिभोगलालितो वने चासकृद्वीणाप्रयोगेण वारणान् बद्धवान् । तस्येत्थंभूतस्य यन्त्रमये कुञ्जरे कथं सत्यगजबुद्धिः स्यात् । बालोऽपि खलु सचेतनस्य वनहस्तिनश्चर्मणा चोपकल्पितशरीरस्य विशेषमवगच्छति, किमङ्ग पुनर्वत्सराज इति । **ही** चित्रम् । **किं** कथम् । **तु** तदिति । महापुरुषस्खलितनिमित्तं विस्मयमात्मनः ख्यापयतीति ।

**धर्मशास्त्राणि** इति धर्मोपदेशकानि शास्त्राणि । तानीहाविशेषेण परिगृह्यन्ते । तेन यो यत्रागमे प्रपन्नस्तस्य तदागमविरुद्धाचरणे निबद्ध्यमाने धर्मशास्त्रविरोधकृत् काव्यं सिद्धं भवति । ननु किमिति सुगतसिद्धान्तप्रमाणयोरेव विचारणम् । सर्वसिद्धान्तानुवर्त्तनपरो हि काव्यप्रवाहस्तेन कः पक्षपातो बौद्धसिद्धान्तं प्रतीत्याह—**प्रायेण** इति । बाहुल्येन दुर्बोधत्वात् तर्कशास्त्रेभ्यस्त्रस्यन्त्यल्पबुद्धयः, अनेन निमित्तेन तेषामुपच्छन्दनार्थं प्रतार्य तर्कमार्गे प्रवेशनार्थं सहृदयानां हेतुन्यायलवसमुच्चयः कृतोऽयमस्माभिर्न पुनः सुगतदर्शनपक्षपातेन । एतदुक्तं भवति । दिङ्मात्रदर्शनं प्रमाणलक्षणे कर्त्तव्यम् । सकलतर्कप्रमाणलक्षणविचारेति प्रपञ्चः प्रसज्यते । कथं पुनः सहृदया अनेन प्रकारेणोपच्छन्द्यन्त इत्याह—**स्वादुकाव्य**— इति । काव्यमार्गानुपाति तर्कवस्त्वपि नातीव चेतसः खेदकरं भवति । अत्र दृष्टान्तमाह— "**प्रथमं लीढमधवः**" इति ।

यत्तदुक्तं सर्वतर्कमार्गानुवर्त्तनपरः काव्यप्रवाह इति तत्स्वयमेव दर्शयितुमाह—**न स शब्दः** इति । यथा सर्वेषां शब्दानामर्थानां कलानां च काव्येषूपयोगस्तद्वत् सर्वन्यायानामिति वाक्यार्थो दीपकालङ्कारेण लक्ष्यते । **अहो भारो महान्कवेः** इति । अत्र महाभारत्वेन सर्वेषां शब्दानां तदर्थानां, शब्दार्थविचारोपयोगिनां च न्यायानां, तथा तद्विषयतया सकलजनरसिकत्वापादनक्षमाणां[1] गीतनृत्तचित्रादिकलानां रूपणा कृता । सा चाहो इत्यनेन विस्मयविभावतया ख्यापिता । सर्वस्य चार्थप्रतिपादनस्य हिताहितप्राप्तिपरिहारोपायानुष्ठानाङ्गत्वात् । तत्र च हिताहितप्राप्तिपरिहारोपायानुष्ठानस्य शब्देनानुपात्तत्वात्, कविशब्दार्थपर्यालोचनया अहो महान् भार इत्येतदर्थपरामर्शेन च कवेरवधानातिशयः, कीर्त्तिप्रीत्युपायतया अकीर्त्तिपरिहारोपायत्वेन च कर्त्तव्यतया प्रतीयते । यथा खलु महान् भारः सातिशयमवधानमन्तरेण शरीरेण वोढुं न शक्यते, तथा महाभारत्वरूपितं[2] वाच्य-वाचक-तद्विचार-हृदयरञ्जनात्मकं चतुष्टयमविद्यमानेऽवधानातिशये न हृदयेनोद्वोढुं शक्यमित्यर्थः । तस्मात् कीर्त्तिप्रीतिकामेनाकीर्त्तिपरिहारकामेन च शब्द-वाच्य-न्याय-कलालक्षणे चतुष्टये अवधानातिशयः कर्त्तव्य इत्यर्थः सम्पद्यते ।

---

१. सकलजनरसिकत्वापादन– ॥ २ रूपितं ग ॥

सम्प्रति प्रस्तुतमनुसर्तुमाह—**सन्धादय** इति। **प्रमाणमूला** इति। तथाहि—अग्निमान् पर्वत इति प्रतिज्ञायां पर्वतस्तावत् प्रत्यक्षेण निश्चीयते। अग्निसम्बन्धस्तु तस्यानुमानात् प्रतीयत इति प्रतिज्ञायाः प्रत्यक्षानुमानमूलत्वम्। धूमादिति तु हेतौ धूमगतस्य पर्वतधर्मत्वस्य पक्षधर्मत्वाभिधानस्य प्रत्यक्षेण प्रतिपत्तिः। अन्वयव्यतिरेकौ तु तत्र प्रत्यक्षानुपलम्भाभ्यां यथाक्रमं महानसादावुदकादौ च धर्मिणि अवगम्येते इति प्रत्यक्षानुपलम्भयोस्तत्र व्यापारः। तथाहि—यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानस इति धूमस्य वह्निनान्वयः प्रत्यक्षेण प्रतीयते। यत्र तु वह्निर्नास्ति तत्र धूमोऽपि[1] नास्ति, यथा जलादाविति वह्न्यभावस्य धूमाभावेन व्याप्तिः। तदात्मको यो व्यतिरेकस्तस्यानुपलम्भेन प्रतिपत्तिः। धूमसत्ता खलु वह्निसत्तया व्याप्ता। धूमस्य वह्निशून्यस्याभावात्। वह्न्यभावस्तु धूमाभावेन व्याप्तः। वह्न्यभावस्य धूमयुक्तस्याभावात्। तदेवं भावव्याप्तिविपर्ययेणाभावव्याप्तिः। तदुक्तम्

"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते।
तयो[2]रभावयोस्तस्माद्विपरीतः प्रतीयते॥" इति।

तदेवमन्वयव्यतिरेकयोः साधर्म्यवैधर्म्यदृष्टान्ताश्रितयोः प्रत्यक्षानुपलम्भाभ्यां प्रतिपत्तिरिति तदभिधायिन उदाहरणवाक्यस्य प्रत्यक्षानुमानमूलता। तेन प्रतिज्ञाहेतूदाहरणानामनन्तरोदितेन न्यायेन प्रत्यक्षानुमानमूलत्वादेतदुक्तम्। **प्रतिज्ञाहेतुदृष्टान्ताः प्रमाणमूला** इति। अत्र च सौगतदृष्ट्या **भामहेन** परार्थानुमानात्मकवाक्यावयवत्वेन प्रतिज्ञाहेतूदाहरणात्मकं त्रितयमेवोपदर्शितमिति न तदितरयोरवयवयोरुपनयनिगमनयोः प्रमाणमूलता प्रदर्शिता।

यद्यपि च **धर्मकीर्त्तिना** प्रतिज्ञाप्रयोगस्य निराकृतत्वाद् यो यो धूमवान् स सोऽग्निमान्, यथा महानसस्तथा चायं धूमवानिति द्व्यवयवमेव वाक्यं परार्थानुमानकाले प्रयोज्यमिति प्रादर्शि। तथाप्याचार्य**दिङ्नाग**मतानुसारेण त्र्यवयवं वाक्यमनेन प्रदर्शितम्। तदाश्रयणेनैव चास्माभिस्त्रयाणामवयवानां यथायोगं प्रत्यक्षानुमानमूलता प्रदर्शिता। **अरुचिपरम्** इति। सर्वतर्कमार्गानुवर्त्तनपरत्वात् काव्यप्रवाहस्येत्यर्थः।

प्रत्यक्षानुमानयोर्विषयद्वारकं भेदमुपदर्श्य लक्षणभेदसन्दर्शनार्थं प्रत्यक्षं तावल्लक्षयति—**प्रत्यक्षम्** इति। **सम्यग्ज्ञान**-इति। सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति प्रारम्भ एव **बौद्धेन** प्रतिज्ञातत्वादिति भावः। **मानससुखादि**-इति। एषां च लक्षणम्।

"मानसं चाक्षविज्ञानानन्तरप्रत्ययोद्भवम्।
तदर्थानन्तरग्राहि सुखादीनां स्ववेदनम्॥"

---

१. धूमो ग.॥ २. वह्निधूमयोः॥

अयमर्थः । मानसमपि प्रत्यक्षं न केवलमिन्द्रियजम् । किंनिमित्तं किंविषयं च तदित्याह–**अक्षविज्ञान**–इति । अक्षविज्ञानमनन्तरमव्यवहितं प्रत्ययः कारणं तस्मादुद्भवो यस्य तदक्षविज्ञानानन्तरप्रत्ययोद्भवम् । अनेन मानसप्रत्यक्षस्य कारणं निर्दिष्टम् । तदर्थानन्तरग्राहीत्यनेनापि विषयः, तस्याक्षविज्ञानस्य योऽर्थो विषयस्तस्य योऽनन्तरोऽव्यवहितः समानजातीय उपादेयभूतः क्षणस्तद्ग्राहीति संक्षेपार्थः ।

**सुखादीनां स्ववेदनम्** इति । सुख-दुःखेच्छा-द्वेष-प्रयत्नप्रभृतीनां[1] स्वसंवेदनं प्रत्यक्षं स्वस्यात्मनो[2] वेदनं स्ववेदनं वेद्यतेऽनेनेति च योग्यत्वं सुखादीनां वेदनशब्देनोच्यते । ततः सुखादीनामात्मवेदनयोग्यत्वं प्रत्यक्षमित्यर्थः ।

"भावनाबलतः स्पष्टं भयादाविव भासते ।
यज्ज्ञानमविसंवादि तत् प्रत्यक्षमकल्पकम् ॥"

भावनासामर्थ्याद्यज्ज्ञानं स्पष्टाभं भयादाविव भासते निर्विकल्पकमविसंवादि तद्योगिप्रत्यक्षमित्यर्थः । तथाहि योगिनामपि श्रुतमयेन ज्ञानेनार्थान् गृहीत्वा युक्तिचिन्तामयेन व्यवस्थाप्य भावयतां भावनानिष्पत्तौ यद्विशदावभासि भयशोककामोन्मादादाविव तदविकल्पकमवितथविषयं प्रमाणं योगिप्रत्यक्षं **सौत्रान्तिकयोगाचारमाध्यमिक**मतानुयायि**दिङ्नागो**क्तलक्षणं निरूप्य वैभाषिकमतानुसारि **वसुबन्धू**क्तलक्षणं प्रत्यक्षस्य दर्शयितुमाह–**ततोऽर्थादिति** इति ।

**ततो व्यपदेशनिमित्ताद्** इति । व्यपदेशनिमित्तं रजतविज्ञानस्य रजतम् । तेन हि तद्रजतविज्ञानं व्यपदिश्यते रजतस्येदं विज्ञानमिति । ततश्च व्यपदेशनिमित्ताद्रजताद्यद्रजतविज्ञानमुत्पन्नं तत् प्रत्यक्षम् । यस्य तु रजतविज्ञानस्य न व्यपदेशनिमित्ताद्रजतादुत्पादोऽपि तु शुक्तिकातस्तस्य न प्रत्यक्षता । **योजनाम्**–इति । यद् यत्र पारमार्थिकेन रूपेण नास्ति तत्तत्रानादिकालसुप्ररूढवासनावशेन समारोप्यत इत्येतद्योजनाशब्देनोच्यते । **घटादिभ्य** इति । सर्वस्यैव हि भावस्य त्रिजगदुदरवर्त्तिभावव्यतिरिक्तत्वेन यः स्वरूपलाभो व्यवस्थितस्तं व्यावहारिकजनः प्रतिनियतावधिकत्वेन स्ववासनावशान्मन्यत इत्येतदभिप्रायेण व्यावृत्तियोजनाभिधाषष्ठीकल्पनानेनोक्ता । अत एव व्यावृत्तान्नान्या व्यावृत्तिरिति **बौद्धाः** ।

**समारोप** इति बहिरविद्यमानार्थाध्यास इत्यर्थः । **अनादिकालवासना**–इति । **सौत्रान्तिकानां** मते बाह्योऽर्थो निरंशः साकारं च विज्ञानम् । तत्र द्विविधा वासना । अनुभववासना अविद्यावासना च । अनुभववासनामाहात्म्यादाकारोल्लेखो विज्ञानेषु । अविद्यावासनामाहात्म्यात्तु स्वाकारस्य बहीरूपतयाध्यारोपिते सति भेदसंसर्गौ । तथाहि भिन्ना-

१. सम्बन्धषष्ठी ॥ २. कर्मणि षष्ठी ॥ ३. भावे ॥

नामपि नीलव्यक्तीनां नीलत्वेन एकीकरणं संसर्जनं नीलं नीलमिति । एकस्यापि च नीलस्य तत्तद्धर्मयोगितया भिन्नत्वेनोपदर्शनं नीलं महच्च(श्च ?)लतीति ।

सा चेयमविद्यावासना अनादिकालप्रवृत्ता । तस्याश्च परिपोषः स्वकार्यजननौन्मुख्यम् । तद्वशेन विकल्पज्ञानानां बाह्यवस्तुभेदसंसर्गात्मकत्वेनोल्लास इत्यर्थः । **विद्यमान** इति । विज्ञानांश एव बहीरूपतया पारमार्थिकत्वेनावभासते । स्वलक्षणं वा नान्यत् किञ्चिदिति भावः । **निरस्यन्** इति **योगाचार**मताश्रयणेनेत्यर्थः[1] । **विशेषः क** इति इति । विशेषः स्वलक्षणं तस्यावयविरूपतया समुदायरूपतया चाघटमानत्वम् । तथाहि–अवयविनस्तावद् व्यतिरेकाव्यतिरेकवृत्तिविकल्पैरावृत्त्यनावृत्ति-कम्पाकम्प-रक्तारक्तत्वविकल्पैश्च निराकृतत्वादनुपपत्तिः । परमाणवोऽप्यनुपपन्नाः ।

“षट्केन[2] युगपद्योगात् परमाणोः षडंशता ।<br>
षण्णां समानदेशत्वे[3] पिण्डः स्यादणुमात्रकः ॥” इति ।

**न तावद्** इति । अनेन **सौत्रान्तिका**नामभिमतो यो ग्राह्यग्राहकभावस्तं निराकरोति । तथाहि- तेषां ग्राह्यग्राहकभावे एवंविधः सिद्धान्तः विज्ञानस्य जनको योऽसौ स्वाकारार्पणक्षमो नीलादिरर्थः स ग्राह्यः । यस्य खलु जनकत्वं केवलमस्ति न तु स्वाकारार्पणक्षमता तस्य ग्राहकता । यथा चाक्षुषविज्ञानहेतोश्चक्षुःक्षणस्य । चक्षुःक्षणेन हि चाक्षुषं विज्ञानं जन्यते । न तु तेन तत्र स्वाकारोऽर्प्यते । यदुक्तम्

“भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।<br>
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥” इति ।

एवंविधग्राह्यग्राहकभावनिराकरणे च युक्तिस्तयोः सहभावाभावादित्युक्ता । न खलु प्रत्यक्षमतीताकारोल्लेखि, अयं घट इत्युत्पादात् । तस्मादतीतार्थविषयत्वमन्याय्यम् ।

**सहभावे च** इति । अनेन तु **वैभाषिक**प्रसिद्धो ग्राह्यग्राहकभावो निराकृतः । तथाहि–**वैभाषिक**मते निराकारं विज्ञानमहङ्कारास्पदं सातादिरूपं ग्राहकं बाह्यस्तु इदन्तया प्रथमानोऽर्थो ग्राह्यः । तयोश्च चक्षू-रूपालोक-मनस्कारलक्षणसामग्रीवशेन युद्धा[4]न्धहरिणमिथुनन्यायेन युगपदेवोत्पादः । अतस्तुल्यकालयोरेव क्षणयोर्ग्राह्यग्राहकभाव इति ।

एतन्निराकरणे च युक्तिः । यौ सहभूतौ तयोः परस्परं विषयविषयिभावो नास्ति । यथा सव्येतरगोविषाणयोरिति । न हि कार्यकारणभावव्यतिरेकेण विभिन्नयोरर्थयोरन्यैः[5] कश्चित् सम्बन्ध उपपद्यते । स्वप्रतिष्ठत्वेन सर्वेषां पदार्थानामन्यप्रतिष्ठत्वाभावात् । अन्यथा

---

१. निरस्यन्निति दिङ्नागाचार्यः इति पाठः ग–पुस्तके ॥ २. दिशा ॥ ३. एकदेशावस्थितत्वे ॥ ४. यद्वा ? ॥ ५. तादात्म्यरूपः ।

सामान्यादीनामपि सत्त्वापातात्। सामान्यादीनां हि निराकरणे पदार्थस्य परप्रतिष्ठरूपानुपपत्तिर्युक्तित्वेनोपन्यस्ता। सा चेदानीं ज्ञानस्य ग्राहकत्वेन विषयनिष्ठत्वेऽभ्युपगम्यमाने परित्यक्ता स्यात्। अतश्च यथा ज्ञानस्य ग्राहकत्वाद् ग्राह्यनिष्ठस्याङ्गीकरणं तथा सामान्याद्यपि व्यक्त्यादिनिष्ठं कस्मान्नाङ्गीक्रियेतेति **सौगत**सिद्धान्तपरित्यागप्रसङ्गः। तस्मात्तुल्यकालयोरपि ग्राह्यग्राहकभावो न न्याय्यः।

**स्यादेतद्** इत्यादि। अनेन **सौत्रान्तिक**पक्षोन्मीलनम्। तस्य निराकरणम् **एतदपि वार्त्तम्** इत्यादिना। अयमर्थः। **सौत्रान्तिक**पक्षे बाह्यस्यार्थस्य जडरूपत्वात् स्वतस्तावत् प्रकाशमानता नोपपद्यत इति ज्ञाने तदाकारधारिणि प्रकाशमानेऽर्थस्य प्रकाशमानता ज्ञानास्पदत्वात् परभूमित्वेन वक्तव्या। यदाहुः—"परभूमिरियमर्थस्य प्रकाशमानता नाम" इति। एतच्च ज्ञानस्यार्थाकारत्वनिश्चये सत्युपपद्यते। अर्थस्य च ज्ञानाकारव्यतिरेकेणानुद्भातत्वात् ज्ञानस्यार्थाकारतानिश्चयो दुर्घटः। तस्माज्ज्ञानमेव साकारं न तु बाह्योऽर्थः कश्चिद्विद्यत इति **योगाचार**भूमिकानुप्रवेशः प्रसक्तः। आकारस्य चानादिवासनावशेनोत्पादसंभवान्नाकारान्यथानुपपत्तिवशेन बाह्योऽर्थः परिकल्पयितुं शक्यः। यश्चासावाकारो ज्ञानस्यानादिवासनावशेनोपजायते, तस्य व्यतिरेकाव्यतिरेकवृत्तिविकल्पैरनुपपद्यमानत्वात्तस्य चानुपपत्तौ तद्ग्राहित्वस्यापि ज्ञाननिष्ठस्य कल्पयितुमशक्यत्वात् परमार्थतः स्वच्छ एवायं ज्ञानप्रवाहः। ग्राह्यग्राहकसंवित्तिकालुष्यं तु तस्य सांवृतिकमपारमार्थिकं विकल्पनिर्मितमेवेति प्रसक्तम्। अतश्चायं पारमार्थिकः स्वच्छो ज्ञानप्रवाहः येन च ग्राह्यग्राहकसंविद्भेदेन व्यवहारस्तस्यापारमार्थिकत्वमिति महती कदर्थना। प्रातीतिकस्य ग्राह्यग्राहकसंविद्भेदस्यासत्त्वादप्रातीतिकस्य च स्वच्छस्य ज्ञानप्रवाहस्य सत्तया अङ्गीकृतत्वात्। तदुक्तम्—"तदपोहे च तथा ता शिष्टा सा बुद्ध[द्धि]गोचरः" इति।

**अथ मतम्** इत्यादि। अनेन पारमार्थिकत्वेन यः स्वच्छं विज्ञानप्रवाहमिच्छति, ग्राह्यग्राहकविकल्पौ तु कल्पनामात्रनिमित्तौ सांवृतावभिमानमात्रसाराविति तथाविध**योगाचार**दर्शनाक्षेपः। अयमभिप्रायः। न विज्ञानेन कश्चित् स्वच्छरूपव्यतिरिक्तोऽर्थो गोचरीक्रियते। स्वसंविदितत्वेन विज्ञानस्य स्वच्छरूपमात्रनिष्ठत्वात्। यस्त्वयं ग्राह्यग्राहकसंविदां भेदः स न प्रकाशते। अनाद्यविद्यावासनाविकाशात्त्वभिमानमात्रमेतत्। इदं ग्राह्यमिदं ग्राहकमियं संवित्तिरिति। अतश्च यथा आलोकस्यादर्शनमात्रे अन्धकारस्यावस्तुत्वादपरिदृश्यमानत्वेऽप्यन्धकारं पश्यामीति भ्रमस्तथानाद्यविद्याव्याकुलत्वेन स्वच्छज्ञानप्रवाहाणां विलोकनादिदं प्रमेयमिदं प्रमाणमियं प्रमितिरिति प्रकाश इव न तु प्रकाश एवेति। तन्निबन्धनश्च भावोपादानात्मको व्यवहारो न तु प्रकाशमानरूपनिबन्धन इति। तदेतदवस्तुकं चेदित्याशङ्कितं

ग्राह्यग्राहकवस्तुशून्यं स्वसंविदितस्वच्छस्वभावं विज्ञानमेव परमार्थसत् यदीत्यर्थः। एतस्य निराकरणं **वितथम्** इति। असारमेतदित्यर्थः।

**प्रत्यक्षं तत्त्ववृत्ति हि** इति। प्रत्यक्षस्य तत्त्वे ग्राह्यस्य ग्राह्यत्वे ग्राहकस्य च ग्राहकत्वे च व्यापारात्तस्मिंश्च प्रत्यक्षे प्रतिपन्थिनि सति ग्राह्यग्राहकस्वरूपनिराकरणोद्युक्तानामनुमानानां प्रत्यक्षविरोधित्वेनानुत्थानादयुक्तमेतदित्यर्थः। एतच्च **कणादा**दिमतेन **सुगत**मतनिराकरणाय सविकल्पकं प्रत्यक्षं प्रमाणत्वेनाश्रित्योक्तम्। **अन्ये** त्ववस्तुकं चेदित्यनेन **माध्यमिक**दर्शन-मुपक्षिप्तमिति वर्णयन्ति। तथाहि—**माध्यमिका**नां दर्शने ग्राह्यग्राहकयोर्विकल्पमात्रसारत्वेन सांवृतत्वे ज्ञानस्यापि तदेकयोगक्षेमत्वेन सांवृतत्वमापतितमिति रूप-वेदना-संज्ञा-संस्कार-विज्ञानात्मकस्य स्कन्धपञ्चकस्य तुच्छत्वाच्छून्यतैव परमार्थः। सांवृतेन तु रूपेण स्कन्ध-पञ्चकस्य व्यवहारोपयोगित्वम्। यदुक्तम्

"तत्रार्थशून्यं[1] विज्ञानं योगाचाराः समाश्रिताः।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः॥" इति।

**तस्यापि** इति विज्ञानस्यापीत्यर्थः। **तदेतदाशङ्कितमवस्तुकं चेद्** इति। अवस्तुकं निर्वस्तुकं शून्यमेवेदं सर्वमित्यर्थः। तदुक्तम्—"शून्येभ्य एव धर्माः शून्याः प्रभवन्ति धर्मेभ्यः" इति। शून्येभ्यो धर्मेभ्यः पदार्थेभ्यः शून्याः धर्माः पदार्थाः प्रभवन्तीत्यर्थः। एतन्निराकरणार्थश्च ग्रन्थः **वितथं प्रत्यक्षं तत्त्ववृत्ति हीति** पूर्ववद् व्याख्येयः।

**ग्राह्यग्राहकभेदेन** इत्यादि। पूर्वं ये स्वच्छमेव ज्ञानप्रवाहमिच्छन्ति अभिमानमात्रनिर्मितस्तु ग्राह्यग्राहकसंविद्भेदोऽप्रकाशमान एवेति तेषां **योगाचारा**णां मतमवस्तुकं चेत्युपन्यस्तम्।

अधुना तु ये ज्ञानस्य बाह्यार्थनिरपेक्षस्यैव नीलाद्याकारप्रकाशस्वभावस्य निरंशस्य तत्तद्व्यावृत्तिपरिघटितं ग्राह्यग्राहकसंविद्भेदमुपजग्मुस्तेषां **योगाचारा**णां मतमुपन्यस्यते। यदुक्तम्

"सर्वार्थरूपताशुद्धि[2]र्ज्ञानस्य निरुपाश्रया।
ततोऽप्यस्य परां[3] शुद्धिमेके प्राहुररूपिकाम्॥" इति।

अत्रोत्तरार्द्धेन पूर्वोपदर्शितो **योगाचार**दर्शनभेदः प्रतिपादितः, पूर्वार्द्धेन त्वधुनातनः। तथाहि— अत्र यदाभासं प्रमेयं तद्यदित्यनीलाद्याकारताव्यावृत्त्या[त्य? ]व्यावृत्तिं[4] परिघटितः प्रमेयांशो दर्शितः। प्रमाणफलते पुनर्ग्राहकाकारसंवित्ती इति तु प्रमाणप्रमित्यंशौ **सौगत**दर्शने च व्यवस्थाप्यव्यवस्थापकभावेन प्रमाणफलभावो न तु जन्यजनकभावेनेति नैतच्चोदनीयम्। कथम्। एकस्वभावनीलाद्याकारप्रकाशस्वलक्षणपरमार्थयोर्ग्राहकाकारसंवित्त्योः[5] प्रमाणफलभाव

१. अर्थाकारशून्यम्॥ २. शुद्धिः॥ ३. अर्थाकाररहिताम्॥ ४. भ्याम्॥ ५. परमार्थे यो ग्राहका–ग.॥

इति। तथाहि—ग्राहकांशेन [1]कल्पनाव्यावृत्तिपरिघटितेन संविदंशस्तथाविधो व्यवस्थाप्यत इति व्यवस्थाप्यव्यवस्थापकभावात्मकस्य प्रमाणफलभावस्य न काचिद् हानिः।

**सर्वविज्ञानेषु चित्तवृत्तिनिरोधे** इत्यादि। यद्यपि नीलाद्याकारप्रकाशस्वभावज्ञान-स्वलक्षणनिष्ठतया व्यावृत्तिपरिघटितं प्रमाणप्रमेयप्रमित्यात्मकसंवित्तित्रयं [2]दर्श्यविकल्प्ययोरर्थयोरेकीकाराद्वक्तुं शक्यते, तथापि सांवृतपरमार्थत्वभेदान्वेषणे क्रियमाणे पूर्वोपदर्शित-**योगाचार**दर्शनानुप्रवेशप्रसङ्गः। तथाहि—तत्र ज्ञाने संविद्रूपत्वं च प्रतीयते ग्राह्यग्राहकांशौ च। तत्र यौ तौ ग्राह्यग्राहकांशौ तौ संविद्रूपादनन्यौ अन्यौ वा। अनन्यत्वपक्षे ग्राह्यग्राहकांशयोरभाव एव प्राप्तः संविद्रूपपरमार्थत्वात्। अन्यत्वे तु [3]सिद्धान्तहानिः। एवं ग्राह्यग्राहकांशाभ्यामव्यतिरिक्तत्वे संविदंशस्य तदभावप्रसङ्गो वाच्यः। ग्राह्यग्राहकांशयोरेव परमार्थत्वात्। अन्यत्वे तु सिद्धान्तहानिः। तदेवं नीलाद्याकारप्रकाशस्वभावज्ञानस्वलक्षणनिष्ठस्य रूपत्रितयस्य तत्त्वान्यत्वविकल्पाभ्यामनुपपद्यमानत्वात् स्वच्छज्ञानप्रवाहपरमार्थतावादि**योगाचार**दर्शनानुप्रवेशप्रसङ्गः। तस्यैव स्वच्छस्य ज्ञानप्रवाहस्य एकाग्रतासंस्कृते अनेकाग्रे च चित्तेऽनुवर्त्तमानत्वात्तन्निष्ठयोरेवैकाग्रतानेकाग्रतयोरनुभवात्। तदिदमुक्तं "सर्वविज्ञानेषु चित्तवृत्तिनिरोधे व्युत्थानावस्थायां च" इति। चित्तवृत्तिनिरोध इत्यनेन एकाग्रतासंस्कारो विज्ञानस्योक्तः। व्युत्थानावस्थायामिति तु विक्षिप्तता। एवं च चैतन्यस्यानुवर्त्तमानतया बाधशून्यत्वेन परमार्थत्वम्। व्यावृत्तानां तु रूपभेदानामागमापायित्वादसत्यत्वम्। अतश्च स्वच्छस्यैव विज्ञानस्य परमार्थता प्राप्ता। तत्र च पूर्वमेवातिथ्यं विहितम्। **प्रत्यक्षं तत्त्ववृत्ति हि** इति। **वासुबन्धवेऽपि मार्गे** इति **वैभाषिक**मते इत्यर्थः। तदेवं **वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिक**दर्शनेषु प्रत्यक्षलक्षणस्यानुपपत्तिरुक्ता। **वैभाषिक**दर्शने खलु "ततोऽर्थादिति केचन" इति प्रत्यक्षलक्षणम्। शिष्टेषु च दर्शनेषु "प्रत्यक्षं कल्पनापोढम्" इति तदुभयं निराकृतम्॥

ननु च प्रमाणलक्षणोपदर्शने प्रक्रान्ते प्रत्यक्षलक्षणदूषणमिदं व्यवहारानुपयोगित्वेन विषयशून्यतया चासम्बद्धम्। तथाहि—व्यवहारानुपयोगित्वेनेति लौकिके व्यवहारे हानोपादानात्मकेऽनुपयोगः। विषयशून्यतया चेति तु प्रक्रमभङ्गः, प्रमाणलक्षणोपदर्शनस्य हिं प्रक्रान्तत्वात्तद्विषयं सर्वमिह वक्तव्यम्। न च प्रमाणलक्षणनिष्ठतया [4]लक्ष्याव्याप्तिरलक्ष्यव्याप्तिर्वा अनेन निराक्रियते इति विषयशून्यमिदं प्रत्यक्षलक्षणदूषणमिति।

अत्रोच्यते। नासम्बद्धमिदं, सर्वतर्केषु प्रमाणलक्षणानां विचाराक्षमत्वदिशं दर्शयितु-

१. कल्पनापरि-ग. ॥ २. दृश्यं ग ॥ ३. स्वसिद्धान्त-ग. ॥ ४. लक्ष-ग. ॥

मेवमुक्तम् । सर्वतर्केषु प्रमाणानि स्वमनीषिकाचर्चितान्येव । तदवबोध्यानि पुनः प्रमेयाणि निसर्गसिद्धचैवासाराणीति प्रत्यक्षलक्षणं दूषितवान् ।

सम्प्रत्यनुमानलक्षणार्थमाह—**त्रिरूपाद्** इति । अनुमेयधर्माश्रये धर्मिणि सत्त्वमेवेति । अनेन पक्षधर्मत्वाख्यं लिङ्गस्य रूपं व्याख्यातम् । तच्चाग्निमान् पर्वतो धूमवत्त्वादित्यत्र धूमवत्त्वलक्षणे हेतौ विद्यते । धूमवत्त्वस्य पर्वतेऽयोगव्यवच्छेदेन सत्त्वात् । न हि पक्षीकृते पर्वते धूमवत्त्वेनायोगोऽस्ति । अतो धूमवत्त्वस्य पर्वते सत्त्वमेव । यस्य तु धर्मिणि सत्त्वं नास्ति तस्य न हेतुत्वम् । यथा अनित्यः शब्दश्चाक्षुषत्वादिति । न खलु शब्दस्य चाक्षुषत्वं, श्रावणत्वात् । धर्मनिष्ठतया सत्त्वे च विद्यमाने यस्यात्यन्तायोगव्यवच्छेदेनैव सत्त्वं न त्वयोगव्यवच्छेदेन तस्य न हेतुत्वम् । यथा अनित्याः परमाणवो गन्धवत्त्वादिति । अत्र हि पार्थिवाप्यतैजसवायवीयमनःपरमाणूनां पञ्चानां पक्षीकृतत्वात्, पार्थिवेष्वेव च परमाणुषु गन्धसमवायात् पक्षीकृते धर्मिणि अत्यन्तायोगव्यवच्छेदेन सत्त्वं न त्वयोगव्यवच्छेदेन, आप्यादिपरमाणुष्वयोगस्यापि विद्यमानत्वात् । तेन यस्यायोगव्यवच्छेदेन पक्षीकृते धर्मिणि सत्त्वं तस्य पक्षधर्मत्वमिति स्थितम् ।

**साध्यद्वारेण समाने पक्षे अनियमात् सत्त्वम्** इति । अनेन सपक्षे सत्त्वमिति यल्लिङ्गस्य द्वितीयं रूपं तत् प्रविभक्तम् । तच्च कृतकत्वधूमवत्त्वादेर्विद्यते । तथाहि—शब्दानित्यत्वे साध्ये यदा कृतकत्वं हेतुत्वेनोपादीयते तदा तस्य कृतकत्वस्य साध्येनानित्यत्वेन ये समाना घटादयः सपक्षाः [स]पक्षशब्दव्यपदेश्यास्तेषु सर्वेष्वेव विद्यमानता । न हि कश्चिदनित्यो यः कृतको न भवति । तेनास्य सर्वत्र सपक्षे सत्त्वम् । धूमवत्त्वस्य तु न सर्वस्मिन् सपक्षे वृत्तिः । प्रशान्ताङ्गारावस्थाग्न्युपेते देशे धूमवत्त्वस्याभावात् । तेन धूमवत्त्वं सपक्षैकदेशवृत्ति । न तु कृतकत्ववत् सपक्षव्यापकम् । यस्य च हेतोः सपक्षव्यापिता यश्च सपक्षैकदेशे वर्त्तते तयोरुभयोरपि साध्याव्यभिचारित्वाद्गमकतेत्युक्तं साध्यद्वारेण समाने पक्षेऽनियमात् सत्त्वमिति । न सपक्षे सत्त्वमेवेति सत्त्वस्य सपक्षविषयतया नियमः । तेन योऽपि सपक्षेऽयोगव्यवच्छेदेन सन्नेव कृतकत्वादिर्यस्य च धूमवत्त्वादेः सपक्षेऽत्यन्तायोगव्यवच्छेदेन विद्यमानता तस्योभयस्यापि हेतुत्वं संगृहीतं भवति । सपक्षसत्ताया अत्यन्तायोगव्यवच्छेदमात्रेणेष्टत्वात् अनन्तरोदीरितयोश्चोभयोरप्यत्यन्त[ा?]योगव्यवच्छेदस्य विद्यमानत्वात् । यत्रापि खल्वयोगव्यवच्छेदस्तत्राप्यत्यन्तायोगव्यवच्छेदो विद्यते । गर्भीकृतात्यन्तायोगव्यवच्छेदत्वादयोगव्यवच्छेदस्य । तदेवं सपक्षे सत्त्वमेवेति न नियमः । किं तु सपक्षे सद्भावमात्रमिति स्थितम् । यस्य तु सपक्षे सत्त्वं नास्ति तस्य सत्यपि पक्षधर्मत्वव्यतिरेकसद्भावे न हेतुत्वम् । यथा अनित्यः शब्दः श्रावणत्वादिति । श्रावणत्वं हि पक्षे विद्यत एव । नित्यानां च

पदार्थानां **सौगत**दर्शनेनाविद्यमानत्वान्नित्येभ्यो व्यावृत्तं सपक्षे तु घटादावनित्ये सद्भावोऽस्य नास्तीति न हेतुता ।

**साध्याभावे चासत्त्वमेव** इति । अनेन विपक्षाद् व्यावृत्तिरेवेति यल्लिङ्गस्य तृतीयं रूपं व्यतिरेकाख्यं तत् प्रदर्शयति । अत्र चायोगव्यवच्छेदेन विपक्षाद् व्यावृत्तिः प्रदर्शिता । तेन कृतकत्वधूमवत्त्वादेर्यथाक्रमं नित्येभ्यो वह्निशून्याच्च प्रदेशादयोगव्यवच्छेदेन व्यावृत्तेर्विद्यमानत्वाद्धेतुत्वम् । यस्य च पक्षधर्मत्वं सपक्षे च सत्त्वमस्ति न तु विपक्षाद् व्यावृत्तिस्तस्य न हेतुता । यथा—अनित्यः शब्दः प्रमेयत्वादिति । प्रमेयत्वस्य पक्षधर्मत्वसपक्षसत्त्वसद्भावेऽपि नित्यानामपि प्रमेयत्वेन नित्येभ्यो व्यावृत्तेरभावादहेतुत्वम् । यस्यापि च नित्येभ्योऽत्यन्तायोगव्यवच्छेदेन व्यावृत्तिरस्ति न त्वयोगव्यवच्छेदेन सोऽपि न हेतुर्यथा—अनित्यः शब्दःअमूर्तत्वादिति । अमूर्तत्वस्य पक्षधर्मत्वसपक्षसत्त्वेसद्भावेऽपि न विपक्षाद् व्यावृत्तिरयोगव्यवच्छेदेन अपि तु अत्यन्तायोगव्यवच्छेदेनेति न हेतुत्वम् । तथाहि **कणाद**दृष्ट्या नित्येभ्यः परमाणुभ्यो व्यावृत्तममूर्तत्वं न त्वाकाशादेर्नित्यादिति विपक्षैकदेशवृत्ति । तेनास्य विपक्षादयोगव्यवच्छेदेन व्यावृत्तिर्नास्तीति न हेतुता । तदेवं लिङ्गस्य तृतीयं रूपं व्याख्यातम् ।

एवं च हेत्वाभासौ असिद्धानैकान्तिकौ व्याख्यातौ । असिद्धस्य द्विप्रभेदत्वमुक्तं सर्वासिद्धभागासिद्धत्वभेदेन । चाक्षुषत्वं हि सर्वासिद्धम् । गन्धवत्त्वं तु भागासिद्धम् । अनैकान्तिकस्य द्वैविध्यम् असाधारणसाधारणभेदेन । असाधारणानैकान्तिकं श्रावणत्वम् । साधारणानैकान्तिकस्य द्वैविध्यं विपक्षव्यापिविपक्षैकदेशवृत्तिभेदेन । विपक्षव्यापि प्रमेयत्वं विपक्षैकदेशवृत्तित्वमूर्तत्वम् । तदेवमेतावसिद्धानैकान्तिकौ हेत्वाभासौ प्रपञ्चितौ । यस्य तु पक्षधर्मत्वे सति सपक्षे सत्त्वं नास्ति विपक्षे तु विद्यमानता स साध्यविपर्ययसाधनाद्विरुद्धो हेत्वाभासः । यथा शब्दनित्यत्वे साध्ये कृतकत्वम् । तद्धि नित्येष्वाकाशादिषु सपक्षेषु न विद्यते । अनित्येषु तु विपक्षेषु घटादिष्वस्ति । एवमेते त्रयो हेत्वाभासाः असिद्धोऽनैकान्तिको विरुद्धश्च । हेतू तु द्वौ । सपक्षव्यापकः सपक्षैकदेशवृत्तिश्च । सपक्षव्यापि कृतकत्वम् । सपक्षैकदेशवृत्ति धूमवत्त्वम् । एतेषामेव चानन्तरोपदर्शितानां हेतुहेत्वाभासानां सहस्रशो भेदाः संभवन्ति । ते ग्रन्थवैतत्यभीत्येह न प्रतन्यन्ते । एवं च यस्य हेतोस्त्रैरूप्यं समस्तव्यस्ततया नोपलब्धम् अथवा संशयितं यदि वा विपर्ययज्ञानेन विषयीकृतं तस्य हेत्वाभासत्वम् । तदेवं त्रिभिर्लक्षणैर्युक्ताल्लिङ्गात् ज्ञाततोपगृहीतात् यत् परोक्षार्थविषयं विज्ञानं तदनुमानम् । लिङ्गं पुनर्नियम्याविनाभूतं प्रयोजकमिति सर्वतर्केषु स्थितिः ।

**ज्ञाततोपगृहीताद्** इति । ज्ञाततया सम्यग्ज्ञानेनोपगृहीतात् स्वीकृतान्निर्धारित-

---

१. सपक्षत्व-क. ॥ २. नास्ति ग पुस्तके ॥

पक्षधर्मत्वान्वयव्यतिरेकादित्यर्थः । **लिङ्गं पुनः इति** । येन लीनोऽर्थो गम्यते प्रतिपाद्यते तल्लिङ्गम् । तावच्च तेन लीनोऽर्थो न प्रतिपादयितुं शक्यते यावत्तस्य तेन लीनेनार्थेन[1] नियम्येन स्वसन्निधानेऽवश्यम्भाविसन्निधितया[2] व्यवस्थाप्येनान्वयव्यतिरेकमूलमविनाभूतत्वं नास्ति । अतो नियम्याविनाभूतत्वं लिङ्गलक्षणम् । यद्येवं विवादास्पदीभूतः पुरुषविशेषो रागादिमान् असर्वज्ञो वा वक्तृत्वात् रथ्यापुरुषवदिति । वक्तृत्वस्य सर्वत्र पुरुषादौ रागादिमत्त्वासर्वज्ञत्वाविनाभूततया उपलब्धत्वाल्लिङ्गताप्रसङ्गादलक्ष्यव्याप्ति[3]लक्षणदोषः प्रसक्तः इत्याशङ्क्योक्तम्— **प्रयोजकम्**—इति ।

कश्चित् खलु प्रयोजकः पदार्थो भवति । कश्चित्त्वनुषङ्गी । यथा पक्तेरोदनः प्रयोजकः । आचामस्त्वनुषङ्गी । रथ्यापुरुषादौ च सांसारिकधर्माभ्यासो रागादिमत्त्वासर्वज्ञत्वाभ्यां व्याप्तिं प्रयुङ्क्ते । वक्तृत्वं तु तत्प्रयुक्तां व्याप्तिमुपजीवति । वक्तृत्वस्य सर्वज्ञत्वेन रागादिशून्यत्वेन च विरोधाभावात् । वक्तृत्वं च स्यात् सर्वज्ञत्वरागादिशून्यत्वे च भवेतां को विरोधः । अतश्च यथा आचामस्य ओदनप्रयुक्तपक्त्युपजीवित्वात्पक्तिं प्रत्यप्रयोजकत्वम्, एवं वक्तृत्वस्यापि सांसारिकधर्माभ्यासप्रयुक्तरागादिमत्त्वासर्वज्ञत्वव्याप्त्युपजीवित्वान्न रागादिमत्त्वासर्वज्ञत्वे प्रति प्रयोजकत्वम् । यदुक्तम्

"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥" इति ।

एवं च प्रयोजकत्वे सति नियम्याविनाभूतत्वं लिङ्गलक्षणमिति नास्त्यलक्ष्यव्याप्तिः । **तद्विदः** इति । अत्र येनैतल्लक्षणं कृतं तद्ग्रन्थे पूर्वोपक्रान्तो योऽसावन्वयव्यतिरेकमूलो व्याप्यव्यापकभावात्मा हेतुसाध्ययोः सम्बन्धस्तस्य तदिति प्रत्यवमर्शः । एवं चात्रान्वयव्यतिरेकौ ज्ञाततोपगृहीतावुक्तौ । नान्तरीयार्थदर्शनमिति तु पक्षधर्मता तथाविधैव प्रतिपादिता । यद्येवं पूर्वोक्तस्यैव त्रैरूप्यस्यात्र ज्ञाततोपगृहीतस्य लिङ्गनिष्ठत्वेनोपदर्शितत्वात् कः पूर्वस्मात् पक्षादस्य पक्षस्य विशेष इत्याशङ्क्योक्तम्—**एतच्च लक्षणद्वयं दर्शितम्** इत्यादि ।

पूर्वत्र वह्न्यादिज्ञानस्य फलभूतस्यानुमानतोक्ता, अनुमितिरनुमानमिति व्युत्पत्त्या । इह तु त्रैरूप्योपेतं यल्लिङ्गं धूमादिति तन्निष्ठस्य ज्ञानस्य पूर्वोपदर्शितायां संवित्तौ साधकतमस्यानुमानत्वमुक्तम् । अनुमीयतेऽनेनेत्यनुमानमिति । एवंविधस्य चाभिधानस्य फलं भावसाधनत्वे करणसाधनत्वे वा अनुमानशब्दस्य तथा प्रमाणसामान्यार्थाभिधायिनश्च प्रमाणशब्दस्य नास्ति विशेष इति तद्विचारे वृथाभिनिवेशस्तार्किकाणामिति ख्यापनम् ।

१. धूमस्य ॥ २. नियम्यस्य ॥ ३. प्रसङ्गाद्यलक्षा व्याप्ति-क. ॥

तथाहि केचित् प्रमाणलक्षणमाहुः

"अर्थोपलब्धिर्व्यवसायिनीयं
यतो भवत्यव्यभिचाररूपा ।
तन्मातृमेयव्यतिरिक्तमाहुः
प्रमाणमार्याः सुविवेचितार्थाः ॥" इति ।

अत्रार्थोपलब्धिरिति व्यवसायिनीति अव्यभिचाररूपेति त्रिभिः पदैर्यथाक्रममज्ञान-संशय-विपर्ययलक्षणाप्रामाण्यनिरासः । यदुक्तम्

"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।" इति ।

मातृमेयव्यतिरिक्तमिति तु कर्तृकर्मणोः सत्यप्येवंविधप्रमितिहेतुत्वे प्रमाणताऽपाकृता । तेन असंशयविपर्ययस्वभावा अर्थोपलब्धिर्यस्मात् कर्तृकर्मविलक्षणादुपजायते व्यवस्थाप्यते वा तत्प्रमाणमिति साधकतमप्रमाणवादिदर्शनम् ।

फलभूतप्रमाणवादिनस्तु फलभूतामर्थोपलब्धिमनन्तरोदितविशेषणद्वितयविशिष्टां प्रमितिः प्रमाणमिति व्युत्पत्त्या समगिरन्त । उभयोरपि च पक्षयोरर्थगतः शब्दगतो वा विशेषो नास्ति । फलेन करणस्याक्षेपात् । करणस्य च फलाविनाभावित्वादर्थगतविशेषाभावः । तदिदमुक्तं ज्ञानप्रमाणवादिना—अपीत्यादिना । शब्दगतविशेषाभावस्तु एकत्र प्रमाप्रमाण-मित्यादिनोक्तः ।

**विवादास्पद**—इति । विचारगोचरीभूतो यो धर्मस्तेन कृतविशेषणः सविशेषणो धर्मी पक्षः । तस्य निर्देशो वचनरूपः प्रतिज्ञाशब्दवाच्यः ।

अस्या दोषान् दर्शयितुमाह—**तदर्थहेतुसिद्धान्त**—इत्यादि । इहाग्निमत्त्वादिर्धर्मो यस्य पर्वतादेस्ताद्रूप्येण तद्विपर्ययतो वा दृढेन प्रमाणेन न गोचरीकृतस्तत्रानुमानस्य प्रवृत्तिः । यत्र खलु प्रत्यक्षादिना ताद्रूप्यं परिगृहीतं तत्रानुमानस्य वैयर्थ्यम् । प्रमिते वस्तुनि प्रमाणाकाङ्क्षाया अभावात् । अतस्तत्र प्रसिद्धधर्मत्वं नाम प्रतिज्ञादोषः । यत्र च सिषाधयिषितधर्मवैपरीत्यपरिच्छेदः प्रमाणान्तरेण तत्रापि दृढतरप्रमाणापहृतविषयत्वादनुमानेन साध्यसिद्धिर्न क्रियते ।

सिषाधयिषितधर्मवैपरीत्यपरिच्छेदश्च प्रत्यक्षानुमानशब्दजन्यत्वात् त्रिविधः । तत्र प्रत्यक्षजन्ये[3] प्रत्यक्षेण बाध्यमानत्वात् प्रत्यक्षबाधिनी प्रतिज्ञा । अनुमानजन्ये तु हेतु-विरोधिनी । शब्दविरोधस्तु द्विधा । तथाहि—स्वात्मना सर्वैश्च यः प्रमाणत्वेनाभ्युपगतः शब्दस्तत्समाश्रयेण शब्दस्य द्वैविध्यम् । सर्वाङ्गीकृतप्रामाण्यशब्दैर्विरोधे सर्वागमविरोधिनी ।

१. करणे ॥ २. अग्निमत्त्वेन ॥ ३. धर्मवैपरीत्यपरिच्छेदे ॥ ४. आगम ॥

यस्तु स्वाभ्युपगतः शब्दस्तस्य द्विभेदता। तात्कालिकेन रूपेण प्रमाणत्वेनाङ्गीकृतत्वादेको भेदः। कालान्तराङ्गीकृतप्रामाण्यत्वादपरः। तत्र तात्कालिकेन रूपेण प्रतिज्ञा प्रामाण्ये-नाङ्गीकृतेति तद्विरोधे तदर्थविरोधित्वं दोषः। कालान्तराङ्गीकृतप्रामाण्यशब्दविरोधे तु सिद्धान्तविरोधिनी। तदुक्तम्

"त्रिधा शब्दविरोधस्तु स्यात् प्रसिद्धिविरोधतः।
प्रतिज्ञापूर्वसञ्जल्प-सर्वलोकप्रसिद्धितः॥" इति।

प्रसिद्धिविरोधत इत्यनेन स्वसिद्धान्तविरोधिनी। प्रतिज्ञापूर्वेत्यादिना च तदर्थ-विरोधिनी सर्वागमविरोधिनी च प्रदर्शिता। एवमेते षट् प्रतिज्ञादोषाः। **साधकबाधक-प्रमाणाभ्यामनाघ्रातः** इति। साधकप्रमाणाघ्रातत्वे प्रसिद्धधर्मत्वं नाम प्रतिज्ञादोषः। बाधकप्रमाणाघ्रातत्वे त्वन्ये पञ्च। ते च पूर्वमुपदर्शिताः।

अथ हेतुलक्षणार्थमाह—**सन् द्वयोः** इति। प्रतिज्ञायाः प्रक्रान्तत्वादेकदेशभूतो धर्मी सम्बध्यतेऽत्र। तथाहि—द्वयोरिति सप्तम्या द्वित्वसङ्ख्याया विशेषशून्याया उपात्तत्वा-द्विशेष्याकाङ्क्षायां पूर्वोदितप्रतिज्ञालक्षणपरामर्शात् प्रतिज्ञाशब्दाभिधेयं यद्वाक्यं तद्वाच्यस्य साध्यधर्मविशिष्टस्य धर्मिणः पक्षशब्दाभिधेयस्य एकदेशभूतो यो धर्मी स लक्षितलक्षणया गृह्यते। प्रतिज्ञया स्ववाच्यभूतस्य पक्षस्य लक्षितत्वात्, पक्षेण च स्वात्मैकदेशभूतस्य धर्मिणः।

**द्वयोः प्रतिज्ञयोः सन्** इति किमुक्तं भवति। प्रतिज्ञाशब्दवाच्यपक्षैकदेशभूते धर्मिणि सन्नित्यर्थः। ननु मुख्य एव साध्यधर्मविशिष्टो धर्मी पक्षोऽत्र कस्मान्न परिगृह्यते। तदेकदेशः किमिति लक्षणया संश्रितः। तदेकदेशपरिग्रहेऽपि वा साध्यधर्मस्य वह्न्यादेः धर्मिणश्च पर्वतादेः सन्निधौ किमिति धर्म्येव लक्षणया परिगृह्यते न तु साध्यधर्म इति।

अत्रोच्यते। धर्मधर्मिसमुदायः साध्यधर्मश्च न योज्यतेऽनिष्टापत्तेः। यदि धर्मधर्मि-समुदाय इति साध्यधर्मविशिष्टो धर्मी पक्षत्वेनाभिधीयेत, ततो "नागृहीतविशेषणा विशेष्ये बुद्धिः" इति न्यायात् साध्यधर्मापरिग्रहे साध्यधर्मविशिष्टता धर्मिणो वक्तुं न शक्येत। अत-श्चावश्यं साध्यो धर्मो वह्न्यादिः स्वात्मविशिष्टपर्वतादिधर्मिप्रतिपादनार्थत्वेन पूर्वं ग्रहीतव्यः। तस्मिंश्च गृहीते धूमस्य पक्षधर्मता परिगृह्येत। एवं चानुमानवैफल्यलक्षणमनिष्टं प्राप्नोति। पूर्वमेव वह्न्यादेर्धर्मस्य परिगृहीतत्वात्। एवं साध्यधर्मेऽपि पक्षशब्देन लक्ष्यमाणेऽनुमान-वैफल्यलक्षणमनिष्टं योज्यम्। तदेवमनुमानवैफल्योपपत्तेः साध्यधर्मविशिष्टस्य धर्मिणस्तथा साध्यधर्मस्यापरिग्रहात् पारिशेष्याद्धर्मिण एव पर्वतादेः पक्षशब्देन ग्रहणम्।

ननु द्वयोरिति किमर्थमुपात्तम्। यावता प्रतिज्ञावाच्यपक्षैकदेशधर्मिधर्मता द्वयोरित्ये-तस्योपादानमन्तरेण प्रकरणादेव लभ्यते। उपात्तमपि चैतन्न कञ्चन स्वमर्थमवगमयति।

१. पूर्वकाले॥ २. एकदेशः प्रतिज्ञाया एव॥

धर्मिणो द्वित्वानुपपत्तेरित्याशङ्क्य वक्ष्यति—**द्वयोरिति तु स्वयमेव व्याख्यातुमाह** इति। **अन्वयव्यतिरेकौ** इति । अन्वयोऽनुगमः, अन्यत्रापि पक्षसदृशे साध्यधर्मयुक्ते विद्यमानता। व्यतिरेकस्तु साध्याभावेऽभावः। धर्मिणि सन् द्वयोः पक्षयोर्यः[1] सिद्धः स हेतुरित्यर्थः इति। धर्मिणि सन्नित्येतदेव व्याख्यातं द्वयोः पक्षयोर्यः सिद्ध इति । द्वयोः धर्मिणोर्यः सिद्ध इत्यर्थः । तदेवं स्वपक्षपरपक्षयोर्यः सिद्धः स सन् द्वयोरित्यभिधीयते इति । **ननु च** इत्यादि । "साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृतः" इत्याचार्यदिङ्नागे[2]प्रणीतं पक्षलक्षणम् । अत्र साध्यत्वेनेप्सित इति प्रसिद्धसाध्यधर्मोपेतस्य धर्मिणः पक्षत्वं निराकृतम् । विरुद्धार्थानिराकृत इति तु प्रत्यक्षानुमानशब्दविरुद्धानां पक्षत्वनिराक्रिया। ते च सर्वे पूर्वं प्रतिज्ञाभासप्रसङ्गेनोदाहृताः ।

**फलभेदाद्** इति । ननु फलभेदादिति न ज्ञायते। किं तत् फलं यस्य भेदः इत्याशङ्क्योक्तम्—**पक्षार्थौ न भिद्यत** इत्यादि[3]। वादाधिकरणतया प्रतिज्ञावाक्यस्योपादानम्। वादे च वादिप्रतिवादिनोर्भावात् वादिप्रतिवादिनोर्यदभीष्टं तत् फलशब्देनात्राभिधीयते। यदुक्तम्—"इष्टलक्षणत्वात् फलस्य" इति। वादिनश्च पक्षस्य सिद्धिरभिप्रेता, प्रतिवादिनस्तु तद्दुष्टिः । एवं चैकस्यैव पक्षशब्दलक्षितस्य धर्मिणो वादिप्रतिवादिभेदेन सिद्धिदुष्टिलक्षणधर्मास्पदत्वाद्भेदोपचारो द्वयोरिति[4] ।

ननु च यथान्यैस्तार्किकैः पक्षधर्मतामात्रमभिहितं तद्वदिह कस्मान्नाभिधीयते। किमर्थं सन् द्वयोरित्युक्तमित्यभिप्रायेणाशङ्कते **किं प्रयोजनमेवमुक्तेन** इति[5] । तत्र परिहारः परपक्षानुपादान इत्यादि । **शब्दाभिव्यक्तिवादिनं प्रति** इति मीमांसकं प्रतीत्यर्थः । स हि अकारादीनां वर्णानां देशकालानवच्छेदाद् व्यापित्वेन नित्यत्वेन चावस्थितानां प्रयत्नोदीरितैर्वायवीयैः संयोगविभागैर्ध्वनिनादादिशब्दवाच्यैरभिव्यक्तिः क्रियत इति मन्यते ।

**स हेतुरित्यर्थ** इति। साधयितुमिष्टो यो धर्मस्तदनुगमने यः सदृशः पक्षः स सपक्षः । तत्र च यः सन् स हेतुरित्यर्थः । **संवृतिबुद्धिरभिप्रेता** इति[6] । यदुक्तम्

"पररूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥
तया संवृतनानात्वाः संवृत्या भेदिनः स्वयम् ।
अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥

---

१ द्वयोर्यः सिद्धः क. ॥ २. मूले सर्वत्र दिग्नाग इति पाठः ॥ ३. विप्रतिपत्ति ॥ ४. उपचारस्योल्लेखो द्वयोरिति ॥ ५. मूले-शङ्कयते, -मेव युक्तेनेति पाठौ ॥ ६. यथाक्रमम् ॥ ७ अभिप्रेतत्ववशात् ॥ ८. अग्निमत्त्वादिना ॥

तस्या अभिप्रायवशात् सामान्यं सत् प्रकीर्तितम् ।
तदसत् परमार्थेन यथा संकल्पितं तया ॥"

**भावानाश्रित्य भेदिनः** इति । व्यावृत्तानि स्वलक्षणान्याश्रित्य धीरेकार्थप्रतिभासिन्युत्पद्यते । यया स्वरूपेण स्वाकारेणैकेन रूपेण पररूपं परस्परव्यावृत्तं स्वलक्षणं संव्रियते प्रच्छाद्यते । तया धिया किंविशिष्टया, संवृत्या संव्रियतेऽनया स्वलक्षणमिति कृत्वा । **संवृतनानात्वाः** स्थगितनानात्वाः । स्वयं भेदिनोऽपि केनचिद्रूपेण विजातीयव्यावृत्त्युपकल्पितेन गोत्वादिरूपेणाभेदिन इवाभान्ति संसृष्टा इव । तस्या बुद्धेरभिप्रायवशात् एकाकाराध्यारोपवशात् सामान्यं सदिति प्रकीर्त्तितम् । बुद्ध्यारोपित एवाकारः सामान्यमुक्तमिति यावत् । यथा तया बुद्ध्या संकल्पितं समारोपितं तथा तत्सामान्यमसत् ।

**परमार्थेन** इति । इत्थंभूताच्च सामान्यादन्योऽप्यसौ घटादिः सपक्ष एक इवैकार्थक्रियाकारी चोपचर्यत इत्यर्थः । तथाहि—सैव संवृतिबुद्धिर्दृश्यस्वलक्षणगतभेदतिरस्कारेण प्रवर्त्तमाना तैः स्वलक्षणैर्निर्विकल्पकविज्ञानद्वारेणोपजन्यत इति तेषां भिन्नानां स्वलक्षणानामेका अर्थक्रिया, तत्कारित्वेन च तानि स्वलक्षणानि एकार्थक्रियाकारीणि । न त्वत्र वाहदोहादिलक्षणा एका अर्थक्रिया । तस्याः प्रतिस्वलक्षणं भिन्नत्वात् । संवृतिबुद्धिस्तु स्वलक्षणगतभेदतिरस्कारादर्थक्रियैकेति भणितुं शक्यते । वाहदोहादीनामपि तद्द्वारेणैकता । अतश्च संवृतिबुद्ध्यात्मकसामान्यसंश्रयेण साध्यधर्मानुगमात् पक्षसपक्षयोः सादृश्यमुक्तं लक्षणशेषमिति । पूर्वोदाहृतस्य रागादिमत्त्वसाधनायोपात्तस्य वक्तृत्वादेरप्रयोजकस्य हेतोः पक्षधर्मत्वान्वयव्यतिरेका विद्यन्ते । तथाहि—विवादास्पदीभूतेषु पुरुषेषु वक्तृत्वमुपलभ्यत इति पक्षधर्मत्वमस्यास्तीति । रथ्यापुरुषादौ च रागादिमत्त्वसहचरितं वक्तृत्वं दृष्टमित्यन्वयसद्भावः । कुड्यादौ च रागादिशून्ये वक्तृत्वस्यानुपलब्धेर्व्यतिरेकोऽप्यस्ति । न चैतस्य रागादिमत्त्वादिं प्रति गमकत्वं, सांसारिकधर्माभिनिवेशित्वप्रयुक्तव्याप्त्युपजीवित्वेन स्वतस्तस्य रागादिमत्त्वादिव्याप्तिं प्रत्यप्रयोजकत्वात् । अतो यदेतत् त्रैरूप्यं लिङ्गलक्षणमुक्तं तस्यावश्यम्भावेनोपस्कारको लक्षणशेषो वक्तव्यः । तं च दर्शयितुम् "इति द्वयैकानुगतिव्यावृत्ती लक्ष्मसाधुता" इत्युक्तम् ।

**पूर्वोक्तया भङ्ग्या** इति अन्वयव्यतिरेकात्मिकयेत्यर्थः । **द्वयस्य साध्यस्य हेतोश्च** इति । द्वयस्य ग्रहणेन साध्यं हेतुश्च प्रकृतं यथोपदर्शितपाठक्रमोपेततया लक्ष्यत इत्यर्थः । **एकत्र हेतौ साध्ये च** इति । अनेन एकग्रहणं यथोपवर्णितपाठक्रमहेतुसाध्योपलक्षणायोपात्तमिति दर्शयति। साध्ये इति तु हेतुव्यावृत्त्यन्यथानुपपत्त्या मुख्यार्थबाधायां साध्यशब्देन विपरीतलक्षणया साध्याभावो लक्ष्यते । **ये अनुवृत्तिनिवृत्ती** इति । साध्यस्य हेतौ अनु-

१. भेदे ग ॥ २. –मत्त्वादिसा– ग. ॥

वृत्तिः । हेतौ सति साध्यस्य सद्भाव एव । यदुक्तम्—"व्यापकस्य तु[1] तत्र भाव एव" इति । तत्र व्याप्ये धूमादौ व्यापकस्य वह्न्यादेर्भाव एव न त्वभाव इति व्यापकेन वह्न्यादिना व्याप्यस्य धूमादेरयोगो व्यवच्छिन्न इति व्यापकधर्मतया अयोगव्यवच्छेदेन व्याप्तिरुक्ता । तदेवं साध्यस्य हेतावनुवृत्तिरुक्ता । हेतोस्तु साध्याभावे निवृत्तिरेव । यदुक्तम्—"व्याप्यस्य तत्रैव भाव" इति । व्याप्यस्य धूमादेस्तत्रैव वह्न्यादावेव भावो न तु वह्न्यादिशून्य इत्यन्य-योगव्यवच्छेदेन व्याप्यधर्मत्वेन व्याप्तिः प्रदर्शिता । एतदेव स्पष्टयति **हेतुधर्म**—इत्यादिना । न हेतोः साध्येन साहचर्यमात्रमन्वयः किन्तु साध्याविनाभावात्मा यत्र यत्र धूमस्तत्र तत्राग्नि-रित्येवंरूपो नियमस्वभावः । एवंविधश्च नियमस्वभावोऽन्वयो व्यतिरेकमन्तरेण न प्रकल्प्यते[2] इति आक्षिप्तव्यतिरेकोऽन्वयो द्रष्टव्यः । तथाहि—यदा धूमसत्ता वह्निसत्त्व एव भवति न तु वह्निसत्त्वाभावे तदा वह्निः सत्त्वाभावे धूमसत्त्वाच्च्युतः सन् धूमाभावेन व्याप्यते । यत्र वह्निर्नास्ति तत्र धूमो नास्त्येवेति । तेन नियमात्मनोऽन्वयस्याक्षिप्तव्यतिरेकता । तदुक्तम्

"धूमभावेऽग्निभावेन व्याप्तेऽनै[3]ग्निस्तत[4]श्च्युतः ।
अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ॥" इति ।

यथा च नियमात्मनोऽन्वयस्य पूर्वोपदर्शितप्रक्रियया आक्षिप्तव्यतिरेकता तथा व्यति-रेकस्यापि नियमगर्भीकारेण प्रवर्त्तमानस्याक्षिप्तान्वयता द्रष्टव्या । तथा हि यत्र वह्निर्नास्ति तत्र धूमो नास्त्येवेति । यदा वह्न्यभावो धूमाभाव एव भवति न तु धूम[5]सद्भावे तदा धूम-भावोऽग्न्यभावाच्च्युतः सन् अग्निना व्याप्यते इति व्यतिरेकेण नियमवताऽन्वयस्याक्षेपो लभ्यते । यत्र यत्र धूमस्तत्र तत्राग्निरेवेति । यदुक्तम्

"तथाऽनग्नावधूमेन व्याप्ते धूमस्तत[6]श्च्युतः ।
अनन्यत्रावकाशत्वाद् व्याप्यते ध्रुवमग्निना ॥" इति ।

नन्वेवमन्वयव्यतिरेकयोर्नियमवत्त्वे सत्येकतरोपादानेनैवानुमानस्य कृतकृत्यत्वादुभयो-पादानस्य वैयर्थ्यम् । सत्यम् । प्रपञ्चार्थत्वमुभयोपादानस्य तार्किकैरुक्तम् । तच्च ग्रन्थ-विस्तरभयान्नेह प्रतन्यते । तदेवं वक्तृत्वादि च स्याद्रागादिमत्त्वादि च न भवेदिति वक्तृत्वादे-र्हेतो रागादिमत्त्वादिना आक्षिप्तव्यतिरेकस्यान्वयस्याभावात् । तथा यत्र रागादिमत्त्वं नास्ति तत्र वक्तृत्वाद्यपि नास्तीति व्यतिरेकेणान्वयस्याऽनाक्षिप्तत्वाद्वक्तृत्वादेरप्रयोजकत्वेनाऽगमकत्व-मिति स्थितम् । तदिदमुक्तम्—"इति द्वयैकानुगतिव्यावृत्ती लक्ष्मसाधुता" इति । द्वयस्य साध्यस्य हेतोश्च यथाक्रममेकत्र हेतौ साध्याभावे च ये अनुगतिव्यावृत्ती अन्वयव्यतिरेकौ

---

१. ग पुस्तके नास्ति ॥ २. प्रकल्पत ग. ॥ ३. अग्नेरभावः ॥ ४. धूमभावाद् ॥ ५. धूमस्य ॥ ६. अग्न्यभावात् ॥

अनन्तरोदीरितवर्त्मना प्रत्येकं नियमगर्भीकारेणोपदर्शितौ ते त्रैरूप्यं हेतुलक्षणभूतमुपस्कुर्वाते इत्यर्थः ।

तदेवमयं हेतुस्त्रिलक्षणः प्रविभक्तः । तद्विपर्ययेण तु हेत्वाभासा भवन्ति । तत्र एक-लक्षणत्वे त्रयो, लक्षणद्वितययोगित्वे तु त्रय इति षट्, लक्षणत्रितयवैकल्ये तु एक इत्येवं सप्त हेत्वाभासभेदाः । तत्र यस्य पक्षधर्मत्वमेव विद्यते न तु सपक्षसत्त्वविपक्षव्यावृत्ती स विरुद्धो नाम हेत्वाभासः । यथा नित्यः शब्दः कृतकत्वादिति । कृतकत्वस्य हि नित्यत्वे साध्ये शब्देऽविद्यमानत्वात् पक्षधर्मत्वमेवास्ति । न तु सपक्षे आकाशादौ नित्ये विद्यमानता। नापि च विपक्षाद् घटादेरनित्याद् व्यावृत्तिः । एवं चायं सिषाधयिषितनित्यत्वविपरीतेना-नित्यत्वेन व्याप्तत्वात्तदेव साधयन् विरुद्धो नाम हेत्वाभासो भवति ।

यस्य तु सपक्ष एव सत्त्वं न तु पक्षधर्मत्वविपक्षव्यावृत्ती विद्येते सोऽसिद्धसाधारणा-नैकान्तिको नाम हेत्वाभासः । यथा नित्यः शब्दो मूर्त्तत्वादिति । मूर्त्तत्वस्य हि शब्दनित्यत्वे साध्ये शब्देऽविद्यमानत्वात् पक्षधर्मत्वं नास्ति । शब्दस्यामूर्त्तत्वात् । विपक्षेभ्यश्चानित्येभ्यो घटादिभ्यो व्यावृत्तिर्नास्ति, घटादीनां मूर्त्तत्वात् । सपक्षे तु **कणाद**दृष्ट्या नित्ये परमाण्वादौ अस्य सद्भावः । तेनायं पक्षधर्मत्वाभावादसिद्धः सपक्षविपक्षयोश्च विद्यमानत्वात् साधारणा-नैकान्तिकः । अतोऽस्यासिद्धत्वं साधारणानैकान्तिकत्वं च ।

यस्य तु विपक्षव्यावृत्तिरेवास्ति न तु पक्षसपक्षयोः सद्भावः सोऽसिद्धाऽसाधारणः । यथा नित्यः शब्दः अप्रमेयत्वात्[१] इति शब्दस्य प्रमेयत्वेनाप्रमेयत्वाभावात् शब्दे अप्रमेयत्वम-सिद्धं, सपक्षे च नित्ये परमाण्वादावप्रमेयत्वं नास्ति । परमाण्वादेः प्रमेयत्वात् विपक्षाच्च-नित्याद् घटादेरस्य व्यावृत्तिः । घटादेरनित्यस्य प्रमेयत्वात् । तदेवमयं पक्षधर्मत्वाभावादसिद्धः । सपक्षविपक्षयोश्चाभावादसाधारणः । अतोऽयमसिद्धासाधारणः । तदेवमेकलक्षणयोगे सति त्रयो हेत्वाभासाः प्रदर्शिताः ।

लक्षणद्वितययोगित्वे तु यस्य पक्षधर्मत्वं सपक्षे सत्त्वं चास्ति न तु विपक्षाद् व्यावृत्तिः स साधारणानैकान्तिको नाम हेत्वाभासः । यथा अनित्यः शब्दः अमूर्त्तत्वादिति । शब्द-स्यामूर्त्तत्वात् पक्षधर्मत्वमत्रास्ति । सपक्षस्य च बुद्ध्यादेरनित्यस्यामूर्त्तत्वात् सपक्षे सत्त्वं विद्यते । विपक्षात्तु नित्यादाकाशादेरमूर्त्तत्वस्य व्यावृत्तेरभावः । तेनायं पक्षसपक्षविपक्षेषु त्रिषु वर्त्त-मानत्वात् साधारणानैकान्तिकः ।

यस्य तु पक्षधर्मत्वविपक्षव्यावृत्ती विद्येते न तु सपक्षे सत्त्वं तस्यासाधारणानैकान्ति-कता । यथाऽनित्यः शब्दः श्रावणत्वादिति । श्रावणत्वं शब्द एव विद्यते । न तु सपक्ष-विपक्षयोरनित्यनित्ययोरिति असाधारणानैकान्तिकत्वम् । यद्यपि च **कणाद**दृष्ट्या शब्दत्वादेः

१. क-ख-पुस्तकयोर्नास्ति ।।

सामान्यस्य नित्यस्य श्रावणतेति न विपक्षे असद्भावः, तथापि **सौगत**दृष्ट्या एतस्योदाहरणस्योक्तत्वाददोषः। न हि **सौगतानां** नित्यं पारमार्थिकं सामान्यमस्ति, सामान्यव्यवहारस्य सांवृतत्वात्। तदेवं यस्य पक्षधर्मत्वमेवास्ति न तु सपक्षविपक्षयोः सत्त्वं सोऽसाधारणानैकान्तिको हेत्वाभास उक्तः।

यस्य पुनः सपक्षे सत्त्वं विपक्षाच्च व्यावृत्तिरित्येतल्लक्षणद्वितयमस्ति न तु पक्षधर्मत्वं सोऽसिद्धो नाम हेत्वाभासः। यथा अनित्यः शब्दः चाक्षुषत्वादिति। चाक्षुषत्वं हि घटादावनित्ये विद्यते। नित्येषु च परमाण्वादिषु अस्मदाद्यपेक्षया चाक्षुषत्वं नास्तीति चाक्षुषत्वं सपक्षे सद् विपक्षाच्च व्यावृत्तम्। पक्षधर्मत्वं त्वस्य नास्ति शब्दस्याचाक्षुषत्वात्। तेनास्यासिद्धता। **सौगत**दृष्ट्या चायं प्रयोग इति नैतच्चोदनीयम्। सामान्यस्य घटत्वादेर्नित्यस्य चाक्षुषत्वाद्[1] विपक्षाद् व्यावृत्तिरस्य नास्तीति असिद्धसाधारणोऽयं हेत्वाभास इति। **सौगतानां** घटत्वादेः सामान्यस्य कल्पितत्वेन नित्यत्वाभावात्। तदेवं लक्षणद्वितययोगित्वे त्रयो हेत्वाभासाः प्रदर्शिताः। एते च पूर्वैरेकलक्षणयोगिभिस्त्रिभिः सह सङ्कलिताः षड् भवन्ति।

यस्य तु त्रैलक्षण्यं नास्ति स सप्तमो हेत्वाभासः। यथा अनित्यः शब्दः अकृतकत्वादिति। अस्य हि पक्षधर्मत्वं नास्ति शब्दस्य कृतकत्वात्। एवमनित्येषु घटादिष्वविद्यमानत्वात् सपक्षे सत्त्वस्याभावः। विपक्षाणां तु नित्यानामाकाशादीनामकृतकत्वाद्विपक्षाद् व्यावृत्तिरस्य नास्ति। तेनात्र त्रैलक्षण्यस्याभावः। तेनायं पक्षधर्मत्वस्याभावादसिद्धः। सपक्षविपक्षयोश्च यथाक्रममसत्त्वात् सत्त्वाच्च विरुद्ध इति असिद्धविरुद्धो नाम हेत्वाभासः।

अथ दृष्टान्तः। साध्यसाधनधर्मयोगी यः सिद्धपदार्थविशेष इति। यथा पर्वतादौ धूमवत्त्वादिना हेतुना वह्निमत्त्वादौ साध्ये महानसादिः। तत्र हि साध्यसाधनाभ्यां यौ तुल्यौ[2] धर्मौ अग्निमत्त्वधूमवत्त्वादिलक्षणौ तत्सम्बन्धो वादिप्रतिवादिनोः प्रसिद्धः। अतोऽसौ साधर्म्येण दृष्टान्तः। **यस्तु तद्विरहेण** इत्यादि। यथा पूर्वस्मिन्नेव विषये जलादिः। तस्य हि साध्यसाधनविपर्यये[3] वह्निमत्त्वधूमवत्त्वादिविपर्ययेण[4] सिद्धिः। तत्र खलु वह्निमत्त्वाद्यभावो धूमवत्त्वाद्यभावेन व्याप्यः सिद्धः। अतोऽसौ साध्यसाधनविपरीतधर्मयोगाद्वैधर्म्येण दृष्टान्तः।

**दृष्टान्ताभासः पुनः** इत्यादि। अनेन "तदाभस्तदवृत्तितः" इति व्याख्यातम्। तत्र साध्यस्यैवावर्त्तमानत्वात् साध्यविकलः। यथा शब्दानित्यत्वेऽमूर्त्तत्वेन हेतुना साध्ये आकाशम्। तत्र हि अमूर्त्तत्वमस्ति, न त्वनित्यत्वम्। साधनधर्मस्य त्ववृत्तेः साधनविकलः। यथा पूर्वस्मिन्नेव हेतौ घटः। तत्र हि अनित्यत्वं विद्यते। नत्वमूर्त्तत्वम्। साध्यसाधनविकलस्तु परमाणुः। अमूर्त्तत्वानित्यत्वयोरभावात्। एवमेते साधर्म्यदृष्टान्ताभासास्त्रयो दर्शिताः।

---

१. वैशेषिकाणां मते सामान्यस्य चाक्षुषत्वम्॥ २ दृष्टान्तगतौ॥ ३. अभावे॥ ४. अभावेन॥

एवं वैधर्म्यदृष्टान्ताभासास्त्रयो भवन्ति। साध्याव्यावृत्तः साधनाव्यावृत्त उभयाव्यावृत्तश्चेति। साध्याव्यावृत्तः पूर्वस्मिन्नेव हेतौ घटः। तत्र हि अमूर्तत्वमेव नास्ति, न त्वनित्यत्वस्याभावः। घटस्यानित्यत्वात्। साधनाव्यावृत्तमाकाशम्। ततो ह्यनित्यत्वं व्यावृत्तं न त्वमूर्त्तत्वम्। उभयाव्यावृत्तं बुद्ध्यादि। तस्यामूर्त्तत्वाद् अनित्यत्वाच्च।

लक्षणान्तरमाह इति। पूर्वं साधर्म्यवैधर्म्यदृष्टान्तयोः साध्यसाधनधर्मसम्बन्धतद्विपर्ययौ लक्षणत्वेनोक्तौ। एवं चाश्रीयमाणे विवादास्पदीभूतपुरुषनिष्ठतया रागादिमत्त्वसाधनाय वक्तृत्वादौ हेतुतयोपादीयमाने, रथ्यापुरुषस्य कुड्यादेश्च यथाक्रमं साधर्म्यवैधर्म्यदृष्टान्तताप्रसङ्गः। अत्र खलु यथाक्रमं साध्यसाधनयोग तद्विपर्ययौ विद्येते। न चात्र साधर्म्यवैधर्म्यदृष्टान्तत्वं, साध्यसाधनयोस्तद्विपर्यययोश्च योगेऽपि व्याप्तिप्रदर्शनाक्षमत्वात्। न खलु वक्तृत्वादे रागादिमत्त्वाद्यभावेन सह कश्चिद्विरोधो विद्यते। यतो[1] वक्तृत्वादिना रागादिमत्त्वादिशून्येष्वभवता रागादिमत्त्वं साध्येत। अतोऽत्र व्याप्तिप्रदर्शनक्षमत्वाभावात् सत्यपि साध्यसाधनधर्मतद्विपर्यययोगित्वे साधर्म्यवैधर्म्यदृष्टान्तत्वं नास्तीत्यवश्यम्भावेन व्याप्तिप्रदर्शनक्षमत्वादि[2] स्वशब्देनानुपात्तमभ्यूह्यम्। अतोऽत्रालक्ष्यव्याप्तिप्रसङ्गादसमाश्वास इति लक्षणान्तरमुपदर्शयतीत्यर्थः। साध्येन लिङ्गानुगतिरित्यत्र तु लक्षणे इति द्वयैकानुगतिव्यावृत्ती लक्ष्मसाधुतेतिवत् अन्वयव्यतिरेकयोः सनियमयोरुपादानात्तत्प्रदर्शनक्षमत्वेन साधर्म्यवैधर्म्यदृष्टान्तलक्षणत्वेनाश्रीयमाणे यथोक्तदोषाप्रसङ्गः।

अथ दूषणानि। ननु च व्याख्याया इदम् इत्थम् एवम् इत्येवमात्मिकत्वेन उद्देशलक्षणपरीक्षास्वभावत्वात्, "प्रतिज्ञाहेतुदृष्टान्तदुष्टं हीनं च नेष्यते" इत्युद्देशप्रस्तावे च दूषणानामनुद्दिष्टत्वाद्, दूषणगतस्य लक्षणपरीक्षाभिधानस्य उद्देशपूर्वकत्वाभावादकाण्डकूष्माण्डापातप्रख्यत्वं दूषणपरीक्षात्मिकाया व्याख्याया इति।

अत्रोच्यते। किं दूषणानां शाब्दस्योद्देशस्याभावात् अनुद्दिष्टत्वमत्राभिधीयते, उतार्थस्योद्देशस्याभावात्? तत्र यत्राऽऽर्थ उद्देशो विद्यते तत्र शाब्दोद्देशाभावो न कश्चिद्दोषमावहतीति न्यायशास्त्रेष्ववस्थितम्। इह च दूषणानामार्थ उद्देशो विद्यते। तथाहि तानि दूषणान्यभिधीयन्ते यैर्वाक्यैः परार्थानुमानात्मकः प्रतिज्ञा-हेतु-दृष्टान्तवाक्यानां समूहो वादिप्रयुक्तो व्यस्त-समस्तरूपतया प्रतिवादिना दूष्यते। तानि हि प्रतिवादिवाक्यानि वादिप्रयुक्तप्रतिज्ञादिवाक्यदोषोद्भावनसाधकतमत्वाद्दूषणशब्देन ल्युडन्तेनाभिधीयन्ते। इह च प्रतिज्ञाहेतुदृष्टान्ता दुष्टा यस्मिन् काव्य इति आहिताग्न्यादेराकृतिगणत्वात् कृतनिष्ठान्तपरनिपातेन

१. विरोधात् यस्मात् सकाशात्॥ २ नियमगर्भीकारः सुगत एवादिशब्देन ग्राह्यः॥
३. लक्षणमुपचारवृत्त्या॥

प्रतिज्ञाहेतुदृष्टान्तदुष्टमिति बहुव्रीहिणा प्रतिज्ञादिवाक्यानां दुषिक्रियाकर्तृत्वेनोक्तत्वात्। अनुद्भावितदोषाणां च तेषां दुषिक्रियाकर्तृत्वस्य व्यवहारानङ्गत्वात्, आर्थेन रूपेण तद्दोषोद्भावनयोगीनि प्रतिवादिवाक्यान्युद्दिष्टानि भवन्त्येवेत्यार्थस्योद्देशस्य भावः सुभणः। एवमसौ किलात्र दूषणोद्देशस्याभावः स्यात्।

यद्यन्येषु प्रायोपवेशाय यथेत्यादिवक्ष्यमाणदिशा दुषिक्रियाकर्तृषु धर्मादिषु यानि प्रतिज्ञादीनि विरोधकानि तान्येवात्र प्रतिज्ञाहेतुदृष्टान्तैर्दुष्टमिति तृतीयासमाससमाश्रयणेनोद्दिष्टानि भवेयुः। न चैवं, यत्र प्रतिज्ञादीनि दुष्टानि यच्च प्रतिज्ञादिभिर्दूष्यते इति द्विविधस्यापि समासस्याश्रितत्वात्। अतश्च यत्र प्रतिज्ञादिवाक्यानि दुष्टानि तत्र तद्दुष्टतोद्भावनयोगीनि दूषणरूपाणि प्रतिवादिवाक्यान्यर्थत उद्दिष्टान्येव भवन्ति। प्रतिज्ञादिदुष्टेस्तदुद्भावनयोगीनि प्रतिवादिवाक्यान्यन्तरेणाव्यवहार्यत्वादित्यत्र न उद्देशपूर्वकत्वाभाव इति कुतोऽकाण्डकूष्माण्डापातप्रख्यता।

यद्यपि "तदर्थहेतुसिद्धान्तसर्वागमविरोधिनी" इत्यादिनैव प्रतिज्ञाद्याभाससंदर्शनेनार्थाक्षिप्तत्वाद्दूषणगतस्योद्देशलक्षणपरीक्षात्मकस्य प्रपञ्चस्य स्वकण्ठेनाभिधानमकारणम्। तथापि प्रतिज्ञाद्याभासानां प्रतिज्ञादीनाभासयन्त्ययथार्थतयाऽवगमयन्तीति ण्यन्ताद्भासेः कर्मण्यणि प्रतिज्ञाद्ययथार्थतोद्भावनोपयोगिनां प्रतिवादिवाक्यानां दूषणरूपता तत्र नोक्ता। ततः सा "दूषणा न्यूनताद्युक्तिः" इत्यनेन ग्रन्थेन प्रतिपाद्यत इत्यर्थः। अर्थादाक्षेपं यो दूषणविचारस्य मन्दबुद्धिर्न मन्यते तदनुग्रहाय दूषणविचारः कृत इत्यर्थः। प्रतिवादिवाक्यप्रतिबिम्बरूपतया सा प्रतिज्ञादिदुष्टता व्यवहारोपयोगाय निदर्श्यत इति यावत्।

अथवा प्रतिज्ञाद्याभासशब्देन प्रतिज्ञादिवाक्यान्येवायाथातथ्येन प्रयुक्तान्यभिधीयन्ते। अस्मिंश्च पक्षे तेषां दूषणरूपता नोक्तेत्यत्र ग्रन्थे दूषणरूपप्रतिवादिवाक्यप्रतिबिम्बितत्वेन[1] दूषणरूपतौपचारिकी द्रष्टव्या। स्थितमेतत्। दूषणानां प्रतिज्ञाद्याभासाक्षिप्तानामपि वैशिष्ट्यार्थं "दूषणा न्यूनताद्युक्तिः" इति स्वशब्देनाभिधानमिति।

**कथाया** इति। कथा वादजल्पवितण्डात्मिका। यदुक्तम्—तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति। तत्र जल्पवितण्डे परविहेठनार्थत्वेनापि व्यवस्थिते परेणासमञ्जसाभिधानेन व्याकुलीक्रियमाणस्य[2] "यादृशो यक्षस्तादृशो बलिः" इति न्यायेन तथाविधेनैव[3] प्रकारेणावध्वंसनं[4] न्याय्यमिति तत्त्वाध्यवसायसंरक्षणार्थतया प्रतिपादिते।

१. प्रतिबिम्बं संजातं येषां प्रतिवादिवाक्यानां तेषां भावस्तत्त्वम् पश्चात् समासः॥ २ वादिनः सम्बन्धित्वेन प्रतिपादित इति योगः॥ ३ असमञ्जसरूपेण॥ ४. यस्मात् अवध्वंसनं क्रियते प्रतिवादिनो वादिना इति न्याय्येत्यादिकस्य योगः॥

**सौगतैस्तु** यथार्थदर्शनेऽनिबद्धप्रलापस्य यत्नेन परिहार्यत्वाज्जल्पवितण्डानङ्गीकरणेन वाद एव सम्यक्कथास्वभावः कथारूपतयाङ्गीकृतः। **जातयो दूषणाभासाः** इति। यदुक्तं नैयायिकैः—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं[1] जातिरिति। यथाऽग्निमान् पर्वतो धूमवत्त्वादिति। अत्र महानससाधर्म्येण दूषणाभासेन प्रत्यवतिष्ठते। यदि महानसगतधूमवत्त्वसाधर्म्यात् पर्वतस्य वह्निमत्तेत्यभिधीयते, ततो रसवतीसंस्कारहेतुत्वमपि पर्वतस्य महानससाधर्म्यात् कस्मान्न स्यात्। इति साधर्म्यसमाश्रयाद्दूषणाभासस्वभावया जात्या प्रत्यवस्थानम्।

वैधर्म्येण तु यथा—पर्वतस्य धूमवत्तया महानसेन साधर्म्यं तथा शिलाद्युपचितत्वेन महानसवैधर्म्यमपि विद्यते। अतश्चैतद्यथा वैधर्म्यं तथा महानसस्याग्निमत्त्वेऽपि पर्वतस्याग्निशून्यता स्यात्। एते च जाती साधर्म्यवैधर्म्यप्रत्यवस्थानात्मिके दूषणाभासत्वेनावस्थिते। धूमवत्ताया अग्निमत्त्वं प्रति प्रयोजकत्वात्। रसवतीसंस्कारहेतुत्वं प्रत्यप्रयोजकत्वात्[2]। एवं शिलाघनत्वस्यापि वह्न्यभावं प्रत्यप्रयोजकत्वमुन्नेयम्। छलत्रयमपि तु जात्यविशिष्टस्वभावमिति न पृथक् सूचितमत्र।

को हि विशेषो दूषणाभासत्वे जातीनां छलस्य च। तथाहि-छलस्य सामान्यलक्षणम्—'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्' इति। तच्च त्रैविध्येनोक्तं वाक्छलोपचारच्छलसामान्यच्छलभेदेन। तत्र वाक्छलं यत्रानेकार्थे शब्देऽर्थान्तराभिसन्धानेन प्रयुक्ते तद्व्यतिरिक्तार्थान्तरसमाश्रयेण प्रत्यवस्थानं क्रियते। यथा केनचित् प्रत्यग्रकम्बलप्राप्तिरस्येत्यर्थाभिसन्धानेन नवः कम्बलो यस्यासौ नवकम्बल इति प्रयुक्ते, सङ्ख्यावाचिनवशब्दाश्रयेण यदा परः प्रत्यवतिष्ठते—एक एवास्य कम्बलो न तु नव कम्बला इति, तदान्यार्थाभिसन्धानेन प्रयुक्ते वाचके शब्देऽर्थान्तरविकल्पसंभावनया तस्यार्थस्य विहन्यमानत्वात् वाक्छलं भवति। वाचि वाचके शब्दे छलमित्यर्थः।

औपचारिकसमाश्रयेण तु मञ्चाः क्रोशन्तीत्यादेः प्रयुक्तस्य वाक्यस्य यदा मुख्यार्थसमाश्रयेण मञ्चस्याचेतनत्वात् क्रोशनक्रियाकर्तृत्वं नोपपद्यत इति परेण प्रत्यवस्थीयते तदा उपचारस्य मुख्येनार्थेन व्याकुलीकृतत्वादुपचारच्छलम्।

यत्र तु विशेषनिष्ठतया शब्दे प्रयुक्ते सामान्यसमाश्रयणेन वचनविघातः क्रियते तत्र विशेषेऽभिधित्सिते सामान्यविधानस्यारोपात् सामान्यच्छलम्। यथाऽहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इति। असावित्येतच्छब्दवाच्यार्थविशिष्टद्विजोत्तमविशेषोद्देशेन विद्याचरण[3]सम्पन्नत्वे विधित्सिते यदाऽपरो वाक्यार्थान्तरकल्पनया प्रत्यवस्थानं कुर्वीत—असावित्येतेन शब्देन कस्मिंश्चिदुद्दिष्टे धर्मिणि पुरुषविशेषे विद्याचरणसंपन्नत्वं भवता साधयितुमिष्यते।

१. पर्यनुयोगः ॥ २. धूमवत्तायाः ॥ ३. आचार ॥ ४. व्यापारेण ॥

तत्र च ब्राह्मणत्वं हेतुतयोपात्तम्। असौ पुरुषविशेषो विद्याचरणसम्पन्नो यतो ब्राह्मणो ब्राह्मणत्वादित्यर्थः इति। वचनवृत्त्या[1] न चैतदुपपन्नम्। अविद्याचरणसम्पन्नेऽपि व्रात्ये ब्राह्मणत्वस्य विद्यमानत्वेनानैकान्तिकत्वादिति। तदेवंविधे प्रत्यवस्थाने ब्राह्मणशब्दार्थविशेषे सामान्यस्याप्यारोपितत्वात् सामान्यच्छलता। एवमेतच्छलत्रयं व्याख्यातम्। तच्च सुपरिहरत्वेन दूषणाभासत्वाज्जात्यविशिष्टस्वभावमिति न पृथगुक्तम्।

**अथ काव्यप्रतिज्ञादयः नाटकादौ हि जातयः** इति। एता एव साधर्म्यसमादयः। **अत एवेदमाह** इति। यतः सन्धिवीथ्यालास्याङ्गेषु लक्षणेषु च जातीनां प्रयोज्यत्वमत एवापरं वक्ष्यते न्याय्यं लक्षणं काव्यसंश्रयमित्यत्र ग्रन्थेऽपरशब्दः सङ्गच्छत इत्यर्थः। तथाहि—अत्रापरं काव्यसंश्रयमित्यपरत्वेन काव्यसंश्रयं वक्ष्यमाणं वस्तु विशेष्यते। एवं च तस्य काव्यसंश्रयस्य वक्ष्यमाणस्यापरत्वं भवति। यदि किञ्चित् काव्यसंश्रयत्वेनोक्तं स्यादिति जातीनां सामर्थ्यादपरशब्दार्थपर्यालोचनया काव्यसंश्रयतयोक्तत्वं प्रतीयते। ततश्च यदेतज्जातिरूपं काव्यसंश्रयं काव्यप्रयोज्यमुक्तं तस्मादन्यन्न्याय्यं लक्षणं काव्यसंश्रयमभिधास्यत इत्यर्थः सम्पद्यते।

**सत्काव्याश्रयम्** इति। सौन्दर्यादिनिधानभूतशब्दार्थाश्रयमित्यर्थः। **शास्त्रगर्भेषु** इति। महाकाव्यादिप्रभेदपञ्चकव्यतिरिक्तेष्वित्यर्थः। **अनित्यत्ववादिना**-इति। अयमर्थः। नित्यस्य शक्तौ जननमेव सर्वदा अशक्तौ त्वजननमेव। कार्यस्वरूपं पुनः कादाचित्कम्। तत् कथं नित्यात् पदार्थात् स्यात्, नित्यत्वकार्यप्रसवयोर्विरोधात्। तथाहि—इहात्यन्तासतः कार्यत्वमेव नास्ति। यथा खपुष्पस्य। अत्यन्तसतोऽपि वाऽऽकाशादेः कार्यत्वाभावः। यदेव तु प्रागभावोपलक्षितत्वात् पूर्वमसत्तामनुभवति तस्य कार्यत्वात्। तदिदमुक्तम्

"नित्यं न भवनं यस्य यस्य वा नित्यभूतता।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव॥" इति।

तदेवमसतो यस्य सत्त्वं तस्य कार्यत्वमिति स्थितम्। तच्च[2] नित्यस्य तद्धेतुत्वे[3] नोपपद्यते। तथाहि—नित्यं यदेतत् कार्यस्य जनकत्वेन भवद्भिरङ्गीक्रियते तत् किं सहकारिनिरपेक्षं कार्यं जनयति उत सहकारिसापेक्षम्। सहकारिसापेक्षत्वेऽपि किं तस्य सहकारिणः किञ्चिद्विशेषं जनयन्ति उत न इति। सहकार्याधेयविशेषत्वे च तस्य किमसौ व्यतिरिक्तो विशेषः। आहोस्विदव्यतिरिक्त इत्येतावन्तो विकल्पाः।

तत्र यदि निरपेक्षस्य जनकत्वं ततः पूर्वमजनयित्वा उत्तरकालं यदेतज्जनकत्वं तस्यानुपपत्तिः। अजनकस्वभावत्वे हि तस्याजनकत्वमेव प्राप्तम्। अतश्च पश्चादपि न

१. व्यापारेण॥ २. कार्यत्वम्॥ ३. कार्य॥

जनयेत् । जनकस्वभावत्वे तु पूर्वमपि कार्योत्पत्तिप्रसङ्गः । तदेवं सहकारिनिरपेक्षत्वे तावदजनकत्वम् । सहकारिसापेक्षत्वे तु विशेषाऽनाधायिनां सहकारित्वे सर्वं सर्वस्य सहकारि स्यात्, विशेषाभावात् ।

अथ सहकारिणस्तस्य जनकस्य कञ्चन विशेषमादधीरंस्ततो यद्यसौ व्यतिरिक्तो विशेषस्ततस्तस्य न कश्चित् स्यात् । यद्यसौ तस्य व्यतिरिक्तोऽपि तत्सम्बन्धवशात्तस्येत्यभिधीयते, ततः सम्बन्धेऽपि समानश्चर्चः । सम्बन्धस्यापि व्यतिरिक्तत्वे तत्सम्बन्धायोगात्[1] । सम्बन्धान्तराङ्गीकरणे तु अनवस्था । अव्यतिरिक्तस्य तु विशेषस्य सहकारिभिर्जनकनिष्ठस्याधाने स एव जनकः कृतः स्यादिति जनकस्य स्थैर्यं व्याहन्यते । तदिदमुक्तम्—**नित्यत्वकार्यप्रसवयोर्विरोधाद्** इति ।

**भेदेन** इति । विवादास्पदधर्मेणेत्यादिना तत्तल्लक्षणकृदभिहितो यः प्रतिज्ञादीनां स्वभावभेदस्तत्समाश्रयतया विचित्रमार्गेण भेदेनेत्यर्थः ।

प्रयोगान् दोषांश्च क्रमेण व्याचष्टे—**उपादेयत्वहेयत्वानि** इति । प्रयोगा हि प्रतिज्ञादीनां प्रयुक्तिरूपत्वादुपादेयत्वरूपाः । दोषाणामपि च यानि दुष्टानि प्रतिज्ञादीनि तन्निवृत्तिनिमित्तरूपत्वाद्धेयत्वानीति भावप्रत्ययेनाभिधानम् । एतानि चोपादेयत्वहेयत्वानि लक्षणवशेन व्यवस्थाप्यन्ते, लक्षितस्य रूपस्योपादेयत्वादलक्षितस्य च हेयत्वात्[2] ।

**ज्ञानप्रवाहत्रयस्य** इति । तर्कसमुत्थस्य लोकाश्रयस्यागमजन्यस्य चेत्यर्थः । **तत्रैवमवस्थिते** इत्यादि । तत्रेति यत् श्लोके उपात्तं तद् व्याख्यातम् । **एवमवस्थिते** इति । तत्र तस्मिन् सति तर्कन्यायस्य विचाराक्षमत्वे इत्यर्थः । तथा च पूर्वं प्रत्यक्षादिलक्षणं तार्किकप्रसिद्धमुपन्यस्य दूषितम् । आबालगोपालाङ्गनमविचारितरमणीयतया यः प्रसिद्धः प्रमाणप्रमेयव्यवहारः स एवोपादेय इति दर्शयितुम् ।

**एकस्य** इति प्रमातुः । सर्वज्ञमार्गं नित्यमार्गं वा आश्रित्येति यथाक्रमं **नैयायिकादिदर्शनस्य मीमांसका**भ्युपगमस्य चोन्मीलनम् । तथाहि—**नैयायिका**दीनां दर्शने आप्तप्रणीतत्वेन वेदादेः प्रामाण्यं मन्त्रायुर्वेदवाक्यवदभिहितम् । आप्तश्च यथार्थदर्शित्वादतीन्द्रियं यागस्वर्गादिसाध्यसाधनभावमभिदधानो नासर्वज्ञो भवतीत्युक्तं **सर्वज्ञमार्गमाश्रित्य** इति । तदिदमुक्तं "मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तवचनप्रामाण्याद्" इति । एवं चैवंवादिनां मते आप्तप्रणीतत्वेन वेदादेः प्रामाण्यात् परतः प्रामाण्यम् । ये त्वस्मर्यमाणकर्तृकत्वेन कर्तृमत्त्वस्य बाधकस्याभावात् सकललोकजुषमपौरुषेयत्वेन वेदस्य प्रसिद्धिमाश्रित्य स्वत एव वेदस्य प्रामाण्यमाहुर्न तु परत इति, तेषां नित्यमार्गाश्रयेण वेदस्य प्रामाण्यम् । यदाहुः

१. ताभ्यां कारणविशेषाभ्यां सम्बन्धस्यायोगः ॥ २. रूपादेय- ग. ॥

"शब्दे[1] दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम् ।
तदभावः[2] क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥
तद्गुणैरपकृष्टानां शब्दे[3] सङ्क्रान्त्यसंभवात् ।
वेदे वक्तुरभावाच्च दोषाशङ्कैव नास्ति नः ॥"

तदेवं प्रतिवादिभिः सर्वज्ञमार्गं नित्यमार्गं वा वेदादेराश्रित्य लोकं यागादिप्रवर्त्तनेन प्रतार्योपजीवद्भिः प्रतारकैरागमाश्रयो ज्ञानविशेषः प्रवर्त्तित इति **लोकायतिक**दशावस्थिते न्याये, यस्याप्रतारकपितृपितामहादिव्यवहारदर्शनबलान्निजेन्द्रियादिदर्शनबलाच्च ज्ञानोत्पादः स लोक इति व्याख्यातः ।

**तत्त्वशंसिनः** इति । तथास्थितवस्तुप्रतिपादिन इत्यर्थः । तथा च तच्छब्दादुत्पन्नेन भावप्रत्ययेन लोकप्रसिद्धपदार्थनिष्ठा याऽसाविदन्ता सकललोकानुभवगोचरतास्वभावा, तद्वैलक्षण्येनास्मदाद्यपरिज्ञेयविषयत्वमुक्तम् । अत एव सर्वज्ञप्रणीतत्वं नित्यत्वं वाऽलौकिकमाश्रित्य ये तेन लोकाप्रसिद्धेनैव प्रकारेण स्थापितं वस्तु प्रतिपादयन्ति, न तु सकललोकानुभवगोचरेण इदन्ताप्रसिद्धेन, ते आगमास्तथास्थितवस्तुप्रतिपादिन इत्युच्यन्ते ।

**भावाभावपक्षयोः** इति । भावरूपं गगनं **वैशेषिकवैभाषिका**दीनाम् । अभावरूपं तु **सौत्रान्तिकानाम्** । **नीरुपत्वाद्** इति नीलादिरूपायोगादित्यर्थः । **नित्यव्यापिशब्दपक्षे** इति **मीमांसक**पक्षे इत्यर्थः । **शब्दसन्तानपक्षे** इति । **वैशेषिक**पक्षे इत्यर्थः । **सिन्धूनाम्** इति नदीनां प्रसरद्रूपत्वान्न तु समुद्राणां, तज्जलस्य कथञ्चित् स्थैर्योपपत्तेः । **अर्चिषाम्** इति ज्वालानाम् । **सर्ववादि**मते स्थैर्याभावः स्थित एव ।

**जराम्** इति । **ययाति**ना सुतः **पूरुः** प्रार्थितो वृद्धत्वधारणं प्रतिज्ञाय तथैवानुष्ठितवान् । **उपलप्स्ये** इति । **हनूमता** स्वामिशासनेन **सीतो**पलम्भं प्रतिज्ञाय **सीतो**पलब्धेति । **अर्थसंश्रय**–इति । स्वामिनो भार्योपलब्धिरर्थपक्षमेवावलम्बत इत्यर्थाश्रयत्वमुक्तम् । **भ्रातुः** इति **युधिष्ठिरस्य** । **प्रतिज्ञाभासाम्** इति । अनवसरे प्रयोगात् फलवन्ध्यत्वाच्चेत्यर्थः । **व्यापारे** इति । व्यापारे तस्मिन् वर्त्तमाने किं प्रतिज्ञया । **फल**–इति । फले संपन्ने प्रतिज्ञा निष्फलेति भावः ।

**अर्थबाधिनि**[6]–इति । अर्थापहारनिमित्तत्वादित्यर्थः । **अशक्यत्वेन** इति नित्यत्वेनेत्यर्थः । व्यक्तयोऽपि नोच्छेत्तुं शक्यन्त इत्याह–**अनवसानतया च इति**[7] । **किमिन्द्रिय**–इति ।

---

१. वेदे ॥ २. दोषाभावः ॥ ३. शब्दस्य ॥ ४. वक्तृ ॥ ५. अपसारितानां दोषाणाम् ॥ ६. अर्थाबाधिनीति क ॥ ७ "अशक्यत्वेन...अनवसानतया च इति' अयं पाठः ग. पुस्तके नास्ति ॥

सामान्येन सकललोकविषयतयेन्द्रियशत्र्वादीनां जेयत्वादिनिरन्तरेणाभिधाव्यापारेण स्वीकृतम्। न चैतदुपपद्यते सर्वेषां जितेन्द्रियत्वाद्यभावात्। अतोऽत्र मुख्यः शब्दार्थो बाधित इति सामान्येन विशेषो लक्ष्यते। स च विशेषः प्रत्यासन्नत्वात् प्रयोक्तृनिष्ठतयैव लभ्यते। **तेन** इति वक्त्रा। **सर्वम्** इति। इन्द्रियशत्रुजयम्, अरिनिराकरणं, धनदानं चेति।

**किंशब्दस्तु यद्यपि क्षेपविषयः** इति। किंशब्दस्तावत् प्रश्नविषयत्वेन दृष्टः। किं करोति देवदत्तो व्याचष्टे इत्येवमादौ। स च सम्भवन्त्यां गतावनेकार्थस्यान्याय्यत्वान्निन्दायां लक्षणया प्रयुज्यते। प्रश्नविषयस्य यदपरिज्ञायमानाभिजनत्वादिनाऽरोचमानत्वं वस्तुनस्तादृश्यरोचमानत्वे निन्द्यमानं वस्तु किंशब्देन गोचरीक्रियते। इह च किमिन्द्रियद्विषां जेयमित्यत्र योऽसौ जेयविषयः संरम्भ उद्योगात्मा स किंशब्देन लक्षणावृत्त्या निन्द्यते। इन्द्रियद्विषां जेयविषयं संरम्भं निन्दाम इत्यर्थः। निन्दा च परिहर्त्तव्यस्य वस्तुनः क्रियते इति संरम्भपरिहारस्यात्रार्थादवगतिः। ततोऽपि च सौकर्यमवगम्यते। एवं को निराक्रियतेऽरिभिरित्यादावनुसन्धेयम्।

**पक्षधर्मतामन्तरेणापि** इत्यादि। यद्यपि पक्षधर्मता स्वकण्ठेन नोपात्ता तथाऽप्यर्थसामर्थ्यात् प्रतीयमानां पक्षधर्मतामाश्रित्य, काव्यहेतोः स्वसाध्यावगतिनिबन्धनत्वमभिधातुं शक्यत एव। यथाऽर्थान्तरन्यासे अर्थान्तरसामर्थ्यादवगम्यमानयोरन्वयव्यतिरेकयोर्न खल्वर्थान्तरन्यासे स्पष्टयैव गत्या, यत् कृतकं तदनित्यमित्येवमन्वयव्यतिरेकौ प्रदर्श्येते। अर्थसामर्थ्यात्तु तयोरवगतिः। अन्यथा समर्थकत्वायोगात्। तत्समाश्रयेण चार्थान्तरन्यासस्यानवस्थानात्। एवमिहाप्यर्थसामर्थ्यादवगम्यमाने पक्षधर्मत्वे गमकत्वं न विरुध्यते।

**साध्याश्रयधर्मिधर्मत्वविरहेऽपि** इति। वनाभोगस्य धर्मिणो न धर्मः कुररविरावो न च कमलसौरभम्। शब्दो हि जन्यजनकभावेन कुरराणाम्, आश्रयाश्रयिभावेनाकाशस्य। निराश्रयो वा। गन्धोऽपि समवायेन कमलानां, संयुक्तसमवायेन पवनस्येति। **यथाऽभ्रं कथम्** इति। न केवलमुदाहृतविषय एव पक्षधर्मत्वावगमहानिर्यदप्येतन्मूर्धाभिषिक्तमनुमानं धूमादग्निप्रत्यय इति। तदपि दृष्टान्ततया व्याचष्टे।

**अपृथक्कृतसाध्योऽपि** इत्यादि। क्वचित् खलु साधनप्रतीत्युत्तरकालभावित्वेन साध्यस्य प्रतिपत्तिः। यथा धूमाद् वह्निसंप्रत्ययः। तत्र हि धूमस्य प्राक् प्रतिपत्तिः पश्चाद् वह्नेः। क्वचित्तु साध्यगर्भीकारेणैव साधनं प्रतीयते, न तु पूर्वप्रतीतात् साधनात् साध्यस्य प्रतिपत्तिः। यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति। अत्र हि दिनाधिकरणभोजनाभावेन सह पीनत्वस्य पूर्वं विशेषणविशेष्यभावे प्रतीते, पश्चात् साध्यं रात्रिभोजनं न प्रतीयते।

१. -मर्थ्यादिव गम्य-क. ॥ २. समर्थकत्वायोग ॥ ३. हेतुः ॥

अपि तु साध्यं रात्रिभोजनं प्रमेयं कुक्षावनुप्रवेश्यैव पीनत्वदिनाधिकरणभोजनाभावयोर्विशेषण-विशेष्यभावप्रतिपत्तिः। अतोऽत्र गर्भीकृतार्थान्तरः पदार्थान्वयः।

ननु पदार्थान्वयपूर्वकोऽर्थान्तरस्वीकारः। तेनास्यामर्थापत्तौ प्रमेयानुप्रवेशिता। सा चेयमर्थापत्तिः केवलव्यतिरेकानुमानरूपतया कणादादिभिरङ्गीकृता। अत्र हि साध्याभावस्य साधनाभावेन याऽसौ व्याप्तिः साऽन्यथाऽनुपपत्तिः। सैव च व्यतिरेकः। तेन च व्यतिरेकेण साध्यसिद्धिराक्षिप्यते। पूर्वं चोक्तम्

"तथाऽग्नावधूमेन व्याप्ते धूमस्ततश्च्युतः।
अनन्यत्रावकाशत्वाद् व्याप्यते ध्रुवमग्निना" ॥ इति।

एवं च व्यतिरेकेणैवात्र साध्यसिद्धेराक्षिप्तत्वादन्वयस्यानुपयोगः[1]। **अन्वयस्यादृष्टेः** इति। यथा दीप्रदीपा निशेति वक्ष्यमाण उदाहरणे। अत्र हि अन्वयः सम्भवन्नपि येन न दृष्टस्तं प्रत्येतस्योदाहरणता। **असम्भवाच्च** इति। यथा पीनो देवदत्तो दिवा न भुङ्क्त इति। अत्र हि पीनत्वस्य दिनाधिकरणभोजनाभावविशिष्टस्य हेतोर्यत् साध्यं रात्रिभोजनं तस्य दिनाधिकरणभोजनाभावविशिष्टं पीनत्वं स्वहेतुं प्रति यदनुवर्त्तकत्वमनुयायित्वं तत् यत्र धूमस्तत्रावश्यमग्निरितिवत् दृष्टान्तधर्मिणि न प्रसिद्धम्। अत इदानीमेव पूर्वमप्रतिपन्नस्य साध्यस्य रात्रिभोजनस्य देवदत्तलक्षणधर्मिनिष्ठतया प्रतीतिर्भवतीति पूर्वप्रसिद्धान्वयाभावः। तदिदमुक्तं **द्वयोरभावाद्** इति। अन्वयस्याभावाद् द्वयमत्र यतो नास्ति। व्यतिरेक एवैको विद्यत इत्यर्थः। व्यतिरेकसद्भावमेव दर्शयति—**अन्यथा**—इत्यादिना। **दीप्रदीपा निशा** इति। केनचित् पुरुषेण दीप्रदीपतामत्यन्तभासुरदीपतां[2] दृष्ट्वा निशायाश्चिरकालप्रवृत्त-दिवाकरधामाभावविशिष्टस्य कालविशेषस्य निशाशब्दवाच्यत्वान्न दिवाकराप्रवृत्तिमात्रं साधयितुं युक्तम्। एवं सति धर्मि[3]प्रतिपत्तिकाले एव साध्यस्य प्रतिपन्नत्वाद् हेतोरानर्थक्यं स्यात्। तेन चिरकालतयाऽप्रवृत्तिर्विशेषणीया। प्रमाणान्तरेण च दिवाकरभावाभावापरिज्ञाने इदमनुमानम्। जलदपटलच्छन्नासु दिक्षु न ज्ञायते किमस्तमितो रविर्न वेति प्रदीपप्रभा-प्रसरेणानुमीयते रवेश्चिरकालाप्रवृत्तिः। एतच्च सर्वमभिप्रेत्येदमुक्तम्—**हेतुः प्रदीपदीप्रत्वम्** इत्यादि।

ननु प्रदीपदीप्रत्वस्य चिरतरकालाप्रवृत्तरविविरहे[4] निशान्तरेषु व्याप्तेः प्रतिपन्नत्वा-दन्वयस्याभावोऽत्रासिद्ध इत्याशङ्क्योक्तम्—**अत्र यद्यप्यन्वयव्यतिरेकौ स्तः** इत्यादि। यः पुरुष आदित्यसत्तायाः प्रदीपप्रभया विरोधं प्रतिपद्यते इति। **आदित्यसत्तायाः** इति। चिरतरकालाप्रवृत्तरविकत्वस्य साध्यस्याभाव उक्तः। **प्रदीपप्रभया विरोधं प्रति-**

---

१. –नुपगमः ग ॥ २. प्रदीपतां ग. ॥ ३. धर्मि–ग. ॥ ४. सह ॥

पद्यते इति। प्रदीप्रदीपत्वस्य साधनस्याभावोऽभिहितः। अत्र च प्रदीपप्रभया विरोधमेवेत्ये-वकारार्थोऽध्याहर्त्तव्यः। तेन यः साध्याभावस्यैव साधनाभावेन व्याप्तिं प्रतिपद्यते, न तु साधनस्य दीप्रदीपत्वस्य साध्येनादित्याभावेनेत्यर्थः संपद्यते।

**सोऽज्ञानो दोषः** इति असिद्धत्वमित्यर्थः। ततो हि साध्यस्य ज्ञानं नास्ति। **इमे दोषाः** इति। इत्थमेव समासो युक्तः। ये पुनरज्ञानं च संशयज्ञानं च विपर्ययश्चेति समस्य तान् कुर्वन्तीत्यज्ञानसंशयज्ञानविपर्ययकृत इति व्याचक्षते, तेषामज्ञानस्य ज्ञानप्रागभावस्यानुत्पाद्यमानत्वात्तत्करणविरोधः।

ननूपमानमेवास्त्विति। उपमाने खलु बिम्बप्रतिबिम्बोपन्यासो दृष्टः। चन्द्र इव मुखमित्यत्र मुखस्य बिम्बता, चन्द्रस्य तु तत्प्रतिबिम्बत्वम्। दृष्टान्तेऽपि च तनुरियं क्व विलोचनहारिणीत्यादौ बिम्बप्रतिबिम्बभावो विद्यते, तत्कथमुपमायामन्तर्भावोऽस्य न स्यादित्यर्थः। **उपमायां हेतुर्लिङ्गम्** इत्यादि। अनेन हेतुशब्दस्योपमालक्षणवृत्तित्वमत्र दर्शयति। लक्षणं हि लक्ष्यं सजातीयविजातीयव्यवच्छेदेनावगमयल्लक्ष्यस्यावगतौ हेतुतां प्रतिपद्यते। अतो हेतुशब्देनाभिधीयते। लीनलक्ष्यस्वरूपावगतिनिबन्धनत्वाच्च हेतुशब्दपर्यायेण लिङ्गशब्देन तस्य व्यपदेशः। तच्च लक्षणं केवलव्यतिरेकिलिङ्गरूपतया कणादादिभिरङ्गीकृतम्। तथाहि—उपमालक्षणम्—

"यच्चेतोहारि साधर्म्यमुपमानोपमेययोः" इत्यादिनोपमानोपमेययोः साधर्म्यमुक्तम्। तच्चोपमामलङ्कारान्तरेभ्यो दीपकादिभ्यः सजातीयेभ्यो विजातीयेभ्यश्च काव्यस्वरूपनित्यानित्यदोषगुणशब्दविशेषेभ्यः केवलव्यतिरेकिलिङ्गरूपतया व्यवच्छिनत्ति।

न चैवंविधं लक्षणं तनुरियं क्व विलोचनहारिणीं इत्यादौ दृष्टान्ते विद्यते। तनुतापसयोर्यथाक्रमं नवमालिकाकुशगुणाभ्यां सहोपमानोपमेयभावस्याशाब्दत्वात्[1]। न खल्वत्र चन्द्र इव मुखं शस्त्रीश्यामेत्यादिवदुपमानोपमेययोः उपमितिक्रियां प्रति करणत्वं कर्मत्वं च शाब्दम्। यथा हि चन्द्र इव मुखमित्यत्र इवशब्दमाहात्म्याच्चन्द्रमुखयोरुपमितिक्रियाकरणत्वकर्मत्वे प्रतीयेते। शस्त्रीश्यामा देवदत्तेति च समाससामर्थ्यात्तयोः प्रतिपत्तिः। न तु तद्वत्तनुरियं क्व विलोचनहारिणीत्यत्र उपमानोपमेयभावः शाब्दः। केवलार्थसामर्थ्यनिबन्धनत्वात्। तेन शब्दसामर्थ्यावसेयोपमानोपमेयभावत्वस्योपमालक्षणस्याविद्यमानत्वादुपमाहेतोरुपमालक्षणस्यानभिधानमिति दृष्टान्तस्योपमातः पृथग्भावेनाभिधानम्। तदुक्तम्

"इवादेरप्रतीतापि शब्दसंस्कारतः क्वचित्।
उपमा गम्यतेऽन्यत्र[3] केवलार्थनिबन्धना" ॥ इति।

१. सम्बद्ध ॥ २ शब्दालङ्कार ॥ ३. दीपकादौ ॥

यत्त्वत्र **विवरणकृता** उपमानोपमेयभावविवक्षासाम्यमिवादिप्रयोगश्चेति त्रितयमुद्घोषितं तद् बाहुल्याभिप्रायेण न तु लक्षणतया। उपमानोपमेयभावविवक्षाया एव निरन्तर शब्दव्यापारात्मिकाया उपमालक्षणत्वात्।

यत्तु साम्यं तदशब्दोपादानं दृष्टान्तेऽपि विद्यते इत्यलक्ष्यव्याप्तिः। शब्दोपादानस्य तु साम्यस्य कस्याञ्चिदेवोपमायां भाव इति लक्ष्याव्याप्तिः। एवमिवादिप्रयोगोऽपि न सर्वस्यामुपमायां विद्यत इति तत्रापि लक्ष्याव्याप्तिः। उपमानोपमेयभावविवक्षायास्तु निरन्तरशब्दव्यापारात्मिकाया लक्ष्याव्याप्त्यलक्ष्यव्याप्ती न स्त इति तस्या एव लक्षणत्वम्। यच्चेतोहारिसाधर्म्यमित्यनेन लक्षणेन च सैवोपमानोपमेयभावविवक्षा उपबृंह्योपदर्शिता।

**कुतः** इति। किं पुनः कारणं साध्यसाधनोपन्यास उपमानेन क्रियते। मुखमिन्दुरिवेत्यत्रेति[1]। एतदुक्तं भवति[2]। उपमाने कुत्सितः साध्यसाधनोपन्यासः, सहृदयहृदयहरणभ्रंशप्रसङ्गात्। यद्येवं क्रियते मुखमिदमाह्लादकरं कान्तिविशेषातिशययोगादिन्दुरिवेति तदा क्लिष्टं काव्यं स्यात्। यथेदं वक्ष्यमाणमुदाहरणम्। एतदेव दर्शयति **तदाह** इति।

**संप्रति प्रत्युदाहरणोपदर्शन**—इति। इह खलु संक्षेपतश्चतुर्विधा काव्यस्य दुष्टता दोषाणां पद-पदार्थ-वाक्य-वाक्यार्थाधारत्वात्। यश्चायं पददोषस्तस्य द्वैविध्यम्। पदानां नेयार्थत्वेनाप्रसन्नत्वेन च। तत्र विवक्षितार्थप्रतिपादनसमर्थानां पदानामनुपादाने नेयार्थता नाम पददोषः। तथाहि—तत्र सर्वेषां पदानां विवक्षितार्थप्रतिपादनोपयोगिनामनुपादानादुपात्तानां पदानां वाक्यार्थं प्रत्यवगमकत्वमपर्यवसितमित्युपात्तानामेव पदानामसौ दोषः, पदानां खलु पदार्थप्रतिपादनं न प्रधानभूतो व्यापारः। वाक्यार्थप्रतिपादने तस्य[3] नान्तरीयत्वात्। अतश्च वाक्यार्थावगत्यभावे पदार्थप्रतिपादनात्मनः पदव्यापारस्य सन्निहितप्रोषितत्वात् पददोषता। यदुक्तम्

> "वाक्यार्थमतये[4] तेषां प्रवृत्तेर्नान्तरीयकम्।
> पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्"॥ इति।

तस्य च नेयार्थस्योदाहरणं प्रदर्शितम्—**भरत**स्त्वमित्यादि। यः खलु संक्षिप्तार्थाभिधित्सया प्रसिद्धसाध्यसाधनव्याप्तिक**दिलीपा**दिदृष्टान्तोपन्यासेन स्तूयमाने नृपतौ, एवंविधस्त्वम् एवंरूपत्वात् दिलीपादिवदिति साध्यं धर्मं विशिष्टमवगमयितुमिच्छति तस्य तन्मनोरथमात्रम्। दिलीपादिनिष्ठतया विशिष्टधर्मनिष्ठस्य साध्यसाधनभावस्याप्रसिद्धत्वात्। यत्र

१. –मिन्दुरेव क.॥ २. 'एतदुक्तं भवति'' इति ग. पुस्तके नास्ति॥ ३. पदार्थप्रतिपादनस्य॥
४. अवगतये॥

खलु विशिष्टधर्मनिष्ठतया साध्यसाधनभावः प्रसिद्धस्तत्र कदाचिद् दृष्टान्तमात्रेऽप्युपात्ते प्रसिद्धिमाहात्म्यात् साध्यसाधनभावोऽप्यनुसर्तुं शक्यते । यथा पर्वतोऽयं महानसः इति । भरतस्त्वमित्यादौ तु साध्यसाधनभावस्य विशिष्टधर्मगतस्याप्रसिद्धत्वात् साध्यसाधनभावाभिप्रायेण दृष्टान्तता वक्तुमशक्या । तेन तदेवंविधायां विवक्षायां नेयार्थं काव्यम् । एवमेतयत्रानुपात्तप्रकृतार्थोपयोगिपदत्वादुपात्तानां पदानामभिधा व्याकुलीभवति तन्नेयार्थं काव्यं प्रत्युदाहरणत्वेनोपन्यस्तम् ।

यस्तु पदानामन्यार्थत्वादिनाऽप्रसन्नता नाम द्वितीयः पददोषः सः असुनिर्भेदमित्यनेनाग्रे दर्शयिष्यते–पदार्थदोषोऽहृद्यमित्यनेन, वाक्यदोषोऽवद्धपदमित्यादिना, वाक्यार्थदोषश्चांशुमद्भिरित्यादिनेति। **यत्र दृष्टान्तमात्रेण** इति। अत्र मात्रग्रहणेन प्रतिपिपादयिषितगुणाप्रतिपत्तिं दर्शयति । दृष्टान्तेन केवलेन यत्र साध्यसाधनयोर्व्यक्तिस्तं शुद्धदृष्टान्तं ब्रुवते। किं कारणमित्याह–**तन्मात्र**–इति ।

**अमुकवद्** इति । अमुकमस्यास्तीति मतुप् । **उपहसन्नाह** इति उपहासेनोत्तरमाहेत्यर्थः । **इति प्रयुञ्जते** इति । एतदुक्तं भवति । कतिपयपुरुषप्रयोगमात्रमत्र शरणं न पुनर्न्यायः। **एकम्** इति एकमपीत्यर्थः। **अपेशलम्**–इति। अभिमतरसोचितशब्दाप्रयोगात्।

**आमम्**–इति । आमं हि कपित्थं हृदयग्लानिकरमुपयुक्तं सत् खरकर्परत्वाच्च असुनिर्भेदम् । रसोऽपि तत्र अतिकषाय इत्यसुखावह इति। **प्रत्युदाहरणं प्रजाजन–इति**[२] । अत्र प्रथमेऽर्थेऽहृद्यत्वम् । द्वितीये तु असुनिर्भेदत्वम् । प्रत्युदाहरणान्तरं दित्सुराह– **अंशुमद्भिः** इत्यादि । **शुभमरकत**–इति । अत्र हि पुराणप्रजापतिनिर्मिता एव पदार्थाः प्रदर्शिताः, न तु कविप्रतिभानिर्माणा इति दुष्टो वाक्यार्थः । एतद्दूषयितुमाह–**तदेभिरङ्ग**– इति। **अनेन** इति । अङ्गेत्यामन्त्रणपदेन प्रत्युदाहरणान्तरप्रदर्शनार्थमाह–**अवद्धपदम्** इति । तदेवं पदपदार्थदोषाश्रयेण प्रत्युदाहरणत्रितयमुक्तम् । नेयार्थत्वाऽहृद्यत्वाऽप्रसन्नत्वोपनिबन्धनात् । वाक्यदोषस्तु अबद्धपदमित्यादिनोक्तः । वाक्यार्थदोषस्य तूदाहरणं शुभमरकत पद्मरागेत्यादि । तदेवमेते प्रत्युदाहरणद्वारेण चत्वारो दोषाः परिहर्त्तव्यतया दर्शिताः ।

**आगमगम्य** इति । योऽर्थ आगमाद्वेदादिकाद् गम्यो वाच्योऽथ चागममनपेक्ष्यैवोच्यते स निरागमोऽर्थदोषः । **आगम** इति । तथा च स्मृतिः–"राजा राजसूयेन स्वाराज्य[३]कामो यजेत" "राजा सर्वतो विजिती[४] अश्वमेधेन यजेत" इति। **कला** इति। कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरुद्धोऽर्थो येषु वाक्येषु तानीत्यर्थः। **पूर्णस्वरत्वादस्या** इति। तथा चाह **मुनिः**

---

१. काव्ये ॥ २. –वह इति प्रजा– क. ॥ ३. स्वर्ग ॥ ४. विजयी ॥

"मध्यमोदीच्यवा चैवं तथा वै षड्जकैशिकी ।
कार्मीरवी च सम्पूर्णा तथा गान्धारपञ्चमी॥" इति ।

**देवताभक्तितः** इति ।

"चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।"[4]

इत्युक्तनीत्या ज्ञानित्वेन या भक्तिः सा नात्र विवक्षिता। अपि त्वार्त्तत्वादिभिन्नरूपा।

**हेतुविद्या** इति अनुमानानुसारितर्कविद्या । **न्यूनस्वरः** इति। न्यूनस्वरो योगे यः प्रयोगः स भिन्नमार्ग इति । **असताम्** इति असाधूनामपि । **उद्भवाः** इति अभ्युदया अपीति[5] । श्लेषच्छायया वक्रोक्तिः। **दोलातिप्रेरणा**- इति। अत्र गानादिक्रियाया लयवैषम्ये रागस्य हानिर्न तु वृद्धिरिति कलाविरोधो वधूत्रासापहृतहृदयानुरागेणापह्नुतः। **सनियमपरिवृत्तः** इति । सनियमः पदार्थः परिवृत्तो यत्र वाक्यार्थे इति विग्रहः। **छायामात्र**-इति । छायामात्रेण छाययैवेत्यर्थः ।

**अर्थान्तरसङ्क्रमित**-इति । अर्थान्तरसङ्क्रमितवाच्योऽविवक्षितवाच्यस्य ध्वनेर्यः प्रभेदः स एव गुणीभूतत्वादलङ्कारकारप्रसिद्धा रावण इति नामव्याजेनोक्तिः इति या व्याजोक्तिः सैव रूपं यस्य तत्तथोक्तम्। **सहचरभिन्नः** इति। सहचरा उत्कृष्टत्वनिकृष्टत्वादिना भिन्नाः पृथग्भूताः अथवा निकृष्टैरुत्कृष्टाः सहचरा भिन्ना मिश्रिता यत्रेत्यर्थः । **अश्लीलार्थ**-इति। अश्लीलोऽर्थो वाच्यो यः अर्थान्तरं वा वाच्यं यत्तस्याश्लीलस्यार्थस्येत्यर्थः।

**भुङ्क्ष्व** इति । अत्र विधिना निषेधो लक्ष्यते । तेन मा विषं भुङ्क्ष्व मा च तत्र विश्वसीरित्यर्थः संपद्यते । **अत्रापि बहु वक्तव्यम्** इति । एतदुक्तं भवति । इयं वाक्यकल्पना दूषणसहस्रोपनिपातकदर्थिता । तानि दूषणानि यद्यत्रोपन्यस्यन्ते तदाऽतिगरीयान् ग्रन्थराशिः स्यात् । तस्मिंश्च सति **महतामाचार्याणाम्** अपवादः कृतः स्यात्तेन वरं प्रस्तुतमेवानुसृतमिति ।

तदेवाह-**समुदायार्थ**-इति । अयमर्थः ।वाक्यं सार्थकमपार्थं च सम्भवतीत्यपार्थदोषेण काव्येभ्योऽनर्थकवाक्यनिरासः क्रियते । पदानां पुनः स्वार्थाव्यभिचारान्न गतिद्वयमस्तीति नायं तदर्थः प्रयत्न इति। अस्योदाहरणमाह-**दाडिमानि** इति। **जरद्गवः** इत्यादि।

१. -वाच्यैव ख. ॥ २. ईश्वरः प्राह ॥ ३. उद्यत ॥ ४ विशिष्टो भवति ॥ ५. अभ्युदयापीति क. ॥

अयमभिप्रायः । अत्रावान्तरवाक्येषु पदसमुदायः परस्परसंसृष्ट इत्यस्ति काव्यलक्षणयोगः । काव्यत्वे च सति यद्वाक्यसमुदायानर्थक्यं सोऽपार्थो दोषः । **दाडिमानि दशापूपाः षड्** इत्यादि । इत्यत्रापि अतद्गुणसंविज्ञानो बहुव्रीहिर्व्याख्येयः । तस्य प्रधानस्यान्यपदार्थस्य गुणानां च वर्त्तिपदार्थानां सम्यग् विज्ञानं कार्यान्वयपर्यन्तं यत्र स तद्गुणसंविज्ञानो बहुव्रीहिः । यथा सर्वादीनि इत्यत्र । अत्र विश्वशब्दादिवत् सर्वशब्दस्यापि सर्वनामसंज्ञयाऽभिसम्बन्धः, समुदायस्य समासार्थत्वात् । अतद्गुणसंविज्ञानः पुनर्बहुव्रीहिर्यत्र प्रधानस्यैव कार्यान्वयः वर्त्तिपदार्थस्य तु तदुपलक्षणपरता । यथा चित्रगुमानयेति । न ह्यत्र देवदत्तवच्चित्रगवीनामप्यानयनम् । यथा च चित्रगुमानयेत्यत्र वर्त्तिपदार्थस्यान्यपदार्थोपलक्षणपरत्वम् । एवमिहापि दाडिमानि दशाऽपूपाः षडिति आदिर्यस्य जरद्गवादिवाक्यस्य तत्तथोक्तमिति । दशदाडिमादिवाक्यमन्यपदार्थोपलक्षणपरतयोपात्तम् । तेन जरद्गवादिवाक्यस्यैवापार्थता न दशदाडिमादिवाक्यस्य । यदि वा दाडिमानीत्यादौ क्रियापदमध्याहृत्यावान्तरवाक्यानि कल्पनीयानि । तेषु च शब्दार्थयोः सङ्घटनमस्तीति काव्यलक्षणयोगः । वाक्यसमुदायार्थस्तु नास्तीत्यपार्थत्वम् । एवं च द्वे अप्यत्रोदाहरणे सङ्गच्छेते एते इति । अत्र च ऊर्ध्वोर्ध्वमारुह्य तत्त्वैषणा[2] विशेषेण यदि विधीयते तदाऽपार्थदोषस्य न किञ्चिदव्यवच्छिन्नं व्यवच्छेद्यं परिदृश्यत इति परिसङ्ख्यापरत्वं व्याख्येयम् ।

यदि वा तथाविधमन्यदव्यवच्छिन्नं व्यवच्छेद्यं परिकल्पनीयमिति । तथा हि पञ्चप्रभेदं काव्यमधिकृत्यायं संस्कारैः[3] प्रस्तुतः । तेषु च पञ्चसु प्रभेदेषु यानि लक्षणानि तैरेव वाक्यसमुदायानर्थक्यं प्रतिषिद्धमिति नार्थस्तदर्थेनापार्थदोषेण । अन्यच्च महाकाव्ये ह्यर्थ्यमिति विशेषणमुक्तम् । अर्थात् प्रयोजनादनपेतमर्थ्यमिति । न च जरद्गवादिवाक्यानां प्रयोजनानपायः सम्भवति । महावाक्यैकवाक्यत्वाभावात् । अभिनेयार्थेष्वपि प्रख्यातवस्तुविषयमित्यादीनि यानि विशेषणानि तानि वाक्यलवैर्यैः[4] दनर्थकं वाक्यमारब्धं तन्निरस्यन्ति ।

आख्यायिकाकथयोरनाकुलविशेषणा पदवृत्तिरिति गद्यविशेषणं जरद्गवादिवाक्यानामवसरं निरुणद्धि । अनाकुलं हि व्यवधानादिदोषाभावात् झटिति प्रस्तुतार्थप्रतीतिकारि काव्यम् । एवंविधे च कुत उदाहृतवाक्यरूपाणां वाक्यानामवसरः । अनिबद्धे[5]ऽपि सर्वमप्येतदिष्यत इत्युक्तं, तेन पूर्वोक्तलक्षणनिरासान्नात्रासम्बद्धवाक्यारब्धवाक्यसम्भवः । तस्मा[6]न्नानयापि गत्याऽपार्थदोषः सङ्गच्छते ।

अत्र **केचिद्** ब्रुवते । काव्येषु महाकवीनामपि स्खलितानि दृश्यन्ते तन्निवारणार्थोऽयं

१. समास ॥ २. तत्त्वान्वेषणा ॥ ३. हेयत्वेन दोषसंस्कारः ॥ ४. –लब्धैर्य-ख ॥ ५. एतेषु पञ्चसु ॥ ६ काव्ये हीत्यत्र हिशब्दो योऽसौ यदर्थस्तस्योपसंहारोऽयं तस्मादिति ॥

प्रयास इति। यथा विकाशमीयुर्जगतीशमार्गणा इत्यादि पङ्क्तियमकम्। अत्र किलेयुरित्यावृत्तेर्नाभिधेयभेदः कश्चिदिति प्रयोजनाभावादपार्थत्वम्। नैतदपि सारम्। यत उक्त एकार्थदोषस्तेनैवेदकप्रकाराणां दुष्टत्वमुपपादितमिति नार्थो[1]ऽनेन। अन्यथा पुनरेकार्थदोषो न वक्तव्यः स्यात्। सर्वासु पुनरुक्तिषु प्रयोजनान्तराभावेनापार्थदोषेऽन्तर्भावप्रसङ्गादिति।

**अन्ये** पुनर्यत्र काव्ये प्रतिपन्नः संसर्गः प्रमाणान्तरपर्यालोचनया बाध्यते तदपार्थमाहुः। यथा

निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किं [नु ?] वान्त-
श्चन्द्रो मयेत्यार्त्ततरं ररास॥

अत्र मेघस्य निरीक्षणयोगोऽभिप्रायविशेषेण[2] चार्त्ततरो निनादः प्रमाणेन विहन्यत इति अपार्थदोषः। नैतदपि युक्तम्। एवंविधेषु काव्येषु अन्तर्नीतिवशब्दयोगं मन्यन्ते **सूरयः**। यथा

घेत्तुआणं[3] चलविज्जुचउँलियं[4]
राइआसु पुलयन्ति मेहया।
सोउआण ओरल्लिसद्दयं
महिलियाण का जियइ विरहए॥

गृहीत्वा चलद्विद्युत्प्रदीपं रात्रिषु प्रलोकयन्ति मेघाः।
श्रुत्वा मेघशब्दं स्त्रीणां का जीवति विरहे॥ [छाया]।

पूर्वश्लोके तु विदर्शनालङ्कारं **केचि**न्मन्यन्ते। यतः शाब्दः संसर्गोऽसम्भवन् यत्रोपमानोपमेयभावं गमयति तत्र विदर्शनाव्यवस्था। प्राक्तनवाक्ये चाभिधावृत्त्या संसर्गो न सम्भवति सोऽसम्भवन्नभिसारिकामुखस्य चन्द्रमसश्च सादृश्यं गमयति। प्रावृट्कालवर्णनायां तत्कालोचिताऽभिसारिका प्राकरणिकी भवतीति तन्मुखस्योपमेयत्वम्। उपमानत्वं चन्द्रमस इति।

**अपरे** ब्रुवते—वीक्षणपूर्वकस्य चन्द्रवमनस्य योऽसौ सन्देहस्तस्य रसनं प्रति हेतूत्प्रेक्षया हेत्वतिशयोक्त्या वा गर्भीकृतोपमार्थो गर्भीकृतरूपकार्थो वा ससन्देहालङ्कार एवायमत्रावगम्यते। परमार्थतस्तु ससन्देहालङ्कारोऽपि अविद्यमानेऽपि सन्देहेऽलङ्कारान्तरप्रतिपादनागर्भीकारेण सन्देहमध्यारोपयन् प्रवर्त्तत इति तस्याप्यौपम्यसंस्पर्शिनो विदर्शनया सह सन्दिह्यमानत्वात् सन्देहसङ्करो युक्त इति।

---

१. अपार्थेन॥ २, ऊहरूपेण॥ ३. घेत्तुयाण ग.॥ ४. चुडुलियं ख. ग॥

अपरे तु समुदायार्थशून्यं यत्तदपार्थमुच्यत इति यत्र वाक्ये कस्यचित् पदस्य समन्वयो नास्ति तत्रेदं लक्षणं योजयन्ति । यथा

मतिमोहविधायिनामभूत्यै[1]
प्रकृतीनां[2] विकृतौ कृतोद्यमानाम् ।
मदमानरुषां प्रभुर्विधेयः
परितन्त्रो ननु सन्निपन्न एव ॥

अत्र किल मतिमोहविधायिपदं न प्रकृतीनां विशेषणम्, नापि मदमानरुषाम्, इति नात्र वाक्ये संसर्गमनुभवति । तेनेदं वाक्यं समुदायार्थशून्यमित्यपार्थम् । विशेषणत्वेन हि संसर्गे मतिमोहविधायिनीनामिति पदं स्यात् । नैतदपि युक्तम् । प्रकृतीनां विकारे ये कृतोद्यमास्तेषां विशेषणमेतन्मतिमोहविधायिपदम् । इत्थंभूतानां पुंसां यः प्रभुर्मदमानरुषां[3] विधेय आयत्तः स परितन्त्रः परिभूततन्त्रैः[4] सन्निपन्नो विनष्टः इति नात्र वाक्ये कस्यचिदपि पदस्यासंसर्ग इति ।

अन्ये पुनराहुः—यत्र वाक्येऽनेकधा व्याख्यानेऽपि न वाक्यार्थः सहृदयानां हृदयान्याविशति, अस्ति तु श्लिष्टप्रतिभासोऽर्थः तद्वाक्यमपार्थवदपार्थमित्युच्यते । यथा देवाकानिनि, वेत्रशाककुज इत्यादि । एतदपि न युक्तम् । नातिव्याख्येयमिति वचनात् । तथा काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवदिति । सुधियां ह्यतिव्याख्येयमपि काव्यं नेष्टं, किमङ्ग पुनर्यस्यातिव्याख्यानेऽपि न स्पष्टार्थप्रतिभासः । तस्मान्नास्यापार्थदोषस्य कथञ्चिदपि फलवत्ता ।

अत्रोच्यते । सत्यम् । अव्यवच्छिन्नव्यवच्छेद्याभावान्नार्थोऽपार्थदोषेण । किन्त्वेतदाभासानां स्पष्टान्धकप्रहेलिकादीनां प्रयोज्यत्वमिष्टम् । तदनेन व्यर्थैकार्थससंशय[5]मध्यपातिना ज्ञाप्यते । व्यर्थादीनां ह्याभासा विरोधालङ्कारयमकलाटीयानुप्रासससन्देहास्ते अलङ्कारवर्गमध्यपातेन प्रयोगार्हाः । एवमपार्थाभासा अपि प्रहेलिकादयः प्रयोज्याः ।

अयमभिप्रायः । किञ्चित् काव्यं[6] लक्षणेन व्यवच्छिन्नम् । किञ्चिच्च काव्यविशेषलक्षणेन अर्थ्यमित्यादिना । तथा नातिव्याख्येयमिति[7] । अपरमेकार्थदोषेण । अतोऽत्राव्यवच्छिन्नं व्यवच्छेद्यं नास्ति । सर्वस्यैव लक्षणान्तरैः पराकृतत्वात् । किञ्चिच्च निरीक्ष्य विद्युन्नयनैरित्यादि । तथा मतिमोहविधायिनामित्यादि व्यवच्छेदानर्हमेव । उपपन्नत्वात् । अतश्च यद्व्यवच्छेदार्हं तदव्यवच्छिन्नं नास्ति इत्यपार्थदोषो न वक्तव्यः । उक्तश्च । अत इयं परिसङ्ख्या, प्राप्ते वचनमनन्यार्थत्वे[8] सतीत्येवंविधलक्षणलक्षिता । अनया चापार्थमेव

१. एवंविधः सन् प्रभुरभूत्यै भवति ॥ २. अमात्यादीनाम् ॥ ३ चकारो द्वयः ॥ ४. परिभूतपरिच्छदः ॥ ५. –र्थसंशय– ख. ॥ ६ काव्य ख. ॥ ७. तथानति– ख. ॥ ८. अनन्यप्रयोजनत्वे ॥

दोषो न त्वपार्थाभासमिति अपार्थाभासस्यादोषत्वं ख्याप्यते न त्वपार्थस्य। तेनापार्थाभासस्य स्पष्टान्धकादेः प्रयोज्यत्वमत्रोक्तम्। एतावांस्तु विशेषः। पूर्वोक्तानामत्यन्तचारुता। स्पष्टान्धकादीनां तु मध्या स्थितिः। यद्यपि च क्वचित् प्रहेलिकादौ श्लिष्टोक्तेः प्रसरो दृश्यते, तथापि न सर्वं तत्तथेति युक्तमपार्थाभासत्वेन प्रयोज्यत्वमेषामाख्यातुम्। समानप्रयत्नोच्चार्यतत्प्रतिच्छायशब्दबलात्।

क्वचिदलङ्कारान्तरवाक्यान्तरप्रतिभे। क्वचिदादावानर्थक्यप्रतिभासे पश्चात् समानप्रयत्नोच्चार्यशब्दबलेनार्थाध्यवसायः। अयमनन्तभेदोऽर्थो विषयः स्पष्टान्धकादीनाम्। यथा

रामेण निहतं दृष्ट्वा वने परशुना मृगम्।
स्वकीयं निन्दति व्याधो विश्वकर्माणमर्जुनम्॥

रामेण कृष्णेन, परशुना परकीयशुना, विश्वकर्माणं विगतश्वव्यापारम्, अर्जुनं शुक्लम्। तथा

अष्टौ पुत्र कुरु श्लोकानिति पित्रोदितः सुतः।
तेन पञ्च कृताः श्लोकाः पितुश्चाज्ञा न खण्डिता॥ इति।

अष्टौ छन्दोविशेषे।

यदि वा यत्र वाक्ये प्रतिपन्नः संसर्गः पर्यालोचनया बाध्यते न चालङ्कारान्तरानुप्रवेशसम्भवेन परिहारः प्रयोगश्च दृश्यते तद्वाक्यमनेनापार्थदोषेण निरस्यते। यथा

एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुरा करुणं रसन्ति।
नृत्यं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्य्यग्गता वरममी न वयं मनुष्याः॥

अत्र ना[चा ?]न्तर्नीतेवशब्दयोगेन रुदन्तीत्यादिसम्भावना। न च निमित्ताभावादतिशयोक्तेरपि प्रसरोऽत एव न सम्बन्धः। इत्थम्भूतं तु काव्यं लौकिकीं वाचोयुक्तिं किलाङ्गीकृत्य कुर्वन्ति कवयः। न च तत्तथा लोके, निमित्ताश्रयणेन प्रयोगात्। यथा तया रुदत्या पक्षितृणपर्णान्यपि रोदितानि। नैवमभिहितवाक्ये निमित्तमस्तीति।

**नास्ति सङ्गतिः** इति। तदेदानीमित्यादिशब्दप्रयोगाभावादित्यर्थः। **यस्मिन्ननेकम्** इति। यस्मिन् वाक्ये वक्ता अनेकार्थवाचकानि पदानि जल्पन् स्वयमेवानेकमर्थमालोचयति तत्र तेषां पदानामसङ्गतिर्नैव दोषाय। विवक्षावशेन हि शब्दाः प्रयुज्यन्तेऽनेकं

१. नत्वलङ्कारत्वेन॥

चार्थं विलक्षणं वक्तुमन्योन्यं चेत् पदानि न सम्बद्धानि न कश्चिद्दोष इति भावः। असम्बद्धत्वाच्च दोषाशङ्का युक्ता। स्वयमालोचनाच्च न दोषः। **कुसुमभरः** इति। कश्चित् कामी मलयोद्याने तरुणीं दृष्ट्वा स्वयमेव पर्यालोचयति। **समुदायार्थशून्यं यत्तदपार्थं प्रचक्षते** इत्यादि। अपवादार्थमिदम्।

**विरसः** इति विरुद्धो रस इत्यर्थः। **प्रबन्धेभ्यः** इति। तद्यथा **हयग्रीववधे**[1]। तत्र किल **हयग्रीवेण**[2] पुत्रो **नरकासुरा**नयनाय महोत्सवे प्रकृते[3] प्रेषितः। स च तत्स्थानं गत्वा हरिहतं च नरकं जनेभ्यः श्रुत्वा तत्सुतां च पितृदुःखाद्वनगतां बुद्ध्वा समाश्वासनार्थं तस्या एव सकाशमगमत्। एवमत्र करुणे रसे प्रकृते शृङ्गारो वर्णितः। तथाहि—स तां तपस्यन्तीं दृष्ट्वैव विषमशरशितशरव्रातनिकररुजा विवशीकृतहृदय इदमुवाच

नववयसि रतोत्सवक्षमाया—
स्तव तनुगात्रि तपो हि नानुरूपम्।
वद कुसुमरजोभिरापगानां
पृथुजघने यदि सेतवः क्रियन्ते॥

एतमेवार्थं स्वयमार्यया सूचयन्नाह -**तव वनवास** इति। **रसवस्तुनोः** इति रसयोरित्यर्थः। **मायादि**—इति। माया वञ्चनं परव्यामोहनमिति यावत्। आदिशब्देन क्रीडादीनां ग्रहणम्। तदाह

क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्ण[4]मन्त्रणे।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः॥

**क्रियागुप्तादि**—इति। आदिग्रहणात् कारकगुप्ताक्षरच्युतक—मात्राच्युतक—बिन्दुच्युतक—व्यत्यस्ताक्षर—व्यत्यस्तमात्र—व्यस्तबिन्दु—बिन्दुमती—**गूढचतुर्थ**—प्रहेलिका—प्रश्नोत्तरादि। **उभयरूपता**—इति। वाक्यार्थाश्रयरूपता वाक्याश्रयरूपता चेत्यर्थः। **संठवेइ** इति। तदैव हस्तस्पर्शादिसुखविधानेन उत्तरकालं च प्रच्छन्नसुरतोपभोगमनोरथपरिपूरणाशासंदर्शनेनेत्यर्थः। **प्रक्रान्तसमासस्य** इति। "उपमानानि सामान्यवचनैः समस्यन्ते" इत्येवंविधस्य।

इत्यर्थदोषाः॥

[अथ रसदोषाः]

**नानर्थक** इति। शब्दोपात्तस्यैव हि पुनरनुवादो भवति, न प्रतीयमानस्येत्यर्थः। **अनुभावापर्यवसायिनः** इति। शृङ्गारी चेद्युवा संभवन्ति तथाविधा अनभावाः। शान्तश्चेन्न

---

१. महाकाव्ये॥ २. दानवविशेषेण॥ ३. प्रारब्धे॥ ४ गुप्त॥

सम्भवन्ति । तं प्रति परुपशरूपत्वात्तथाविधानां विभावानामिति । शृङ्गारित्वनिश्चयाभावे सत्स्वपि तथाविधेषु विभावेषु लीलादयोऽनुभावा न कथञ्चिदिह व्यज्यन्त इति यत्नेन प्रतिपाद्याः ।

**अथ प्रतिकूलविभावादिग्रहः** इति । इह हि अलक्ष्यक्रमव्यङ्गचस्य ध्वनेः प्रबन्धात्मनो **रामायणमहाभारतादौ** प्रकाशमानस्य प्रसिद्धस्यैव यथावत् प्रकाशनप्रकारजातं, विभावभावेत्यादिना प्रतिपाद्यविरोधिरसेत्यादिना तद्विरुद्धं **सहृदयचक्रवर्त्तिना** यत् प्रकाशितं तदुपजीव्य प्रतिकूलविभावादिग्रहादये[1] इमे दोषाः केचिदनेन **काव्यप्रकाशकारेण** प्रदर्शिताः । तथाहि—प्रबन्धोऽपि[2] रसादीनां व्यञ्जक इत्युक्तं[3], तस्य व्यञ्जकत्वे ये निबन्धनप्रकारास्ते क्रमेणैवोपयोगिनः । पूर्वं हि कथापरीक्षा, तत्राधिकावापः, फलपर्यन्ततानयनं, रसप्रतिजागरणमित्यादि । तत्र प्रथमं तावन्निबन्धनम् । यथा

"विभावभावानुभाव-सञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा" ॥

यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनुभावः सञ्चारी वा तदौचित्यचारुणः कथाशरीरस्य विधिरिति शृङ्गारवर्णनेप्सुना हि तादृशी कथा संश्रयणीया यस्यामृतुमाल्यादेर्विभावस्य लीलादेरनुभावस्य हर्षधृत्यादेः सञ्चारिणः स्फुट एव सद्भाव इति ।

तत्र विभावौचित्यं तावल्लोके **भरते** च प्रसिद्धमेव । भावौचित्यं तु प्रकृत्यौचित्यात् । तच्च प्रकृतिविपर्यये रसदोषे दर्शयिष्यते । अनुभावौचित्यमपि **भरतादौ** प्रसिद्धमेव । इयत्तूच्यते । लक्षणज्ञत्वं लक्ष्यपरिशीलनम् अदृष्टप्रभावोदितस्वप्रतिभाशालित्वं चानुसर्त्तव्यम् । तथाहि—**भरता**दिविरचितां स्थितिं चानुवर्त्तमानेन महाकविप्रबन्धान् वा पर्यालोचयता स्वप्रतिभां वा अनुसरता कविना अवहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः । औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत् प्रतिपादयति यदितिहासादिषु रसवतीषु कथासु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यम् । नेतरत् ।

**रसवतीषु** इति अनादरे सप्तमी । रसवत्त्वं चाविवेचकजनाभिमानाभिप्रायेण मन्तव्यम् । विभावाद्यौचित्येन हि विना का रसवत्तेत्यर्थः । वृत्तादपि च कथाशरीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम् । तत्र ह्यनवधानात् स्खलतः कवेरव्युत्पत्तिसम्भावना महती भवति । न हि तत्र इतिहासवशाद् एवं मया निबद्धमिति जात्युत्तरमपि सम्भवति । परिकरश्लोकश्चात्र

१. –ग्रहेत्यादयः इम ख. ग. ॥ २. मुक्तकः ॥ ३. ध्वनौ ॥ ४. प्रक्षेपः ॥

"कथाशरीरमुत्पाद्य वस्तु कार्यं तथा तथा ।
यथा रसमयं सर्वमेव तत्प्रतिभासते ॥"

रसमयत्वसंपादने चाभ्युपायः सम्यग्विभावाद्यौचित्यानुसरणम् । तद्दर्शितमेव । किञ्च

"सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥"

**सिद्ध**–इति । सिद्ध आस्वादमात्रशेषो न तु भावनीयो रसो येषु । कथानाम् आश्रया इतिहासाः । **तैः** इति सहार्थे । तैः सह स्वेच्छा न योज्या । सहार्थश्चात्र विषयविषयिभावस्तेन तेषु कथाश्रयेषु स्वेच्छैव तावन्न योज्या । कथञ्चिद्वा यदि योज्यते तत्तत्प्रसिद्धरसविरुद्धा न योज्या । यथा **रामस्य** वीर[धीर ?]ललितत्वयोजनेन नाटिकानायकत्वं कश्चित् कुर्यादिति तदत्यन्तमसमञ्जसम् । यदुक्तम् **रामाभ्युदये**[1] **यशोवर्मणा**–कथामार्गे न चातिक्रमः । स्वेच्छाऽपि यदि वा योज्यते रसविरोधिनी न योज्येति प्रथमो व्यञ्जकत्वनिमित्तप्रकारः । अन्यांश्च स्वावसरेष्वेव दर्शयिष्यामः । एवमुक्तस्य कथापरीक्षणलक्षणस्य विभावाद्यौचित्यस्य व्यञ्जकत्वनिबन्धनस्य यद् विरुद्धन्

"प्रबन्धे मुक्तके वापि रसादीन् वन्द्धुमिच्छुना[2] ।
यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥"

इत्युपक्रम्य

"विरोधिरससम्बन्धिविभावादिपरिग्रहः ।"

इत्यन्तेन[3] प्रकाशितं तदुपजीव्यप्रतिकूलविभावादिग्रहनामा दोषोऽयमभिहितः ।

**दुर्वारा** इति । अत्र कृतान्तोऽक्षम इति वैराग्यकथासंसूचकम् । **चिन्ताया एव प्रधानताम्** इति । अत्र शृङ्गाराङ्गेन वाक्यार्थसमापनाद्विवक्षितः शृङ्गारः एव लब्धप्रतिष्ठ इति तद्विरुद्धवीररसगतभावै[4]र्निबन्धो वाच्यमानतया तत्परिपोषक एव यद्यपि शृङ्गारवीरयोर्न परस्परं विरोधस्तथाप्युत्साहप्रकृतेर्वीरोदात्तस्य तथाविधकार्यकारित्वमेवानुगुणमित्यनुचितशृङ्गारोपनिबन्धो विरुध्यत इति युक्तं वीरशृङ्गारयोर्विरोधापवादत्वेनेदमुदाहरणमिति ।

**द्वितीय**–इति । विपक्षभूतवैराग्यविभावाद्यवधारणेऽपि ह्यशक्यविच्छेदत्वेन दार्ढ्यमेवानुरागस्योक्तं भवति इति भावः । तदेवम्

"विवक्षिते रसे लब्ध-प्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥" इति ।

---

१. नाटके ॥ २. –मिच्छता ख. ग ॥ ३. मूले "इत्यनेन" इति ॥ ४ व्यभिचारी ॥ ५, निर्दोषा ॥

यदुक्तं तत्र बाध्यानामुक्तिरच्छलेत्यंशो व्याख्यातः । अङ्गभावं वा प्राप्तानामिति च योंऽशस्तं विवेचयितुमाह—**यत्र तु** इति । **अङ्गताऽऽप्तिः** इति । अङ्गभावप्राप्तिर्हि तेषां स्वाभाविकी समारोपकृता वा[1] । तत्र स्वाभाविक्यामविरोधो यथा

भ्रमिमरतिमलसहृदयतां
प्रलयं मूर्च्छां तमः शरीरसादम्[2] ।
मरणं च जलदभुजगजं
प्रसह्य कुरुते विषं[3] वियोगिनीनाम् ॥

**मरणम्** इति । मरणं ह्यचिरकालप्रत्यापत्तिमयं म्रियमाणस्य पूर्वक्रिया वा । तत्र प्राणत्यागकर्तृ[4]तात्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मरणशब्देनात्र विवक्षिता । अत्र च भ्रम्यादीनां व्याधीनां विप्रलम्भे स्वभावसिद्धोऽङ्गभाव इति नास्ति विरोधः । समारोपितायां तु स्वयमेवोदाहरिष्यति-पाण्डु क्षाममित्यादि । यथा वा कोपात्कोमलेति । अत्र बद्ध्वा हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम् ।

**तदङ्गानाम्** इति । तदङ्गानामेवादोषो नातदङ्गानामालस्यौग्र्यजुगुप्सानामित्यर्थः । तद्वर्जं[5] सर्व एव शृङ्गारे व्यभिचारिण इत्युक्तत्वात् । **आश्रय**—इति । आश्रयस्य स्त्रीपुरुषान्यतरस्याधिष्ठानस्यापाये रतिरेवोच्छिद्येत । तस्या जीवितसर्वस्वाभिमानरूपत्वेनोभयाधिष्ठानत्वात् । **वाक्यार्थत्वम्** इति प्रस्तुतत्वमित्यर्थः । नन्वेवं सर्व एव व्यभिचारिण इति विघटितमित्याशङ्क्याह—**शृङ्गारे वा** इति । अदीर्घकाले यत्र[7] मरणे विश्रान्तिपदबन्ध एव नोत्पद्यते तत्रास्य व्यभिचारित्वम् । **कदाचिद्** इति । यदि तादृशीं भङ्गीं घटयितुं सुकवेः कौशलं भवति ।

एवमुभयरूपाङ्गभावप्राप्तिर्व्याख्याता । या पुनरन्या प्रधाने एकस्मिन् वाक्यार्थे परस्परविरोधिनोर्द्वयोर्[6]ङ्गभावगमनरूपा, ताम् अङ्गिन्यङ्गत्वमाप्तौ यावित्यत्र व्याख्यास्यामः । **मरणे** इत्यादि । मरणस्य यत्पदं या अवस्थितिस्तस्य बन्धमात्रमपि न कृतमित्यर्थः । यथा मरणे प्रतीतिर्न विश्राम्यति तथा मरणं निबद्धमिति यावत् । **अत्र करुणोचित** इति । करुण[8]स्यैवाङ्गभूतः पाण्डुरोगः श्लेषबलारोपितोऽत एव च शृङ्गारस्याङ्गतामिवागतः साधारण्यान्न दुष्ट इत्यर्थः ।

**क्षेत्रिय** इति पारदारिकः प्रकृतः[9] प्रतीत एवेत्ययमर्थो न व्याख्यातः । **प्रसिद्ध**—इति । प्रसिद्धः सोऽस्थिरत्वलक्षणो गुणो यत्र तच्च[10] तदुपमानं च तत् तस्य भावस्तत्ता तयेत्यर्थः । **उपात्तम्** इति । शाब्द्या वृत्त्या यद्यप्युपमानत्वमस्थिरत्वस्य प्रतिपादितं तथाऽ-

१. वा समुच्चये ॥ २. खेदम् ॥ ३. पयस्तच्च ॥ ४. करण ॥ ५. रसे शृङ्गारे ॥ ६. –विरोधेनोर्द्ध्वयो–इति क. ख. ॥ ७. करण– क. ख. ॥ ८. कुष्ठरोगः [!] ९. प्रकृतेः क. ॥ १०. अपाङ्गभङ्गरूपं वस्तु ॥

प्यस्थिरत्वगुणविशिष्टो मत्ताङ्गनापाङ्गभङ्ग एवोपमानभावेनात्र विवक्षितः। तस्यैव तद्गुणविशिष्टस्योपमानतोपपत्तेः। यदि वा मत्ताङ्गनापाङ्गभङ्गेत्येतत् शृङ्गारं प्रति सम्भाव्यमानविभावानुभावरूपमपि प्रसिद्धतद्गुणोपमानतयोपात्तं शान्तमेव पुष्णाति, न तु शृङ्गारमित्यञ्जसतयैव व्याख्येयम्।

**नैरन्तर्यस्याभावाद्** इति। शृङ्गारस्याप्रतीतेः कयोर्नैरन्तर्यं स्यादिति भावः। **आश्रयैक्ये** इति। तथा चोक्तम्

"विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनां भवेत्।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता॥"

**रसान्तरेण** इति। यदुक्तम्

"एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
रसान्तरव्यवधिनां रसो व्यङ्ग्यः सुमेधसा॥"

एकाश्रयत्वेन निमित्तेन यो न विरोधी किन्तु निरन्तरत्वेन निमित्तेन विरोधमेति स तथाविधविरुद्धरसद्वयाविरुद्धेन रसान्तरेण मध्ये निवेशितेन युक्तः कार्य इत्यर्थः।

**शान्तः** इति। ननु नास्त्येव शान्तो रसस्तस्य हि स्थाय्येव नोपदिष्टो **मुनिना**। मैवम्। शान्तो हि तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव। तृष्णानां विषयाभिलाषाणां यः क्षयः सर्वतो निवृत्तिरूपो निर्वेदस्तदेव सुखं तस्य स्थायीभूतस्य यः परिपोषो रस्यमानताकृतस्तदेव लक्षणं यस्य स शान्तो रसः प्रतीयते। स्वानुभवेनापि निवृत्तभोजनाद्यशेषविषयेच्छाप्रसरत्वकाले सम्भाव्यत एव। तथा चोक्तम्

"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः[?] षोडशीं कलाम्॥"

**अन्ये** तु सर्वचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते। तच्चासत्। अभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात्। पर्युदासे त्वस्मत्पक्ष एवायम्।

**अन्ये** तु

"स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।
पुनर्निमित्तापायेन शान्त एव प्रलीयते॥"

इति **भरत**वाक्यं दृष्टवन्तः सर्वरससामान्यस्वभावं शान्तमाचक्षाणा अनुपजातविशेषान्तरं चित्तवृत्तिरूपं शान्तस्य स्थायिभावं मन्यन्ते। एतच्च नातीवास्मत्पक्षाद्दूरम्।

---

१. रसः॥ २. सह॥ ३. व्यवधानेन॥

प्रागभावप्रध्वंसाभावकृतस्तु विशेषः। युक्तश्च प्रध्वंस एव तृष्णानाम्। यथोक्तम्—"वीतरागजन्मादर्शनाद्" इति।

**प्रतीयत एव** इति। **मुनिनाप्यङ्गीक्रियत एव** क्वचिच्छम इत्यादि वदता। न च तदीया पर्यन्तावस्था व्यावर्णनीया, येन सर्वचेष्टोपरमाद् अनुभावाभावेनाऽप्रतीयमानता स्यात्। शृङ्गारादेरपि हि फलभूमावव्यावर्णनीयतैव। पूर्वभूमौ तु "[तस्य] प्रशान्तवाहिता-संस्कारात्" "तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः" इतिसूत्रद्वयनीत्या चित्राकारा यम-नियमादिचेष्टा वा राज्यधुरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दृष्टैवेत्यनुभावसद्भावात् यमादिमध्यसम्भाव्यमानभूयोव्यभिचारिसद्भावाच्च प्रतीयत एव। न न प्रतीयते। नास्य विभावाः सन्तीति चेन्न। प्रतीयत एव तावदसौ[1]। तस्य च भवितव्यमेव प्राक्तनकुशल-परिपाकपरमेश्वरानुग्रहाध्यात्मरहस्यशास्त्रवीतरागपरिशीलनादिभिर्विभावैरिति।

ननु तत्र हृदयसंवादाभावाद्रस्यमानतैव नोपपन्ना। क एवमाह स[2] नास्तीति। यतः प्रतीयत एवेत्युक्तम्। ननु प्रतीयते सर्वस्य तु श्लाघास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसत्वाच्च्यवताम्। अयमर्थः। यदि नाम सर्वजनानुभव-गोचरता तस्य[4] नास्ति नैतावताऽसौ अलोकसामान्यमहानुभावचित्तवृत्तिविशेषवत् प्रतिक्षेप्तुं शक्यः। ननु धर्मप्रधानोऽसौ वीर एवेति सम्भाव्यते। न वीरस्याभिमानमयत्वेन व्यवस्था-नात्। उत्साहो ह्ययमेवंविध इत्येवम्प्राणः इत्यर्थः। शान्तस्य चाहङ्कारप्रशमैकरूपतया स्थितेः। तयोरीहामयत्वनिरीहत्वेनात्यन्तविरुद्धयोरपि यद्यैक्यं परिकल्प्यते तद् वीररौद्रयोरपि तथाप्रसङ्गः। तयोर्हि अत्यन्तविरोधोऽपि नास्ति। धर्मार्थकामार्जनोपयोगित्वलक्षणस्य रूपस्य समानत्वात्।

नन्वेवं दयावीरः कोऽभिधीयतां धर्मवीरो दानवीरो वा। न चासौ कश्चित्। शान्तस्यैवेदं नामान्तरकरणम्। तथा हि **मुनिः**

"दानवीरं युद्धवीरं धर्मवीरं तथैव च।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव च॥"

इत्यागमपुरःसरं त्रैविध्यमेवाभ्यधादित्यस्ति शान्तो रसः।

**क्रमप्रसरसम्भावना** इति। शान्तादनन्तरमद्भुतस्ततः शृङ्गार इत्यनेन क्रमेण शृङ्गारस्य प्रसरः सम्भाव्यते इत्यभिप्रायेणाद्भुतमन्तरीकृत्य शृङ्गारो निबद्धः। क्रमप्रसरमेव दर्शयति—अहो गीतमित्यादिना। **एकस्मिन्नपि वाक्ये** इति। तथा चोक्तम्

---

१. शान्तो रसः॥ २. मुनिः॥ ३. हृदयसंवादः॥ ४. शान्तस्य॥ ५. महाप्रभावाः पुरुषा भीमादयः॥

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्त्तते हि रसयोः समावेशे विरोधिता ॥"

रसान्तरेण व्यवहितयोरेकप्रबन्धस्थयोर्विरुद्धयोर्विरोधिता निवर्त्तत इत्यत्र न काचिद्भ्रान्तिः। यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्त्तत इत्यर्थः।

**दूरापेतत्वम्** इति स्वदेहानामित्यर्थः। **असम्भावनास्पदम्** इति आत्मीया इमे देहा इत्येवं संभावनाया अस्थानमित्यर्थः। **तदात्म**–इति। त एव देहा एवात्मान आत्मीयास्तेषु वा आत्मीया अमी इति सम्भावनाया अनिवर्त्तनादित्यर्थः। **उत्साहाद्यवगत्या** इति। वीराः स्वदेहानित्यादिना या उत्साहाद्यवगतिस्तया, उत्साहाद्यवगतिकारिणोश्च कर्तृकर्मलक्षणयोरर्थयोर्विशेष्यत्वेन सकलवाक्यार्थानुगामितया प्रतीतत्वात्। शृङ्गारबीभत्सयोरन्तरेऽविनिवेशितस्यापि वीरस्य नितरामन्तरा भवनं प्रतीयत एवेत्यर्थः। आदिग्रहणात्तद्व्यभिचारिप्रभृतयो गृह्यन्ते।

**दन्तक्षतानि** इति। अत्र शृङ्गारतुल्यत्वेन शान्तो विवक्षितः। **रतिर्या** इति। अत्र रत्या प्रेयोऽलङ्काररूपया स्वालम्बनभूतो नृपप्रभावातिशयो लक्ष्यते। **शोकव्यभिचारि** इति। यदा भीता इत्यनेन करुणस्थायिनः शोकस्य व्यभिचारिभूतं तुच्छं[१] तु नारीगतं भयमुपवर्णितं तदा पुनरप्युद्विवाहा इवेत्युत्प्रेक्षावशसमर्पितस्य कुमारीजनसुलभस्य भयस्यानुस्मरणमञ्जसमेवेत्यर्थः।

ननु अन्यपरत्वेऽपि स्वभावो न निवर्त्तते, स्वभावकृत एव च विरोध इत्यभिप्रायेणाह–**अन्यपरत्वेऽपि** इति। **वाच्यस्य** इति वाक्यवाच्यस्येत्यर्थः। **तदाक्षिप्तानाम्** इति। वाक्यार्थाक्षिप्तत्वादेव रसानां वाक्यार्थत्वमभ्युपगम्यत इति न पूर्वापरव्याघातः। **भीतविप्लुतादि** इति। आदिग्रहणात् करुणादयो दृष्टिविशेषा गृह्यन्ते। तथा च तल्लक्षणानि–

"प्रोद्वृत्तनिस्तब्धपुटा स्फुरदुद्वृत्ततारिका[३]।
दृष्टिर्भयातिरेकाऽत्यर्थं भीता ज्ञेया भयानके ॥
पुटौ प्रस्फुरितौ यस्या निस्तब्धौ पतितौ पुनः।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥
प्रयोज्या चापलोन्माद-दुःखार्तिमरणादिषु।
................................ ॥
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारिका[४]।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥" इति।

---

१. त्वच्छं ग ॥ २. पूर्वत्र वाक्यार्थत्वेनाभ्युपगमादित्यत्र ॥ ३. –तारका ग. ॥
४. –ताराक ग ॥

**अर्थ** इति करुणलक्षणः। **लेशतस्तु सम्भोगस्य** इत्यादि। संभोगशृङ्गारोपयोगाभिनयसूचाकरणक्रमेण चेत्यर्थः। **एवम्** इति। यथा एहीत्यत्र श्लोके विधिप्रतिषेधयोरनूबमानत्वेन समावेशेन विरोधस्तथेत्यर्थः। **कुरवक**–इति। अत्र हि यच्छब्दनिर्देश्यस्य नृपस्य प्रभावातिशयवर्णने तद्विपक्षाणां यः करुणो रसः स न केवलं विभिन्नाश्रयत्वेन यावता स्वास्वादविश्रान्त्यभावाद्विवेकशालिनां सामाजिकानां वानचित्तहृतिमुत्पादयितुमलमिति कुण्ठशक्तित्वेनापि न वीरं विरुणद्धि, प्रत्युत वीरास्वादातिशयपर्यवसानेन प्रीत्यतिशयहेतुत्वं प्रतिपद्यत इति।

**अत** इति। यस्मात् करुणस्य कुण्ठशक्तित्वेन विषयान्तरे वीरेण विरोधिना न विरोधसंभवोऽत इहापि करुणस्य कुण्ठशक्तित्वात्तद्विरोधाधायिना सम्भोगेन न कथञ्चिद्दूरवद्विरोधः सम्भवतीति। **अस्यैव निर्विरोधत्वम्**–इति। अत्रायं भावः। पूर्वं पक्षद्वये संभोगकरुणयोरन्यत्राङ्गभावगमनान्निर्विरोधत्वमुक्तम्। अधुना तु स संभोगः करुणस्यैवाङ्गतां प्रतिपन्नः कथं विरोधीति व्यवस्थाप्यते। तथाहि करुणो नाम-इष्टजनविनिपातादेः विभावादिरुक्तम्। इष्टता च नाम रमणीयतामूला। ततश्च पुनरप्युचद्विवाहा इवेत्युत्प्रेक्षयेदमुक्तम्। दावाग्नेः परितो भ्रमणेन प्राक्तनः प्रथमानुरागातिशयवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रकृष्टां प्रतिपद्यते इति वाक्यार्थीभूतस्य करुणस्य विरोधिनाऽपि शृङ्गारेण परिपोष एवार्धीयते। परतस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एवार्थ उपोद्बल्यते। उक्तं हि

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥"

अमुना च विरोधोद्धरणप्रकारजातेन बहुतरं लक्ष्यमुपपादितं भवतीत्यभिप्रायेणाह–**इत्थं च** इति। **तस्य** इति करुणस्य। **अथवा** इति। पूर्वमङ्गतोक्त्या प्रकारद्वयेन निर्विरोधत्वं सूचितम्। इदानीं तृतीयेनापि प्रकारेण तद् व्यवस्थाप्यत इत्यर्थः।

एवं रसानां विरोधिभिः समावेशासमावेशयोर्विषयविभागे दर्शिते तेषामेकप्रबन्धविनिवेशने यो न्यायस्तं प्रतिपादयितुं प्रस्तावाद् **ध्वनिकारोक्तिमेव** प्रदर्श्यते

"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता॥"

---

१. -नूद्यमानसमावेशेन ख॥ २. स्वात्मन्यास्वाद- ग.॥ ३. आगन्तुकानाम्॥ ४. क्रामन्त्य इत्यादौ॥ ५ वक्ष्यमाणम्॥ ६. वाक्यार्थीभूतस्य वीरस्य सान्निध्यात् करुणस्य वाक्यार्थीभूतत्वम्॥ ७. वीर॥ ८ पुष्टः क्रियते॥ ९. कृतात्मसंस्कारत्वेन॥ १०. लक्षणम्॥ ११. प्रबन्धानाम्॥

प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाऽङ्गाङ्गिभावेन वा बहवो रसा उपनिबध्यन्त इति प्रसिद्धौ सत्यामपि, यः प्रबन्धानां छायातिशययोगमिच्छति तेन तेषां रसानामन्यतमः कश्चिद्विवक्षितो रसोऽङ्गित्वेन विनिवेशयितव्य इत्ययं युक्ततरो मार्गः।

ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते

"रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः॥"

प्रबन्धेषु प्रथमतरं प्रस्तुतः सन् पुनः पुनरनुसन्धीयमानत्वेन स्थायी यो रसस्तस्य सकलसन्धिव्यापिनो रसान्तैरन्तरालवर्त्तिभिः समावेशो यः स नाङ्गितामुपहन्ति। एतदेवोपपादयितुमुच्यते

"कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधो नैव विद्यते॥"

सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्प्यते न च तत्कार्यान्तरैर्न सङ्कीर्यते, न च तैः सङ्कीर्यमाणस्यापि तस्य प्राधान्यमपचीयते, तथैव रसस्याप्येकस्य सन्निवेशे क्रियमाणे विरोधो न कश्चित्। प्रत्युत प्रत्युदितविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्त्तते।

ननु वीरशृङ्गारयोः शृङ्गारहास्ययोः वीराद्भुतयोर्वीररौद्रयो रौद्रकरुणयोः शृङ्गाराद्भुतयोरित्यादीनां येषां परस्परमविरोधस्तेषां भवत्वङ्गाङ्गिभावः। येषां तु परस्परं बाध्यबाधकभाव एव तेषां स कथं भवेदित्याशङ्क्याह

"अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता॥"

वाशब्दस्यायमभिप्रायः। अङ्गिरसापेक्षया यदस्य रसान्तरस्योत्कर्षो निबध्यते तदाऽविरुद्धोऽपि रसो निबद्धश्चोद्यावहः। अथ तु युक्त्याऽङ्गिनि रसेऽङ्गभावनयनोपपत्तिर्घटते, तद् विरुद्धोऽपि रसो वक्ष्यमाणेन विषयभेदादियोजनेनोपनिबध्यमानो न दोषावह इति विरोधाविरोधावकिञ्चित्करौ, विनिवेशनप्रकार एव त्ववधातव्यमिति। तत्राविरोधिनो रसस्याङ्गिरसापेक्षयाऽत्यन्तमाधिक्यं न कर्त्तव्यम्। उत्कर्षसाम्येऽपि तयोरविरोधसम्भवादित्ययं प्रथमः परिपोषपरिहारः। यथा

१. एवं सति॥ २. यदि पुनः॥

एकत्तो रुयइ पिया अण्णत्तो समरतूरनिग्घोसो ।
णेहेण रणरसेण य भडस्स दोलाइयं हिययं ॥

रोदिति प्रियेत्यतो रत्युत्कर्षः, समरतूर्येति भटस्येति चोत्साहोत्कर्षः, दोलायितमिति च तयोरन्यूनाधिकतया साम्यमुक्तम् ।

एतच्च मुक्तकविषयमेव भवति न तु प्रबन्धविषयमिति **केचिदाहुः** स्म । तच्चासत् । आधिकारिकेऽपि इतिवृत्ते त्रिवर्गफले समप्राधान्यस्य सम्भवनात् । तथाहि **रत्नावल्यां** सचिवायत्तसिद्धित्वाभिप्रायेण पृथिवीराज्यलाभ आधिकारिकं फलम् । कन्यारत्नलाभः प्रासङ्गिकम् । नायकाभिप्रायेण तु विपर्यय इति स्थिते, मन्त्रिबुद्धौ नायकबुद्धौ च स्वाम्यमात्यबुद्ध्येकत्वात् फलमिति नीत्या एकीक्रियमाणायां समप्राधान्यमेव पर्यवस्यति ।

अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्येणानिवेशनम् । निवेशने वा क्षिप्रमेवाङ्गिगतव्यभिचार्यनुवृत्तिरिति द्वितीयः । यथा कोपात् कोमलेति । अत्राङ्गिभूतायां रतावङ्गत्वेन यः क्रोध उपनिबद्धस्तत्र बद्ध्वा दृढमिति अमर्षस्य निवेशितस्य क्षिप्रमेव रुदत्येति हसन्निति च रत्युचितेर्ष्यौत्सुक्यहर्षानुसन्धानम् ।

अङ्गत्वेन पुनः पुनः प्रत्यवेक्षापरिपोषं नीयमानस्याप्यङ्गभूतस्य तस्य रसस्येति तृतीयः । अत्र च **तापसवत्सराजे वत्सराजस्य पद्मावती**[1]विषयसंभोगशृङ्गार उदाहरणीकर्तव्यः । अनया दिशा अन्येऽपि प्रकारा उत्प्रेक्षणीयाः ।

अथ पुनः पुनर्दीप्तिरिति । तथा चोक्तम्[2]

"रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥"

**आरब्ध**-इति । इतिवृत्तवशादारब्धा शङ्क्यमानप्राया न तु सर्वथैवोपनता विश्रान्तिर्विच्छेदो यस्य स तथा । आरब्धविश्रान्ते रसस्याङ्गिनोऽनुसन्धिर्व्यञ्जकत्वे निबन्धनमित्यर्थः । यथा **तापसवत्सराजे** । एतच्चाङ्ग्यननुसन्धानलक्षणदोषव्यतिरेकद्वारेणोपदर्शयिष्यते । एवमुक्तस्य रसप्रतिजागरणरूपस्य रसानुसन्धानस्य व्यञ्जकत्वनिबन्धनप्रकारस्य योंऽशो विच्छेद आरम्भणीयः इति तद्विरुद्धम् ।

"परिपोषं गतस्यापि पौनःपुन्येन दीपनम्" ।

इति यत् प्रकाशितं तदुपजीव्यदोषोऽयमुपदर्शितः । **पुनरनुसन्धानं विधेयम्**-इति । यत्त्वंशस्तद्विरुद्धमङ्गिनोऽननुसन्धानमित्यनेन **अयम्** एव प्रकाशयिष्यति ।

---

१. वत्सराजबद्धा- ग. ॥ २ ध्वनिकारः ॥

**अथाकाण्डप्रथनम्** इति ।

" उद्दीपनप्रशमने यथावसरमन्तरा ।"

रसस्योद्दीपनं विभावादिपरिपूरणया यथा—अयं सो राया **उदयणो** इति **सागरिकायाः**, प्रशमनं च **वासवदत्तातः** पलायने, पुनरुद्दीपनं चित्रफलहकोल्लेखे, प्रशमनं **सुसङ्गता**प्रवेश इत्यादि । गाढं हि अनवसरपरिमृदितो रसः सुकुमारमालतीकुसुमवज्झटित्येव म्लानिमवलम्बेत । विशेषतस्तु शृङ्गारः । यदाह **मुनिः**

"यद्वामाभिनिवेशित्वं यतश्च[1] विनिवार्यते[2] ।

दुर्लभत्वं च यन्नार्याः कामिनः सा परा रतिः ॥" इति ।

सुलभावमानी हि मदन इति तद्विदः । तथाहि—अभिलष्यमाणं वस्तु प्राप्तं चेत् कोऽभिलाषः । तेन प्राप्तं प्राप्तमपहारितमिव गतं गतं प्राप्तमिवेत्येवं परम्पराक्रमेण विवर्द्धिष्णुरयं कामः परमां प्रीतिं प्रतनोति । न ह्यत्र कण्डूयायामिव निवृत्तिः साध्या, अपि तु भोगात्मकं सुखम् । भोगश्च सति कामे । तेन स प्रत्युत संवर्द्धनीयः । **सा रतिः** इति तद्धेतुत्वादित्यर्थः ।

वीररसादावपि यथावसरमुद्दीपनप्रशमनाभ्यां विना झटित्येवाद्भुतफुल्लकल्पे साध्ये लब्धे प्रकटीचिकीर्षित उपायोपेयभावो न प्रदर्शित एव स्यात् । एवमभिहितस्य फलपर्यन्ततानयनरूपस्य व्यञ्जकत्वनिमित्तप्रकारस्य योंऽशो रसस्य प्रशमनमिति तद्विरुद्धम् अकाण्डे च प्रकाशनमिति यत्तदत्रोपवर्णितम् । यस्तु रसस्योद्दीपनमित्यंशस्तद्विरुद्धम् अकाण्ड एव विच्छित्तिरिति यत्तदकाण्डच्छेद इति प्रदर्शयिष्यते । **अपि तावद्** इति । आभ्यां शब्दाभ्यां दुर्योधनादेस्तद्वर्णनं दूरापास्तमिति **वेणीसंहार**द्वितीयाङ्कभागमेवोदाहरणत्वेन ध्वनति । अत एव वक्ष्यति **दैवव्यामोहितत्वम्**—इति । **स्खलितानि** इति दोषा इत्यर्थः ।

**अथाङ्गतिविस्तृतिः** इति । यदुक्तम्

"इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम् ।

उत्प्रेक्ष्याप्यन्तराऽभीष्ट-रसोचितकथोन्नयः ॥

**स्थितिम्** इति । कथाशय्याम् । **कथोन्नयः** इति । यथा **कालिदास**प्रबन्धेषु । तथाहि **रघुवंशेऽजादीनां** राज्ञां विवाहादिवर्णनं नेतिहासेषु निरूपितम् । यथा च **सर्वसेन**विरचिते **हरिविजये** कान्तानुनाथनाङ्गत्वेन पारिजातहरणादि निरूपितमितिहासेष्वदृष्टमपि[3] । यथा वा **आनन्दवर्द्धनाचार्य**विनिर्मिते **अर्जुनचरिते** अर्जुनस्य पातालविजयादि वर्णितमितिहासाप्रसिद्धम् ।

---

१. भावे ॥ २. कामिनो निवारणम् ॥ ३. -दृष्टमिति ख. ॥

सत्कविना हि प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तत्तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनम्। इतिहासादेव तत्सिद्धेः।

तथा सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया न तु केवलया शास्त्रस्थितिसंपादनेच्छया। यथा **रत्नावल्यां** धीरललितस्य नायकस्य धर्मार्थाविरुद्धसंभोगसेवायामनौचित्याभावात्। प्रत्युत न निःसुखः स्यादिति श्लाघ्यत्वात्। पृथिवीराज्यमहाफलान्तरानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमे पञ्चापि सन्धयोऽवस्थापञ्चकसहिताः समुचितसन्ध्यङ्गपरिपूर्णा अर्थप्रकृतियुक्ता दर्शिता एव। प्रारम्भेऽस्मिन् स्वामिन इति, बीजादेव प्रभृति विश्रान्तविग्रहकथ इति, राज्यं निर्जितशत्रु इति च वचोभिरुपभोगसेवावसरोऽयमित्युपक्षेपात् प्रभृति हि निरूपितम्।

अस्यार्थस्य यत्नावधेयत्वेनेष्टत्वात् स्वकण्ठेन व्यतिरेक उक्तो न तु केवलयेति। तस्योदाहरणं यथा—**वेणीसंहारे** विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसबन्धाननुगुणमपि द्वितीयेऽङ्के **भरत**मतानुसरणमात्रेच्छया घटनम्। यदि च परमार्थतः पर्यालोच्यते ततो **मुने**रपि नेदृग्विधं मतम्। **मुनि**नापि हि सन्ध्यङ्गानां रसाङ्गभूतमितिवृत्तप्राशस्त्योत्पादनमेव प्रयोजनमुक्तं, न तु पूर्वरङ्गाङ्गवददृष्टसंपादनं विघ्नादिनिवारणं वा। यथोक्तम्

"इष्टस्यार्थस्य रचना वृत्तान्तस्यानपक्षयः।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्।
अङ्गानां षड्विधं ह्येतत् दृष्टं शास्त्रे प्रयोजनम्" ॥ इति।

ततश्च

"समीहा रतिभोगार्था विलासः परिकीर्तितः।"
........................................... ॥

इति प्रतिमुखसन्ध्यङ्गविलासलक्षणो रतिभोगशब्दः आधिकारिकरसोचितस्थायिभावोपबृंहकविभावाद्युपलक्षणार्थत्वेन प्रयुक्तो **नारायण**कविना। "यथातत्त्वं नाधिगतार्थ" इति "अधिकृतो ह्यत्र वीररस" इति एवं कारिकाद्वयेनोक्तस्याधिकावापलक्षणस्य व्यञ्जकत्वकारणप्रकारस्य विरुद्धं "विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्" इति यत् प्रकाशितं तदाश्रित्य दोषोऽयमभिहितः।

१. एवं सति ॥ २. सन्ध्यङ्गाद् ॥

**एवमन्येऽपि** इति । तथा च ध्वनिकारः–

"रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च ॥"

वृत्तेर्व्यवहारस्य यदनौचित्यं तदपि रसभङ्गहेतुरेव । यथा नायकं प्रति नायिकायाः कस्याश्चिदुचितां भङ्गिमन्तरेण स्वयं संभोगाभिलाषकथने । यदि वा वृत्तीनां **भरत**प्रसिद्धानां कैशिक्यादीनां काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यमविषये निबन्धनं तदपि रसभङ्गहेतुरेवेत्यपि द्रष्टव्यम् । अत्र च परिकरश्लोकाः

"मुख्यो व्यापारविषयः सुकवीनां रसादयः ।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥

नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥

पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः ।
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥

वाल्मीकिव्याससुख्याश्च ये प्रख्याता कवीश्वराः ।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः ॥"

**अपशब्द** इति दुर्यश इत्यर्थः ।

ननु **कालिदासः**[1] परिपोषं गतस्यापि करुणस्य रतिप्रलापेषु पौनःपुन्येन दीपनमकार्षीत् । तत् कोऽयं रसविरोधिनां परिहारं प्रति निर्बन्ध इत्याशङ्क्याह–**पूर्व** इति । न हि **वसिष्ठा**दिभिः कथञ्चिद्यदि स्मृतिमार्गस्त्यक्तस्तद्वयमपि तथा त्यजामः । अचिन्त्यहेतुकत्वान्मुनिचरितानामिति भावः ॥ इति रसदोषाः ॥

**इति कल्पपल्लवशेषे कल्पलताविवेके दोषदर्शनो नाम प्रथमः परिच्छेदः ॥**

---

१. कालिकादासः ख. ॥ २. उद्दीपनादीनाम् ॥

## [ अथ गुणविवेचनो नाम द्वितीयः परिच्छेदः । ]

**अर्थात्** इति । यद्यपि सम्भोगविप्रलम्भोभयरूपः शृङ्गारस्तथाऽपि गोबलीवर्दन्यायेनानन्तरविप्रलम्भप्रयोगसामर्थ्यात् शृङ्गारः सम्भोग इत्युक्तः । **श्रव्यत्वम्** इति । "श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते" इति माधुर्यलक्षणत्वेन श्रव्यत्वं **यद्भामहे**नोक्तं तन्न युक्तमित्यर्थः । **अङ्गीकृतम्** इति । यथाशब्दप्रयोगात्तथेति लभ्यते । **एताः** इति भङ्ग्यः । **सङ्घटनादयः** इति । **आदि**ग्रहणेन पश्चानुपूर्व्या मध्यवृत्त्यादयो गृह्यन्ते । **अत्र हि** इति । यदि हि क्रोधादिव्यञ्जकं वाच्यं भवेत्तत उपपद्येरन्नुद्धता रचनादयः । न चैतदनभिनेयार्थं येन स्वेच्छाप्यनुमन्येत रचनादीनाम् । किन्त्वभिनेयार्थमिदम् । न च तत्र रौद्रादावप्युद्धता रचनादयः उपपन्नाः । अतो वक्त्रौचित्यादेव रचनादीनामन्यथात्वमत्रेत्यर्थः । **श्रव्यम्** इति श्रुतिसुखम् । **विषयः** इति वाक्यलक्षणः । अनुप्रासविशेष एवायम् इति । श्रुतितुल्यत्वेन यन्माधुर्यम् एष श्रुत्यनुप्रास एवेति **भोजराजः** । **बन्धस्य** इति संयुक्ताक्षरपरत्वादिवर्णविशिष्टस्येत्यर्थः । **अविश्रान्त**—इति । अविश्रान्तस्थानकरणव्यापारगोचरः समासो दीर्घसमास इत्यर्थः । स एव विषयो यस्य गाढत्वस्य तत्तथा ।

**प्रथमद्वितीयैः** इति । प्रथमाश्च द्वितीयाश्च प्रथमद्वितीयास्तैर्हेतुभूतैरित्यर्थः । हेतौ तृतीया । हेतुश्च कारकः । स चात्रोपादानरूपो यथा मृदा घटः । ततश्च प्रथमानां द्वितीयैर्यः संयोग इत्यर्थः सम्पद्यते । एवमुत्तरत्रापि । **प्रथमैः** इति । प्रथमाश्च प्रथमाश्च प्रथमास्तैः प्रथमानां प्रथमैरित्यर्थः । एवं तृतीयानां तृतीयैरिति । **विलुलितमकरन्दम्** इति । अत्र शैथिल्यस्यापि सद्भावात् प्रसादोऽप्यस्ति । यत्र चोक्तरूपसर्वनिमित्तसन्निपातस्तत्रास्य शैथिल्यासम्पर्कात् प्रसादरूपत्वाप्राप्तौ शुद्धमेव सुव्यक्तं रूपम् । यथा केवलौजोगुणभासि प्रसादशून्यायां गौडीयरीतौ—

> दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—
> टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
> द्राक् पर्यस्तकपालसंपुटमितब्रह्माण्डभाण्डोदर-
> भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ इत्यादौ ।

**तद्गुरूणाम्** इति । क्वचिद् गुरूणां बाहुल्यं लघूनामल्पत्वं, क्वचिल्लघूनां बाहुल्यं गुरूणामल्पत्वं, क्वचिदुभयेषां समत्वमित्यनेकप्रकारमाख्यायिकादिषु द्रष्टव्यम् । **अस्तमस्तक**—इति । गुरुबाहुल्योदाहरणमिदम् । **इति पद्येऽपि** इति । इत्येवंविधा अतिदीर्घसमासबाहुल्यवतीरहृद्याश्च । **अन्येऽपि** इति । **वैदर्भा** अपि । **अतिदीर्घसमासम्** इति । अतिदीर्घो अतिदीर्घा वा समासा यत्र तत्तथा । **अव्यवहित**—इति । अनाकुलपदस्य द्वितीयोऽयमर्थः । अनेन च व्यवहितपदबन्धेऽप्योजो **गौडै**रिष्यत एवेति भावः ।

**शब्दानाम्** इति । मूर्ध्नि वर्गान्त्यगकक्काराद्विलघुरेफादिवर्णात्मनामाद्यादियुक्त-द्वितीयादिटकारादिवर्णस्वरूपाणामसमाससमासवतामनुद्धतोद्धतसङ्घटनाभाजां चेत्यर्थः । **साधारणः** इति । व्यङ्ग्यत्वेनेत्यर्थः । नन्वयमोजो विपर्ययात्मा दोषः, कथं गुणः, इत्याशङ्क्याह—**गुणः संप्लवाद्** इति । **करुण**— इति । यदि तत्त्वं विवेच्यते तदा सर्वेषामपि रसानां प्रतीतिश्चमत्कारसारैवेति धनलाभबन्धुवियोगाद्युदाहार्यम् । ननु नर्त्तकदर्पणप्रतिबिम्बितं वृद्धजीमूतवाहनादिचरितमास्वादयतां गीतातोद्यादिना सुमनीभवतां प्रेक्षकाणामास्वाद्यस्य करुणरसप्रायत्वादनुकृतेश्च हर्षं चाधिगच्छन्तीति हर्षफलत्वादवकल्पतां नाम सुखदुःखयोः संप्लवः । तथाविधे[1]चित्ररूपसंविदुदयात् । इह पुनः कथं संप्लवसिद्धिरित्याशङ्क्याह—**ननु** इति ।

**साम्योत्कर्षौ च** इति । नायं वृत्तप्रभाव इत्येकवृत्तत्वेन साम्योत्कर्षौ दर्शयिष्यते । **परिशिष्टेऽपि** इति । नृपतिककुदमित्यत्र प्रसादः । दत्त्वा यूने[इ]त्यत्रौजः । सितातपेत्यत्र प्रसादः । वारणमित्यत्रौजः । **परिमितदेश**—इति । भव्या[ङ्गा]ऽ[]तन्व्या इत्यत्र सहोपमामित्यत्र चौजः । **नातिरूढम्** इति अप्रसिद्धार्थमित्यर्थः । **अनभ्यजुन**—इति । प्राकृतोदाहरणार्थ एवात्र प्रतिपाद्यते । **सुखशब्दार्थ**—इति । सुखकारी शब्दविषयश्च यः संयोगः स शब्दगुणः प्रसादः । यतः शब्दविषयोऽतः शब्दगुण इत्यर्थः । **असौ** इति । सुखसंयोगः । **एव** इति । इतरसन्धिप्रकारद्वयव्यवच्छेदार्थोऽयम् । **अन्योन्यलयः** इति । योषित्तिष्ठतीत्येवंरूपः । **रूपान्तरापत्तिः** इति । योषिच्छतीत्येवंप्रायः । **केचिद्** इति । श्लेषसमाधिउ[घ्यु]दारताः ओजस्यन्तर्भूताः । अर्थव्यक्तिश्च प्रसादे । कष्टत्वग्राम्यत्वदोषत्यागात् सौकुमार्यकान्ती स्वीकृते । मार्गाभिदरूपा समता क्वचिद्दोष इति । **मालती** इति । अत्र लकाराणामल्पप्राणता । **येन** इति श्लेषेण ।

**तच्च** इति । मासृण्यं च पदान्तरपाठस्याज्ञेयत्वे, सन्धीयमानयोः पदयोः साजात्ये सावर्ण्ये च, सन्धेः सन्धायकयोर्वर्णयोश्च साजात्ये सावर्ण्ये च भवतीति पञ्चप्रकारम् । तत्र सन्धीयमानयोः पदयोः सावर्ण्ये यथा—स्थितः पृथिव्या इति । अत्रैकत्र तकारो ऽपरत्र थकार इति तदपेक्षया सावर्ण्यम् । "वर्गो वर्गेण सवर्णः" इत्युक्तत्वात् । सन्धेः साजात्ये यथा—तडिज्जटिलमिति । अत्र सन्धेर्जकारस्य जकारेण साजात्यं सादृश्यमित्यर्थः । इतरस्मिंश्च पक्षत्रये स्वयमेवोदाहृतमिति ।

**सूत्रस्येव** इति सन्धानतन्तोरित्यर्थः । **सकारेण** इति । तकारेण समानस्थानत्वादित्यर्थः । **मातङ्गाः** इति । वाच्यवशादत्र मसृणमार्गं परित्यज्य उद्धतमार्ग आश्रितः । यद्यत्र मसृणमार्गो निर्वाह्येत तदा दोषः स्यात् । **चन्दनप्रणय**— इति । अत्र यत् समत्व-

१. तथाविचित्र ख. ग. ॥

मुपपादितं तन्न युक्तम् । मध्यमवन्धत्वं हि वैषम्यमेव । तर्हि दोषोऽयमस्तु, नैवमित्याह । **इत्यनालोच्य** इति । इतिशब्देन प्राक्तनः प्रबन्धः प्रत्यवमृश्यते । स एव चानेकरूपतया विषमवन्धः । तद्गतं वैषम्यमवधीर्य इत्यर्थः । ततश्च **वैदर्भा**पेक्षया मार्गद्वयं, **गौडा**पेक्षया तु तृतीयो मार्ग इति तात्पर्यम् ।

**यत्र सा**—इति । अतिशयिता ह्यर्थां अन्यथानुपपद्यमानाः प्रतियोगिनमपेक्षन्त इत्यत्र तदपेक्षायां सातिशयस्यासमासस्य सातिशय एव समासोऽतिनिम्नस्याऽत्युन्नत इव देशः प्रतियोगी भवितुमर्हति । स चार्थाद्दीर्घो न मध्यमः । तेन दीर्घसमाससद्भावेऽतिशयवान् समासो यः स यत्र न भवति तत्र दीर्घसमासमध्यमसमासयोर्मध्यमसमासात्यन्तासमासयोश्चोपनिवन्धे समता । दीर्घसमासात्यन्तासमासयोस्तु विषमतेत्यर्थः ।

**क्रमः** इति । परिहाररूपसमाधिसहचरत्वात्[3] क्रमः समाधिः । अस्मिन् व्याख्याने आरोहस्याऽवरोहस्य वा शनैः शनैरनुरूपदीप्तिरूपः क्रमो नाभिन्नः । आरोहावरोहयोर्द्वयोः पर्यायरूपक्रमशब्दार्थपरिग्रहात् । द्वितीयस्मिन् पक्षे आरोहस्यैव शनैः शनैरुद्दीप्ततारूपो यः क्रमस्तद्वदवरोहस्य स क्रमशब्दार्थः परिगृहीतः अत एव वक्ष्यति—आरोहस्य च क्रमोऽवरोहस्य च क्रम इति । न पुनरारोहावरोहयोः क्रम इति । आरोहस्य च क्रम इति । अयमपि च क्रमः पूर्वपूर्वरूपत्यागेनोत्तरोत्तररूपसंश्रयणात्मकत्वाद्भवत्येव परिहारसहचर इति समाधिशब्दाभिधेयतां नातिपतति । **तार-कारी** इति तारत्वकारीत्यर्थः । **वहिर्मुखोपजनकः** इति वहिर्मुखत्वोपजनक इत्यर्थः ।

**तीव्रावस्थानौ** इति । कारणे कार्यमुपचर्येत्थमुक्तम् । तेन तीव्रावस्था तयोः कारणमित्यर्थः । तथा च वक्ष्यति—विशेषापेक्षित्वादिति आरोहावरोहनिमित्तमिति च । **अनुपचारे** तु विशेषरूपत्वादिति आरोहावरोहाविति च ब्रूयात् । **विशेषापेक्षित्वात्तयोः** इति । विशेषस्तीव्रावस्था । तयोरारोहावरोहयोः । ननु अवस्थातुरवस्था यदा भिन्ना तदाभ्युपगम्यतामोजःप्रसादयोस्तीव्रावस्थाया आरोहावरोहरूपत्वं. सङ्गच्छतां च तदानीमस्य पृथगुपादानम् । यदा पुनरवस्थातुरवस्था न भिद्यते तदा तीव्रावस्था ओजः-प्रसादावेव । तेन यद्यपि यद्यदोजो यो यः प्रसादस्तत्तदारोहः । स सोऽवरोह इति नास्ति तथापि यो य आरोहस्तत्तदोजः । यो योऽवरोहः स स प्रसाद इत्यस्ति । ततः सत्यं समाधिना ओजः-प्रसादौ न स्वीक्रियेते । ओजः-प्रसादाभ्यां तु समाधिः सङ्गृह्यत एवेति किमर्थमस्योपादानमित्याह—**यद्वा क्रमविधान**—इति । अस्मिन् पक्षे क्रमशब्दस्य मुख्य एवार्थो विवक्ष्यते । तेनौजः-प्रसादरूपयोरप्यारोहावरोहयोः शनैः शनैरनुरूपदीप्तिरूपस्य क्रमस्य यत् करणं तदेव प्रयोजनं यस्य तत्तथा तस्य भावस्तत्त्वम् । तस्मादारोहावरोहक्रमलक्षणस्य समाधेः पृथक्करणमिति ।

---

१. -समासत्वात् ग. ॥ २-३. मध्यम...सहचरत्वात् इति ग. पुस्तके नास्ति ॥

**न हि पूर्वपक्षात् प्रभृति** इति। अत एव च पूर्वत्र लक्षणाश्रयणेन सिद्धान्तितम्। इह तु मुख्यार्थाश्रयणेनेत्यर्थः। **आक्षेपस्य** इति। न ह्योजः-प्रसादयोः क्रमः कश्चिदस्ति, येनारोहावरोहयोस्तद्रूपतया पूर्वपक्षोऽवतरेदित्यर्थः। **तत्र हि** इति। आरोहावरोहयोरन्योन्यस्य पर्याये विवक्षिते यदाऽवरोहस्य पर्यायस्तदौजोरहितस्य प्रसादस्य प्रतीतौ गुणसंप्लवादित्युक्तेन न्यायेन संप्लवाभावाद्दोषरूपतैव भवेत्। क्रमेणावरोहणे तु शनैः शनैरेवौजसः परिहारप्रतीतेः शनैः शनैरेव च प्रसादस्वीकरणसंप्रत्ययात्संप्लवसिद्धेर्न यथोक्तदोषावकाश इति। **परिकीर्त्तितः** इति। परिकीर्त्तौ परिकीर्त्तित इति सप्तम्यर्थे तसिः। **गतितुल्यम्** इति। आक्रमणेन यद्गमनं तत्तुल्यमित्यर्थः।

**ततो यद्यपि** इति। ततो रेफादनन्तरं नशब्देऽवरोहणं सम्पन्नमप्यसम्पन्नकल्पमिति सम्बन्धः। दन्त्यतया हि नकारस्यावरोहणं सम्पन्नमपि संयोगपरत्वादिना आरोहणस्फुटीकरणेनाऽसम्पन्नप्रायं सञ्जातमित्यर्थः। **प्रतीच्छत्याशोकीम्** इति। अत्र प्रतीच्छत्यवतरत्यनुवदतीति चेतनक्रियाधर्माणामचेतनेषु अवरादिषूपचारेणाऽध्यारोपणं समाधिः। **किशलयपरावृत्तिम्** इति परावृत्तकिशलयरूपतामित्यर्थः। **विपर्ययस्तु** इति। जरठत्वं पारुष्यं कष्टत्वमिति यावत्। ननु गुणविपर्ययात्मानो दोषा इत्यत एव सामर्थ्यात् कष्टत्वदोषावगमः सिद्धः, किं दोषदर्शनप्रकरणे तदुक्त्येति। सत्यमेतत्। किन्तु सौकर्याय तत्प्रपञ्च इति। एवमन्यत्रापि सामर्थ्यावगम्यनिर्दिष्टेऽप्यनेव परिहारो वाच्यः।

**निदानम्** इति। तस्मिन् दृष्टे तस्याः कारणद्वयं कार्यद्वयं च युगपन्मनसि वर्त्तत इत्यर्थः। कारणस्य हि शीघ्रकारितां प्रतिपादयितुं कार्यस्य कारणकाल एवोत्पादः प्रदर्शितः। **सर्वकोमले** इति। हेलालीलादावल्पप्राणाक्षरे। **कृच्छ्रोद्यमपि** इति अतिनिष्ठुराक्षरमपीत्यर्थः। **यद्वक्तव्यम्** इति। कथं च पारुष्यं परिज्ञाय परिह्रियते कथं च सौकुमार्यमाद्रियत इति। **समाधिलक्षणः** इति। स्वभावप्रतिमादर्शनेत्यादिना उपनागरिकोचिता इत्यन्तेन। केवलमारोहावरोहक्रममित्यादेः स्थाने सौकुमार्यमित्यादि पठनीयम्। **वर्द्धमानाक्षरपदत्वम्** इत्यादि। उपलक्षणपरत्वेनैकस्य वर्णस्यानेकवर्णव्याप्तिः सन्धानसाजात्यसावर्ण्यादि च लभ्यते।

**स्पष्टमुदाहरणं तु** इति। पादानां लीलायमानत्वेनेत्यर्थः। **पश्चाक्षरम्** इति। विनिविष्टैरित्यत्र विसर्गस्थानीयेन रेफेण सहेत्यर्थः। **तल्पशय्येव** इति। पृष्ठशय्येव समाऽविषमाऽविचित्रैवेत्यर्थः। **असाधुरनुमानेन** इति। असाधुशब्दानां वाचकत्वं न साक्षादपि त्वेकदेशसारूप्यात्, साधुशब्दानुमितिव्यवधानेनेत्यर्थः। **अनेयत्वम्** इति। नेयोऽध्याहारादिकष्टकल्पनानिर्वाह्योऽर्थो यत्र न भवति तदिति। **इह तु** इति। तेन लोके यद्यपि मधुरमिदं काव्यमिति प्रसिद्धं तथाऽपि काव्यलक्षणे कान्तिरेवेयं प्रतीता। **मा जीवतः** इति।

न जीवतो मृतस्येत्यर्थः। **ध्वनि**–इति। व्याख्यस्य भावस्य प्राधान्यं चेत् ध्वनिः, इतरथा तु गुणीभूतव्यङ्ग्यमिति। **जीवतीत्युक्तम्** इति। उत्तरमिदम्। **अत्र प्रकृतिस्थ**–इत्यादि। अत्र अत्रैकजन्मनि कृतम् अनेन जन्मत्रये इति ग्राम्याणि। दलितं रिपूरः कवलिताऽकरोत् पुरुष इत्युपनागराणि। शेषाणि नागराणि। ग्राम्यादीनां च प्रकृतिस्थादिभिः सादृश्यात् प्रकृतिस्थादीनां ग्राम्यादीनामिति[1] च भाषाद्वयमुक्तम्। विशेषश्चेद्विमृश्यते। ततस्तत्रापि जन्मशब्दद्वयं कृतशब्दश्च प्रकृतिस्थः। दलितं कवलितेति च कोमलौ। अभ्युद्धृता क्षिप्तक्रममिति च कठोरौ। अत एवाह–**उभयेषां च** इति।

इति शब्दगुणाः।

[ अथ अर्थगुणाः। ]

**अस्य च** इति। वक्ष्यमाणेन न्यायेन। **अस्य** इति वाक्यार्थस्य। व्यासः समासश्चेति प्रौढिः। **आवृत्त्या अस्य** इति। वाक्यार्थपदार्थरूपस्यार्थस्य साभिप्रायत्वं च प्रौढिरित्यर्थः। व्याससमासौ वाक्यार्थस्यैवेत्यादि। वाक्यार्थभावादप्रच्युतस्यैव विस्तरसंक्षेपौ भवत इति। पदार्थे वाक्यवचनं वाक्यार्थविस्तराद्भिन्नमेव। वाक्यार्थस्य विस्तराभावात्। एवं वाक्यार्थसंक्षेपाद्वाक्यार्थे पदाभिधानं भिन्नं, वाक्यार्थतापायेन पदार्थरूपतापत्तेः। **वाक्यस्य** इति वाक्यार्थप्रतिपादकस्य। अर्थद्वारकं हि वाक्यस्य साभिप्रायत्वमित्यर्थस्यैव साभिप्रायत्वमित्यर्थः। एवं पदस्यापीत्यत्रापि। **तारकारि**–इति। तारकस्यारिर्विजेय इति कृत्वा तारकारिरिति पुष्टार्थमपि परित्यज्य विजेय इत्यत्र यद् 'एय' वर्णद्वयं तत्साम्यात्कार्त्तिकेयपदं यदुपात्तं तदपुष्टार्थमिति भावः।

**गृहस्थ** इति। विवाहत्वादिभिः समुदितैः[2] सहचरितत्वात् गृहस्थसहधर्मचारिणीत्वमर्थतो लब्धम्, अथवा[3] गार्हस्थ्योचितकर्मप्रारम्भवाचकादारम्भशब्दात्। **घटना** इति। देवादिप्रतिमाया इव विषमविविधस्थानयोगेऽपि श्लेषणं घटना। अत आह–**क्रम** इति। **विवेकिनोऽत्र** इति। क्रमाभेदलक्षणमवैषम्यं यद् व्याख्यातं तदाक्षिप्य व्याख्यानान्तरकरणेन समाधत्ते। तथाहि–ये विवेकिनो व्युत्पन्ना अत्र काव्यलक्षणे शिष्यन्ते कथं ते क्रमभेदं विदध्युरिति। अवैषम्यस्य व्याख्यानान्तरकरणम्।

**तद्वत्प्रियः** इति। तद्वन्तो ज्ञानवन्तो[4] गुणवन्तश्च प्रिया यस्य स तथा। **अर्थ**–इति। अर्थस्य दृष्टिर्दर्शनविषयभावापत्तिः। **समाधानकारणत्वाद्** इति। समाधानं कारणं यस्यास्तद्भावस्तत्त्वं तस्मात्। **निमित्तम्** इति सम्बन्धलक्षणमित्यर्थः। **पूर्वस्य** इत्यादि। ननु कीदृगत्रोपजीव्योपजीवकभावः। प्रथमकृतमुपजीव्यं पश्चात्तनं पुनरुपजीवकमिति चेत्तदेव

---

१. ग्राम्यादीनामित्युक्तम् ग. ॥ २. समुचितैः ग. ३ अथवा............आरम्भशब्दात इति पाठो ग. पुस्तके नास्ति ॥ ४. येषां विषये ज्ञानं ते ज्ञानवन्तः ॥

न जानीमः किमाद्यं किं पश्चात्तनमिति। प्रथमोदाहृतमाद्यं पश्चादुदाहृतं तु पश्चात्तनमिति चेत्। कामं तर्ह्यनेनैव हेतुना कृत्वा चिन्तय मा भीरित्यादि यदि प्रथमं दृश्येत तत्प्रतिबिम्बतया ओश्वपेहीति तदा विपर्ययादेतत्। ओमिति **केचित्**। **अन्ये** त्वाहुः—यद्बीजमात्रमाश्रित्य कविवर्णनासनार्थं पश्चादुपन्यसनं तच्छायायोनित्वे प्रयोजकं न पुनः पश्चादुपन्यसनमात्रं, तच्चाश्वपेहीत्येतदपेक्षया मा भीरित्यस्य न पुनरेतदपेक्षया तस्येति न विपर्येत्येतत् कदाचिदिति।

**वक्तुर्वासना**—इति। वक्तुः सम्बन्धिनी या वासना तस्यामेव प्रतिपत्तृहृदयानां यानि विनिविष्टकानि विशेषेण निवेशनानि तैः करणभूतैरित्यर्थः। **सात्त्विक**—इति। **अनुभाव**ग्रहणेनैव गृहीतानामपि सात्त्विकानां यदुपादानं तदमीषामत्र व्यक्ततयोद्भूतत्वप्रतीत्यर्थम्। **रुदित**—इति। सात्त्विकोऽयमनुभावः। **अत्र प्रश्नाद्** इति। शुभे! कोऽयं वृद्धः? इत्यादेः प्रश्नात्, गृहपतिवृद्ध इत्यादेरुत्तरात्, रात्रौ व्यपगतदृगित्यादेरनन्तरपदाच्च मुख्यमर्थमवगम्य परस्पराभिलाषरूपस्यार्थान्तरस्यावगमो गतिरित्यर्थः।

**उक्तिवैचित्र्यम्** इति। उक्तेः सकाशादर्थस्य वैचित्र्यमुक्तिवैचित्र्यम्। उक्तेः सकाशादर्थस्य चैवं वैचित्र्यं भवति। यद्युक्तिरपि विचित्रा भवतीति षष्ठीसमासार्थोऽप्यत्र गृहीतः। स एव तु नाश्रीयते प्रकृतस्यार्थगुणस्यानभिधानप्रसङ्गात्। **अत्र तु** इति। पूर्वत्र हि किं सत्यमेतदित्येवं रूप एक एवार्थः कः सन्देह इति नान्यथेति। अथ किमिति च वैचित्र्येणोक्तः। किं वा प्रियादर्शनच्छदस्य सनमन्यत् स्वादु नास्तीति ग्रहेणोक्तिः सुधादीनां स्वादुत्वाङ्गीकरणेन नागरतयेत्थं विचित्रत्वेन दर्शितेति सन्देहः। **याभादिशब्दः** इति। अयं हि व्रीडास्पदं[4] ग्राम्यधर्ममाचष्टे। सुरतादिशब्दाः पुनरालिङ्गनादिवाचकतया नैकान्तेन तदभिधायका[5] इत्यग्राम्याः। **अवतारः** इति। अवतारकारित्वाद्वचनमप्यवतार इति कारणे कार्योपचारः। **उत्पत्त्यादिः** इति। आदिग्रहणात् स्थित्यादयः। तथा च **भर्तृहरिः**

सैव भावविकारेषु षडवस्थाः प्रपद्यते।

सत्तैव पदार्थविकारेषु जायतेऽस्ति विपरिणमते विवर्द्धते अपक्षीयते विनश्यतीति षडवस्थाः प्रपद्यत इति। **स्वस्तीत्युक्त**—इति। अत्र प्रियविप्रयोगपरितप्यमानमानसामत एव च तन्निप्रणुत्तये दूतीकर्मार्थित्वेनोपनतां कामपि मुग्धवनितां प्रति कयाचित् परिव्राजिकया विदग्धयापि मुग्धयेव स्वस्तीत्यादि यदुक्तं तदनुचितरूपत्वेन हास्यरसं व्यनक्तीति। **नखं नखाग्रेण** इति। अत्र लज्जायाः स्थितिः व्यभिचारिणोऽपि हि चर्व्यमाणस्य तावन्मात्रा,[6] विश्रान्तावपि स्थायिचर्वणापर्यवसानोचितरसप्रतिष्ठामनवाप्यापि प्राणकत्वं भवतीति।

---

१. स्वा- ग. ॥ २. वक्तृ- ग ३. बुद्ध क. ॥ ४. हि जुगुप्सास्पदम् ख, ग. ॥ ५. ग्राम्यधर्म। ६. व्यभिचारिचर्वणामात्रा ॥

**प्रणवेन** इति ओंकारेण। **दलता** इति द्विधा भवता। **ऊर्द्ध्वद्वार**–इत्यादि। शिरसि शशिशकलस्य हृदि च नखपदस्योपमेयस्योक्तत्वादिति भावः। **त्वदीयाम्** इति। कथमन्यथा त्वं तामाद्रियसे सा च त्वामेवानुधावति। **विदुषाम्** इति। कुत इतरथा न त्वमेनामाद्रियसे विद्वद्गृहेषु चैषा दृश्यत इति। **एते** विद्वांसः। **एषां** विदुषाम्। **इयं** विद्वल्लक्ष्मीः। **एतां** विद्वल्लक्ष्मीम्। **तां** निजां शत्रुगृहस्थिताम्। **सा** निजा शत्रुगृहस्थिता। **यत्र तु नास्ति** इति। अत्रोदाहरणानि पर्वतादिवर्ण्णनविषयाणि सुप्रतीतान्येवेति नोदाहरिष्यन्ते। **चित्ते च हुट्टदि** इति। अत्र टकारो भूयसोपनिबद्धः शृङ्गाराननुगुणः इति वर्गानुप्रासालङ्कारः सन्तमपि प्रकृतं शृङ्गाररसं नोपकुरुते। अत एव वक्ष्यति– **वाचकमेव** इति। **न तु रसम्** इति। **असद्** इति। शब्दालङ्काराणामर्थालङ्काराणां च समवायवृत्त्या रसात्मनि अनवस्थितत्वाद्वस्तुवृत्त्यैव गुणैः समं भेदोपपत्तेः।

**स्वर्गप्राप्तिः** इति। [1]इयं प्रधाननायिका विनापि देहान्तरेण स्वर्गप्राप्तिरित्येकगुणहानिकल्पनायां साम्यदार्ढ्ये विशेषोक्तिरत्रेति। **समासासमास**—इति। तत्रासमासमार्गे रसभावतदाभासतत्प्रशमरूपेषु अलङ्कारेषु रसवत्प्रेयस्वदूर्जस्विसमाहितलक्षणेष्वद्भुत[2]क्रोधबीभत्सवीराभासवर्जितेषु माधुर्यप्रसादयोः प्रकर्षोऽतीव सुखावहः सहृदयानामिति तेष्वेव नियत इष्यते। मध्यमसमासमार्गे उपमादिष्वर्थालङ्कारेषु विभक्तिविपरिणामाध्याहारयोग्यतासन्निध्याकाङ्क्षाद्वारसमर्थनाशून्येषु [3]करुणविप्रलम्भशृङ्गारौ मुक्त्वा सर्वेषु रसभावतदाभासतत्प्रशमालङ्कारेष्वपीमावप्रकृष्टौ माधुर्यप्रसादाविष्येते। अतिदीर्घसमासमार्गे तु शब्दालङ्कारेष्वनुप्रासादिषु जातियथासङ्ख्ययोः क्रोधरौद्रतदाभासेषु बीभत्साद्भुतवीराभासेषु चौजो नियतबन्धम्। एषां दिगवगमार्थमादितः प्रभृत्युदाहरणानि —

दृष्ट्वा[4] दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव[5] मेऽद्य नितरां प्रीत्यै नवोढा प्रिया॥

इदं सम्भोगशृङ्गारे।

विप्रलम्भशृङ्गारश्चतुष्प्रकारः। तस्य प्रवासे निदर्शनम् —

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारः[6] शशी।

---

१. श्लोकेऽस्या इति सिद्धस्योक्तत्वादियमिति विधेर्लभ्यते॥ २. कारिकायां द्वितीयस्यामुपलक्षणव्याख्यानम्। क्रोधेत्यत्र रसचतुष्टयं संगृहीतं, क्रोधाभासो रौद्रो रौद्राभासो बीभत्सश्च। अत्र तु शेषवाक्ये त्रितयमुपलक्ष्यते, क्रोधेन बीभत्सस्योक्तत्वात्॥ ३. एतयोस्तयोः प्रकर्ष एव भवति यस्मात्॥ ४. दृष्टा ?॥ ५. –तयेव ख.॥ ६. –कारी ?॥

येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

प्रथमाभिलाषविप्रलम्भे पुनः

स्वप्नान्तरे समुपलभ्य च सा भवन्तं मिथ्योपगूहनविषक्तभुजा प्रवुध्य
दृष्टोऽसि यत्र शयनेऽथ तदध्यशेत मुग्धा पुनः पुनरलीकनिमीलिताक्षी ॥

ईर्ष्याविप्रलम्भे तु

कृतो दूरादेव स्मितमधुरमन्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनसख्या नतिमति ।
न दृष्टेः शैथिल्यं मिलत इति सन्तापयति मां
निगूढान्तःकोपा कठिनहृदये संवृत्तिरियम् ।

विरहविप्रलम्भे तु

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥

करुणे

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥

शृङ्गारानन्तरसमुचिताभिधानस्य शृङ्गाराभासनिदर्शनस्य त्यागेन योऽयं करुणस्य निदर्शनोपन्यासस्तस्य प्रयोजनं माधुर्यप्रसादप्रकर्षस्य विप्रलम्भशृङ्गारवत्करुणे नियमप्रदर्शनम् । तथा च चतुर्विधं विप्रलम्भशृङ्गारं माधुर्यप्रसादप्रकर्षतया सोदाहरणमुपन्यस्य अनन्तरमेव करुण उपन्यस्तः । सम्भोगशृङ्गारे तु माधुर्यप्रसादावप्रकृष्टावपीष्येते । अत एव च मध्यमसमासापि वृत्तिरभिमतैव शृङ्गाराभासे ।

क्षुद्रस्तापसवेष एष रचितो विश्वासहेतोर्यदा
साध्वी सा किल तापसी न च हठः स्त्रीषु प्रयोज्यो मया ।
तत् किं भो ! विरताः स्थ मन्मथमधो वागीश्वरि श्रीर्ननु
द्रष्टव्या जनकात्मजा वपुषि मे यत्नः समाधीयताम् ॥

एवमन्येष्वपि रसतदाभासेषु निदर्शनान्यभ्यूह्यानि ।

---

१. सम्बद्ध ॥ २. सम्बोधनम् ॥ ३. माधुर्यस्य विप्रलम्भ- ख. ।

²रुचिजुगुप्साभावयोः

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥

एवमन्येष्वपि भावेषु तदाभासेषु च निदर्शनानि घटनीयानि ।

समाहितं समाधानं रसभावतदाभासानां प्रशममात्रनिबन्धनं यथा

परिभ्रष्टो रागस्तव नयनयोर्दूरमधरः
स्फुरन् शान्तः प्रान्तच्युतिररुणिमा गण्डतलयोः ।
निलीनं निःश्वासैरपि हृदय एवायततरैः
प्रसादोऽन्तर्गूढः कठिनहृदयेऽद्यापि किमिति ॥

अत्र क्रोधस्य प्रशमनिबन्धः । एतान्युदाहरणान्यसमासमार्गे । मध्यमसमासमार्गे तु

आसन् सवितुरस्युग्राः पद्मकिञ्जल्कपिञ्जराः ।
परिपीतनडित्तेजःप्रसरा इव रश्मयः ॥
विधायाऽपूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥

इदमाभिलाषिकशृङ्गारव्यभिचारिणि विस्मये । यत्तत् पूर्वमुक्तं करुणविप्रलम्भशृङ्गारौ मुक्त्वेत्यादि, तदभिप्रायेणैतदुदाहरणमुपन्यस्तम् । तथा हि—अत्र विस्मये शृङ्गारव्यभिचारिणि व्यङ्ग्ये माधुर्यप्रसादावप्रकृष्टौ मध्यमसमासया वृत्त्या उपदर्शितौ । यद्यपि चात्राभिलाषिकशृङ्गारो विप्रलम्भरूपत्वान्माधुर्यप्रसादप्रकर्षं प्रयुञ्जानोऽसमासामेव वृत्तिं स्वव्यभिचारिविस्मयाभिव्यक्तये समाक्षिपति तथाऽपि विस्मयसमाश्रयणेनैवात्राप्रकृष्टमाधुर्यप्रसादविषया मध्यमसमासा वृत्तिराश्रिता । विस्मयस्याव्यवहितत्वात् । विप्रलम्भशृङ्गारः पुनर्विस्मयव्यवहितत्वाद्विस्मयद्वारेण असमासां वृत्तिं प्रयुञ्जानो विस्मयेन नैरन्तर्यान्मध्यमसमासवृत्त्याक्षेपिणा अपहृतविषयतया स्वनिबन्धनवृत्तिप्रयोगं प्रत्युदास्ते । अनया दिशा अन्यान्यपि निदर्शनानि द्रष्टव्यानि । अतिदीर्घसमासवति पुनर्मार्गे

महाप्रलयमारुतक्षुभितपुष्करावर्तक—
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।

१. नै ग. ॥ २. रति ॥

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ इदमद्भुते ।

उत्कृत्तजर्जरपतत्करिकुम्भमुक्त-
मुक्ताफलोद्दलनवान्तहुताशलेशैः ।
अस्मद्धनुर्विसृतसंततबाणजालैर्
निःक्षत्रमद्य सकलं भुवनं करोतु ॥ इदं क्रोधाभासे ।

चञ्चच्चञ्चूद्धृतावच्युतपिशितलवग्राससंवृद्धगर्द्धैर्
गृध्रैरावद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
वक्रोद्वान्ताः पतन्त्यः स्थमिति शिखिशिखाश्रेणयोऽस्मिन् शिवानाम्
अस्रस्रोतस्यजस्रं द्रुतवहलवसावासविस्रे स्वनन्ति ॥ इदं वीभत्साद्भुतरसालङ्कारे ।

अनया दिशाऽन्यान्यप्युदाहरणानि योज्यानि। **रीतिरिता** इति। रीतिज्ञैरित्यर्थः। **शब्दालङ्कारयुता** इति। अत्र **क्रोध**ग्रहणं रौद्रक्रोधाभासरौद्राभासवीभत्सानामुपलक्षणार्थतया व्याख्येयम्। **जाति**ग्रहणेन च यथासङ्ख्यमुपलक्ष्यते। **वीराभैः** इति वीराभासैरित्यर्थः। इत्यर्थगुणाः।

इति कल्पपल्लवशेषे कल्पलताविवेके गुणविवेचनो नाम द्वितीयः परिच्छेदः।

## [ अथ शब्दालङ्काराः ]

**इह शिष्ट**–इति। शब्दव्यवहाराभियुक्तैरनुशिष्टानामुपदिष्टगुणदोषविवेकानां वाचामेव महिम्ना लोकव्यवहारो भवति। स च व्यवहारो न केवलं व्यवहर्तृजनस्य, यावत् शिष्टानामपि। येऽपि विदितवेदितव्यास्तेषामपि प्रसङ्गतः परावबोधने कर्त्तव्ये शब्दान्नान्य उपायः। इह शिष्टेत्यादिश्लोकद्वयेन संस्कृतादिभाषारूपाया जातेः शब्दालङ्कारत्वे सोपयोगत्वमुक्तम्। **रचनादित्रयम्** इति गुम्फनाख्यायुक्तय इत्यर्थः। **श्रव्यता** इति गेयमित्यर्थः।

**साकाङ्क्षनिराकाङ्क्षादि** इति। अत्रायं भावः। सप्त स्वरास्त्रीणि स्थानानि चत्वारो वर्णाः द्विविधा काकुः षडलङ्काराः षडङ्गानीति पाठ्यगुणाः। तत्र द्विविधा काकुः साकाङ्क्षनिराकाङ्क्षशब्दाभ्यां साक्षादुक्ता। शेषाश्च काकोरेवोपयोगिनः पाठ्यगुणा आदिग्रहणेन संगृहीताः। तत्र काकौ वस्तुतः स्वरा एवोपकारिणः। तत्परिकरभूतं तु स्थानादि। स्वरेषु प्रकृतिभूतेषु काकुरूपता जन्यते। तत्र स्थानशब्देनैषां स्वरूपनिष्पत्तेराश्रयो दर्शितः। उदात्तानुदात्तस्वरितकम्पितरूपतया स्वराणां यदुक्तिप्रधानत्वम् अनुरणनमयं तत्यागेनोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगीति दर्शितम्। अत एव गानवैलक्षण्ये सत्यपि बाह्यार्थसमर्पणेन चित्तवृत्तिसमर्पणया वाऽभिनयानुभावरूपतालाभाय काकुरर्थरसभेदेनाभिधीयते। तत एव काकुरूपत्वमेव सर्वत्रानुयायि, अभिनयत्वे मुख्योपयोगात्। तथा चोक्त-रत्रोच्चदीप्ताद्यलङ्कारेष्वपि काकुशब्देनैव मुनिर्व्यवहरिष्यति। काकोरेव हि प्रकारसम्पादकाः परिपूर्णताधायिनोऽलङ्काराः। अलमिति पर्याप्त्यर्थः, इह न भूषणार्थः। अङ्गानि तु विच्छेदादीनि, रसमर्थं शोभादिकं च पोषयितुं काकोरेवोपकारीणीत्येवं परमार्थतः काकुरेवेयं पञ्चभी रूपान्तरैः पूर्णीक्रियते। काक्वा च पठ्यमानस्य स्वोचितचित्तजडरूपार्थाभिमुख्यनयेताभिनयत्वं दीयत इति काकुरेवात्र प्रधानमिति। तत्र च सप्त स्वराः षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादवन्तः। ते एते रसेषूपपाद्याः।

"हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ।
षड्जर्षभौ तु कर्त्तव्यौ वीररौद्राद्भुतेष्वथ ॥
निषादवान् स गान्धारः करुणे संविधीयते।
धैवतश्चापि कर्त्तव्यो बीभत्से सभयानके ॥
त्रीणि स्थानान्युरः कण्ठः शिर इति भवन्त्यपि।
"शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु ॥
उरसः शिरसः कण्ठात् स्वरः काकुः प्रवर्तते।"

---

१. शिष्टानां कृतानुशासनानामुप- ख. ग. ॥ २. अर्थकाकु-रसकाकुरूपः ॥

भवत्यपि चेत्यादि **केचिद्** व्याचक्षते । इहार्थकाकुस्तावद्विधिनिषेधाद्यर्थावगमिका । रसकाकुस्तु चित्तवृत्तिसूचिका । एतद्व्यापारद्वयशून्या तु नेपथ्यपाठवैतालीयपाठादिविषया दूरस्थाऽऽभाषणादिविषया च शोभासम्पादनदूरश्रवणादिप्रयोजना स्वरकाकुः । साऽनेन श्लोकेन[1] लक्ष्यत इति । **ते** एवं प्रष्टव्याः– तावत् योऽयं स्वरकाकोर्विषय उक्तस्तत्र यद्यर्थरूपं किञ्चिदभिधेयं तत्रावश्यमर्थकाकुर्वा, रसकाकुर्वा । का पृथक् स्वरकाकुः । तथाहि-नेपथ्यपाठेऽपि कञ्चुकी पठति, वीरोऽयम**ङ्गदः** पठति, **यौगन्धरायणः** पठतीत्येवंभूतप्रकृतिचित्तवृत्त्यादि-विशेषप्रतिपादकेनैव पाठेन भवितव्यम् । वैतालीयपाठे समुचितपराक्रमाद्युचितावसराऽऽवेदन-प्रधानेऽवश्यमर्थ आदर्त्तव्य एव । युक्तं चैतत् । अर्थानपेक्षायां हि किमभिनयमध्यचिन्तया । पुस्तकवाचकपाठोऽपि ह्यनुक्रियमाणोऽभिनयतामेवावलम्बते । तस्मात् काकुसामान्यलक्षणमनेन क्रियत इति **अन्ये** । एवमपि भवत्यपि चेत्यसमर्थितं स्यात् । तद्धि पूर्वप्रक्रान्तवस्तुसमर्थने प्रयुज्यत इति **मुनेः** शैली । तस्मात् पूर्वोक्तस्थानत्रयसमर्थनार्थोऽयं श्लोकः । तदयमर्थः । शारीर्यां वीणायां केवलम् उरः-शिरः-कण्ठलक्षणेभ्यस्त्रिभ्य एव स्थानेभ्यो न तु षट्चट्टैः स्वरः परित्यक्तरञ्जनात्मकगानोपयोगिस्वव्यापारः काकुभूतः सूचकरूपः संप्रवर्त्तते ।

**अथ** शब्दोऽवधारणे । वाद्यायां हि प्रातिबिम्बात्मिकायां वीणायां रञ्जनात्मकस्वर-स्वरूपव्यतिरेकेण न काकुसम्पत्तिः । **वीणा**ग्रहणं शरीरगतविवृतमध्याकाशदेशपरिग्रहार्थम् । न शरीरमात्रे स्वरनिष्पत्तिरपि तु तत्र भवा । येयं वाद्यवीणा दण्डस्थानीया उत्तरोत्तरस्थान-परम्पराविशिष्टा स्थानसोपानपङ्क्तिः सा स्वरनिष्पत्तिस्थानम् । एवं स्थानस्वरूपं विभज्य विषयभेदमादर्शयितुमाह

"आभाषणं च दूरस्थे शिरसा सम्प्रयोजयेत् ॥
नातिदूरे च कण्ठेन ह्युरसा च समीपतः ।"

**शिरसा** इति शिरोनिष्पन्नेन तारेण नादेनेत्यर्थः । **नातिदूरे कण्ठेन** इति मध्येन । उरसा समीपे मन्द्रेणेति यावत् । एवं स्थानत्रयस्य पृथगुपयोगमभिधाय युगपद्दर्शयति

"उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः ॥
कण्ठेन शमनं कुर्यात् पाठ्ययोगे तु नित्यशः ।"

मन्द्र[2]स्वरेण पाठमारभ्य क्रमेण तारं गत्वा मध्येन परिसमाप्नुयादिति श्लोकार्थः ।

"उदात्तश्चानुदात्तश्च कम्पितः स्वरितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे त[4]पोधनाः ॥"

---

१. प्राक्तनेन ॥ २. अनुरणनरूपः ॥ ३. गण्ड ग. ॥ ४. सम्बोधनम् ॥

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वर्णैः पाठ्यमुपपाद्यम् । वीररौद्राद्भुतेषु उदात्तकम्पितैः । करुणबीभत्सभयानकेष्वनुदात्तस्वरितकम्पितैरिति ।

"उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ ।
पाठ्यस्यैते ह्यलङ्कारा लक्षणं च निबोधत ॥"

उच्चो नाम शिरःस्थानगतस्तारः स्वरः । स च दूरस्थाऽऽभाषणविस्मयोत्तरोत्तरसंजल्प-दूराह्वान-त्रासनाबाधादिषु । दीप्तो नाम शिरःस्थानगतस्तारतरः । स चाक्षेप-कलह-विवादामर्षोत्क्रुष्टाधर्षण-क्रोध-शौर्य-दर्प-तीक्ष्ण-रूक्षाभिधान-निर्भर्त्सनाऽऽक्रन्दादिषु । मन्द्रो नामोरःस्थानस्थः निर्वेद-ग्लानि-चिन्तौत्सुक्य-दैन्य-व्याधि-गाढशस्त्रक्षत-मूर्च्छा-मदादिषु । नीचो नामोरःस्थानस्थो मन्द्रतरः स्वभावाभाषण-व्याधि-तपः-श्रान्त-त्रस्त-पतित-मूर्च्छितादिषु । द्रुतो-नाम कण्ठगतस्त्वरितः । लल्ल-मन्मन-भय-शीत-ज्वरार्त्त-त्रस्तात्[1]यिक-कार्यावेदनादिषु । लल्लं सविलासम् । लडं विलासं लातीति क्विबन्ते कर्मण्युपपदे कः । लडयोरैक्यमिति । मन्मनमव्यक्तम् । अहमेव मनो मन्ता यत्रेति अन्येनाश्रूयमाणम् । लल्लमन्मनौ नायिकागतावेव, बालविनोदनसान्त्वनादौ, मुञ्च मुञ्चेत्येवं प्रायपराभियोगानङ्गीकरणादौ चेति । आत्ययिकं शीघ्रसम्पाद्यं यत्कार्यं[2] तस्य आवेदनम् । विलम्बितो नाम कण्ठस्थानस्थो मन्द्रः । शृङ्गार-वितर्क-विचारामर्षासूयिताऽव्यक्तार्थ-प्रवाद-लज्जा-चिन्ता तर्जित-विस्मित-दीर्घरोग-निपीडनादिषु ।

अत्रानुवंश्याः श्लोकाः

"उत्तरोत्तरसंजल्पे परुषाक्षेपणे तथा ।
तीक्ष्णरूक्षाभिनयने आवेगे क्रन्दिते तथा ॥
परोक्षाह्वाहने चैव तर्जने त्रासने तथा ।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च ॥
भावेष्वेतेषु नित्यं हि नानारससमाश्रया ।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः ॥
व्याधिते च जरार्त्ते च रोगार्त्ते क्षुत्पिपासिते ।
विषमस्थे वितर्के च गाढशस्त्रक्षते तथा ॥
गुह्यार्थवचने चैव चिन्तायां तपसि स्थिते ।
मन्द्रा विलम्बिता चैव काकुः कार्या प्रयोक्तृभिः ॥
लल्ले च मन्मने चैव भयार्त्ते शीतविप्लुते ।
मन्द्रा द्रुता च कर्त्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥

१. त्रस्तायस्ता ग. ॥ २. ऽचि सति ॥

दृष्टनष्टानुसरणे इष्टानिष्टश्रुतौ तथा ।
इष्टार्थख्यापने चैव चिन्ताग्रस्ते तथैव च ॥
उन्मादेऽसूयिते चैव उपालम्भे तथैव च ।
अव्यक्तार्थप्रवादे च कथायोगे तथैव च ॥
उत्तरोत्तरसञ्जल्पे कार्येऽतिशयसंयुते ।
व्रीडिते व्याधिते क्रोधे दुःखे शोके तथैव च ॥
विस्मयामर्षयोश्चैव हर्षेऽथ परिदेविते ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा च वै भवेत् ॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि[1] च ।
मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ॥
यानि स्युस्तीक्ष्णरूक्षाणि दीप्ता चोच्चा च तेष्वपि[2] ।
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ॥
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ।
वीररौद्राद्भुतेषूच्चा दीप्ता चापि प्रशस्यते ॥
भयानके सबीभत्से द्रुता नीचा च कीर्त्तिता ।
एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः ॥"

अङ्गानि विच्छेदोऽर्पणं विसर्गोऽनुबन्धो दीपनं प्रशमनम् इति । तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलायमानमधुरवल्गुस्वरेण पूरयतेव रङ्गं यत् पठ्यते । विसर्गो नाम वाक्यन्यासः । अनुबन्धो नाम पदान्तरेष्वविच्छेदोऽनुच्छ्वसनम् । दीपनं नाम त्रिस्थानशोभि वर्द्धमानस्वरं च । प्रशमनं नाम तारगतानां स्वराणामवैस्वर्येणावतरणम् । एषां रसगतः प्रयोगः । हास्यशृङ्गारयोरर्पणविच्छेददीपनप्रशमनसंयुक्तं पाठ्यं कार्यम् । विच्छेदप्रशमनयुक्तं करुणे । विच्छेदप्रशमनार्पणदीपनानुबन्धबहुलं वीररौद्राद्भुतेषु । विसर्गविच्छेदार्पणयुक्तं वीभत्स-भयानकयोरिति । सर्वेषामप्येतेषां मन्द्रमध्यमतारकृतः प्रयोगस्त्रिस्थानस्थो भवति । तत्र दूरस्थाभाषणे तारं शिरसा, नातिदूरे मध्यं कण्ठेन, पार्श्वतो मन्द्रमुरसा प्रयोजयेत् । **पाठ्यम्** इति । मन्द्रात्तारं न गच्छेत्ताराद्वा मन्द्रमिति । **साकाङ्क्षम्** इति । एतच्च मन्द्रादितारान्तमपरिसमाप्तवर्णालङ्कारं कण्ठोरःस्थानगतं यथा भवति तथा पठनीयम् । **निराकाङ्क्षम्** इति । इदं च मन्द्रादितारान्तं परिसमाप्तवर्णालङ्कारं शिरःस्थानगतं यथा भवति तथा पठनीयम् ।

---

१. वस्तूनि ॥ २. चोच्चा रतेष्वपि ख. ॥ ३. अकारादि ॥

**त्रिगुणा** इति सत्त्वरजस्तमोरूपा। **काकुप्रभावाद्** इति उदात्तकम्पितवर्ण्णस्योच्चदीप्तालङ्कारस्य वाऽसमास्या या काकुपठितिस्तत्प्रभावादित्यर्थः। एवमुत्तरत्रापि साकाङ्क्षकाकूदाहरणद्वये व्याख्येयम्। **वचनोच्चारणम्** इति। वचनस्य भवन्तीतिरूपस्य। **अनुमानाद्** इति वक्रवचनलक्षणात्। **अन्धकारे** इति। अन्धकाराऽऽख्यदैत्यशत्रौ तिमिरे च। **समासम्** इति (च?) कान्ता च इन्दुश्चेत्येवंरूपम्।

**विनायकम्** इति। गणपतिं विहङ्गराजं च। **वसु** इति। वसु द्रव्यं वसवश्च देवविशेषाः। **अनेकस्य** इति। यद्येकस्यैव रेफादेर्वर्णस्यैकवारमेकेन रेफादिना सादृश्यमुपनिबध्येत ततः किं वैचित्र्यं स्यादिति भावः। **परिवृत्तिः** इति। यत्पूर्वार्द्धे दवदहनत्वं विधेयं तुहिनदीधितित्वं चाऽनुवाद्यं तदुभयमप्युत्तरार्द्धे विपरीतं सम्पन्नमिति। **दृष्टिम्** इति। अत्र प्रथमो दृष्टिशब्दो धानक्रियाकर्मतया स्वार्थमर्पयति, द्वितीयस्तु सु[मु?]खेसम्बन्धितया। एवं प्रथमश्चन्द्रशब्द उदयक्रियाकर्तृतया स्वार्थावगतिनिबन्धनम्, द्वितीयस्तु मुखोपमानत्वेनेति। **ध्वनिस्वरूप**-इति। तथा च ध्वनेरेव लक्षयितुमारब्धस्य भूमिकां विरचयितुमिदमुक्तं **श्रीमदानन्दवर्द्धनाचार्य**पादैः-

अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥

शब्दार्थशरीरं काव्यमिति यदुक्तं, तत्र शरीरग्रहणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव। तत्र शब्दस्तावच्छरीरभाग एव सन्निविशते। सर्वजनसंवेद्यधर्मत्वात्, स्थूलकृशादिवत्। अर्थः पुनः सकलजनसंवेद्यो न भवति। न ह्यर्थमात्रेण काव्यव्यपदेशो लौकिकवैदिकवाक्येषु तदभावात्। तदाह-"सहृदयश्लाघ्यः" इति। स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या विभज्यते। तथाहि-तुल्येऽर्थरूपत्वे किमिति कस्मैचिदेव सहृदयाः श्लाघन्ते, तद्भवितव्यं तत्र केनचिद्विशेषेण, यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते। वाच्यसंवलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते, चार्वाकैरिवात्मपृथग्भावे। अत एवार्थ इत्येकतयोपक्रम्य"सहृदयश्लाघ्यः"इति विशेषणद्वारं हेतुमभिधायाऽपोद्धारदृशा तस्य द्वौ भेदावंशावित्युक्तम्, न तु द्वावप्यात्मानाविति।

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः सोऽन्यैस्ततो नेह प्रतन्यते॥
प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत् तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु॥

---

१. मुखं ग.॥ २. अलंकारकारैः॥

**अन्यद्** इति वाच्यादित्यर्थः । **यत्तद्** इति यत् सहृदयहृदयसुप्रसिद्धम् । लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यम् अवयवव्यतिरिक्तं धर्मान्तरमेव । न चावयवानामेव निर्दोषता वाग् भूषणयोगो वा लावण्यम् । पृथङ् निर्वर्ण्यमानकाणादिदोषशून्यशरीरावयवयोगिन्यामप्य-लङ्कृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि कस्याश्चिल्लावण्यामृतचन्द्रिकेयमिति च सहृदयानां व्यवहारात् । अतो यथा अङ्गनासु लावण्यं पृथग् निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । अयमर्थः—यदेवंविधमस्ति तद्भाति । न ह्यत्यन्ताऽसतो भानमुपपन्नं, रजतावपि नात्यन्तमसद्भाति । अनेन सत्त्वप्रयुक्तं तावद्भानमिति । भासनात् सत्त्वमवगम्यते । तेन यद्भाति तदस्ति तथेत्युक्तं भवति । तेनायं प्रयोगार्थः—प्रसिद्धं वाच्यं धर्मिप्रतीयमानेन व्यतिरिक्तेन तद्वत् । तथा भासमानत्वात् । लावण्योपेताङ्गनाङ्गवत् ।

ननु लावण्यं तावद् व्यतिरिक्तं प्रथितं प्रतीयमानं किं तदित्येव न जानीमो दूरे तु व्यतिरेकप्रथेति तथाभासमानत्वमसिद्धो हेतुरिति । नैवम् । स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्कारा रसादयश्चेत्यनेकप्रभेदभिन्नो दर्शयिष्यते । तथाहि—वाच्यसामर्थ्याक्षिप्तमिति भेदत्रयव्यापकं सामान्यं लक्षणम् । यद्यपि हि ध्वननं शब्दस्यैव व्यापारस्तथाऽप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायाद्वाच्यसामर्थ्याक्षिप्तत्वं शब्दशक्तिमूलानुरणनव्यङ्ग्येऽप्यर्थसामर्थ्यादेव प्रतीयमानावगतिः । शब्दशक्तिः केवलमवान्तरसहकारिणीति ।

तत्र प्रतीयमानस्य तावद् द्वौ भेदौ, लौकिकः काव्यव्यापारैकगोचरश्च । लौकिको यः स्वशब्दवाच्यतां कदाचिदध्यशेत । स च विधिनिषेधाद्यनेकप्रकारो[1] [2]वस्तुशब्देनोच्यते । सोऽपि द्विविधः । यः पूर्वं[3] क्वापि वाक्यार्थेऽलंकारभावमुपमादिरूपतयाऽन्वभूदिदानीं त्वनलङ्काररूप एव, अन्यत्र गुणीभावाभावात्, स पूर्वप्रत्यभिज्ञानबलादलङ्कारध्वनिरित्यपदिश्यते, ब्राह्मणश्रमणन्यायेन । द्वितीयस्तु तद्रूपाभावेन उपलक्षितं वस्तुमात्रमुच्यते ।

**मात्र**ग्रहणेन हि रूपान्तरं निराकृतम् । यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणव्यापाररसनीयरूपो रसः स काव्यव्यापारैकगोचरो रसध्वनिरिति । स च ध्वनिः एव इति । स एव मुख्यतया आत्मेति ।

सर्वेष्वेव च तेषु प्रकारेषु प्रतीयमानस्य वाच्यादन्यत्वम् । तथा हि—आँद्यस्तावत्

१. आदिग्रहणादनुभयरूप उपमादिरूपश्च ॥ २ विचित्राविचित्रवस्तुशब्देनेत्यर्थः ॥ ३. वस्तुमात्रं हि मात्रशब्दव्यवच्छेद्येऽलंकाररूपे निरूपिते सुप्रत्येयं भवतीति पूर्वमेव द्वितीयः प्रभेदः प्राक् प्ररूपितः ॥

प्रभेदो वाच्याद्दूरं विभेदवान् । स हि वाच्ये विधिरूपे कदाचित् प्रतिषेधरूपो यथा—**भम धम्मिय** इति । कस्याश्चित् सङ्केतस्थानं जीवितसर्वस्वायमानं धार्मिकसञ्चरणान्तराय-दोषात्तदवलुप्यमानपल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः । तत्र स्वतःसिद्धमपि भ्रमणं श्वभयेनापोदितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु नियोगप्रैषादिरूपोऽत्र विधिः । अतिसर्गप्राप्तकालयोर्ह्ययं लोट् । [1]अतिसृष्टोऽसि प्राप्तस्ते भ्रमणकालः । **धार्मिक**— इति । कुसुमाद्युपयोगार्थं युक्तं ते भ्रमणम् । **विश्रब्धः** इति । शङ्काकारणवैकल्यात् । **स** इति । यस्ते भयप्रकम्प्राम् अङ्गलतिकाम् अकृत । **अद्य** इति । दिष्ट्या वर्द्धसे इत्यर्थः । **मारितः** इति। पुनरस्यानुष्ठानम् । **तेन** इति। यः पूर्वं कर्णोपकर्णिकया त्वयाऽप्याकर्णितो गोदावरीकच्छगहने प्रतिवसतीति । पूर्वमेव हि तद्रक्षायै एतत्तयोपश्रावितोऽसौ, अधुना तु दृप्तत्वात्ततो गहनान्निःसरतीति प्रसिद्धगोदावरीपरि[2]स्मरानुसरणमपि तावत् कथाशेषीभूतम्, का कथा तल्लतागहनप्रवेशाशङ्कायाः । तत्र भावतदभावयोः साक्षाद्विरोधाद्वाच्याद् व्यङ्ग्यस्य स्फुटमेवान्यत्वमित्यर्थः । क्वचित् प्रतिषेधरूपे विधिरूपो यथा

अत्ता एत्थ णुमज्जइ एत्थ अहं दियसयं पुलोएहि ।
मा पहिय रत्तिअंधय सेज्जाए महं णुमज्जिहिसि ॥

श्वश्रूरत्र शेतेऽथवा निमज्जति, अत्राहम्, दिवसकं प्रलोकय, मा पथिक रात्र्यन्ध शय्यायामावयोर्माङ्क्षीः शयिष्ठा वा । मह इति निपातोऽनेकार्थवृत्तिरत्र न तु ममेति । एवं हि विशेषवचनमेवाशङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् । काश्चित् प्रोषितपतिकां तरुणीमवलोक्य प्रबुद्धमदनाङ्कुरः सम्पन्नः पान्थोऽनेन निषेधद्वारेण तयाऽभ्युपगत इति । निषेधाभावोऽत्र विधिः, न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः । सौभाग्याभिमानखण्डना-प्रवेशात् । तत्र श्वश्रूरसहिष्णुर्न तु माता, तेन तु गुप्तमभिलाषः पोषणीयः । न च सर्वथा भयदेत्याह—**अत्र** इति दूरे । सा च शेते न जागर्त्ति । **अत्र** त्वन्मार्गनिकटे । **अहम्** उपभोग-योग्या । साम्प्रतं विघ्नकारीति कुत्सितं दिवसम् । तस्मात् सम्प्रति विलोकय । एहि परस्परावलोकनसुखमनुभवावः । **पथिक** इति । [3]चेतितेऽपि तव न दोषावहमिति न भेतव्यम् । रात्रावधिकमदनोद्रेकादन्ध शय्याविभागानभिज्ञ शय्यायां मा शयिष्ठा अपि तु मयि । मा आवयोरपि तु मय्येव । मा शयिष्ठा अपि तु प्रहरचतुष्टयमपि निधुवनेन क्रीड ।

क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा

वच्च मह च्चिय एक्काए होंतु णीसासरोइयव्वाइं ।
मा तुज्झ बि तीए विणा दक्खिण्णहयस्स जायं तु ॥

---

१. अनुमतोऽसि ॥ २. भ्रमण ॥ ३. ज्ञातेऽपि त्वयि ॥

कश्चिदनङ्गीकृतप्रार्थनो निःश्वसन् रुदन्निव कयाचिदेवमुच्यते। व्रज इह हि ते कण्टकानामुपरि स्थितिः। ममैव न तु तव तस्या वा एकस्याः। नान्या हि मत्समा भवति। भवन्तु दुःसहान्यपि सन्तु निःश्वासरोदितव्यानि न तु सुखानि। मा तवापि। दाक्षिण्यमात्रेणेह स्थितोऽसि ततस्त्वयि स्थितेऽपि मम न निवर्त्तन्ते निःश्वासादीनि। तद् द्वयोर्मा भूत् क्लेशः। तया विना न तु मत्कोपात्। दाक्षिण्येन हृदयशून्यरञ्जनमात्रकरणेन। हतस्य निर्जीवीकृतस्याजनिषत। अत्र च व्रजेति विधिः। न प्रमादादेव नायिकान्तरसङ्गमनं तव, अपि तु गाढानुरागात्। येन अन्यादृङ् मुखरागो गोत्रस्खलितादि च। केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपताऽभिमानेनैव[1] त्वमत्र स्थितः, तत्सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायोऽत्र प्रतीयते। न चासौ व्रज्यभावरूपो निषेधः। नापि विध्यन्तरमेवान्यनिषेधाभावरूपम्[2]।

क्वचिद्वाच्यप्रतिषेधरूपेऽनुभयरूपो यथा

दे आ पसिय णियत्तसु मुहससिजोण्हाविलुत्ततमणिवहे।
अहिसारियाण विग्घं करेसि अण्णाण वि हयासे॥

**दे** इति निपातः प्रार्थनायाम्। **आ** इति तावच्छब्दार्थे।

प्रार्थये प्रसीद तावत् निवर्त्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे।
अभिसारिकाणां विघ्नं करोषि अन्यासामपि हताशे॥ [छाया]

अत्र व्यवसिताद् गमनान्निवर्त्तस्वेति प्रतीतेर्निषेधो वाच्यः। गृहागता नायिका गोत्रस्खलिताद्यपराधिनि नायके सति ततः[3] प्रतिगन्तुं प्रवृत्ता नायकेन चाटूपक्रमपूर्वकं निवर्त्यते। न केवलं स्वात्मनो मम च निर्वृतिविघ्नं करोषि, यावदन्यासामपि। ततस्तव न[4] कदाचन सुखलवलाभोऽपि भविष्यति। अत एव हताशासीति वल्लभाभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः।

यदि वा सख्योपदिष्टमानाऽपि[5] तदवधीरणया प्रियतमगृहं गच्छन्ती सख्योच्यते। न केवलमात्मनो विघ्नं करोषि, लाघवादबहुमानास्पदमात्मानं कुर्वती अत एव हताशा, यावद्वदनचन्द्रिकाप्रकाशितमार्गतयाऽन्यासामप्यभिसारिकाणां विघ्नं करोषीति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः।

अत्र तु व्याख्यानद्वयेऽपि व्यङ्ग्यस्य व्यवसितात् प्रतीपगमनात् प्रियतमगृहगमनाच्च निवर्त्तस्वेति पुनरपि प्रतिषेधलक्षणे वाच्य एव विश्रान्तेर्गुणीभूतव्यङ्ग्यभेदस्य प्रेयोऽलङ्कारस्य पारम्पर्येण रसवदलङ्कारस्य चोदाहरणमिदं स्यान्न ध्वनेरित्यन्यथा व्याख्यायते।

---

१. बहुमान॥ २. वाच्याद् व्रजिविधेरन्यो विधेर्विध्यन्तरं प्रसीदेत्यादिः। अस्य च पर्यायोऽन्येति। अन्यच्च तन्निषेधाभावरूपं चेति विग्रहः॥ ३. गृहात्॥ ४. अनुभविष्यमाणमद्वियोगदुःखादिह जन्मनि परापकारसमुद्भवप्रियविप्रयोगदुःखाज्जन्मान्तरेऽपीत्यर्थः॥ ५. अहंकार॥

काचिद्रभसात् प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुपश्लोक्यते अप्रत्यभिज्ञानच्छलेन। अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनं हआसे इति। अन्यासां च विघ्नं करोषि तव चेप्सितलाभो भविष्यतीति का प्रत्याशा। अत एव मदीयं वा गृहमागच्छ त्वदीयं वा गृहं गच्छाव इत्युभयत्राप्यतात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाटूवात्मा व्यङ्ग्य इत्येवावतिष्ठते।

एतदपि न सारम्। न ह्यर्द्धपथसंघटितस्य स्वात्मानमप्रकाशयतः प्रियतमस्य सा तथाभूते मार्गे त्रासनयोग्या। तेनायमत्र भावः। काचिदभिसर्त्तुं प्रस्तुता गृहागतं प्रियतममवलोक्य स्वयं निवृत्ताप्यनिवृत्तेव तेनैवमुच्यते। निवर्त्तस्व, किमेतत्, कदाचिद्भवति यद्यहं नागच्छामि। तस्माद् वृथाऽयमुद्यमः। एतत् न जानासि यत् कृष्णपक्षे तदुचितवेषाऽप्यहं निजवक्त्रचन्द्रमसा शुक्लपक्षं करोमीति। न केवलमात्मनो विघ्नं करोषि यावदन्यासामप्यास्थां हंसीति सकलदिक्प्रकाशस्त्वया क्रियत इति परमभिलाषस्तद्गतो व्यज्यत इति।

अन्ये तु तटस्थानां सहृदयानामभिसारिकां प्रति इयमुक्तिरित्याहुः। तत्र हताशे इत्याद्यामन्त्रणौचित्यादि युक्तमयुक्तं वेति सहृदया एव प्रमाणम्।

क्वचिदनुभयरूपे वाच्येऽनुभयरूपो यथा

णहमुहपसाहिअंगो णिद्दाघुम्मन्तलोयणो ण तहा।
जह णिव्वणाहरो सामलंग दूमेसि मह हिययम्॥ इति।

अत्र खण्डितोपालम्भवचसि।

नखमुखप्रसाधिताङ्गो निद्राघूर्णमाननयनो न तथा।
यथा निर्व्रणाधरः श्यामलाङ्ग दुनोषि मे हृदयमिति॥ [छाया]

विगतमत्सराया मम न तथा नखपदादिचिह्नं भवदङ्गसङ्गि खेदावहं, यथार्द्धनिष्पन्नसम्भोगतयाऽधरदशनाऽसम्पत्तिरितीर्ष्याकोपगोपनमुपभोगोद्वेदेन कृतम्। वाच्योऽर्थः। तद्बलसमुत्थस्तु सहृदयोत्प्रेक्षितोऽत्यन्तवाल्लभ्यान्मुखचुम्बनपर एव तस्यास्त्वं, यत् त्वदधरखण्डनावसरोऽस्या वराक्या न सम्पन्न इति, न केवलं तस्या भवानतिवल्लभो यावद्भवतोऽपि सा सुतरां रोचत इति वयमिदानीं त्वत्प्रेमनिराशाः सञ्जाता इति नायिकाऽभिप्रायो व्यङ्ग्यः।

यथा च

कथमवनिप दर्पो यन्निशाताऽसिधारा-
दलनगलितमूर्द्धनां विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किन्न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरेभिः॥ इति।

१. प्रियेण॥ २ नायक॥ ३. वाच्यार्थबल॥

अत्र निन्दायां वाच्यायां स्तुतिः ।

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशोऽपरः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धाऽयशो-
भारप्रोद्वहने करोषि कृपया साहाय्यकं यन्मरोः ॥ इति ।

स्तुतौ वाच्यायां निन्दा च व्यङ्ग्या ।

एवं वाच्यव्यङ्ग्ययोर्धार्मिकपान्थप्रियतमाऽभिसारिकाश्यामलाङ्गनृपतितोयधिविषयैक्येऽपि स्वरूपविरोधाद्भेद इति प्रतिपादितम् ।

अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेदः प्रतिपाद्यते । यथा

कस्स व न होइ रोसो दट्ठूण पियाए सव्वणं अहरं ।
सभमरपउमग्घाइरि¹ वारियवामे सहसु इण्हिं ॥

अनीर्ष्यालोरपि न² भवति रोषो दृष्ट्वाकृत्वाऽपि कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं विलोक्य । सभ्रमरपद्माघ्राणशीले, शीलं हि कथञ्चिदपि वारयितुं न शक्यम् । वारिते वारणायां वामे तदनङ्गीकारिणि । सहस्वेदानीमुपालम्भपरम्परामित्यर्थः । अत्रायं भावः । काचिदविनीता कुतश्चित् खण्डिताधरा निश्चिततत्सविधसन्निधाने त³द्भर्त्तरि त⁴दनवलोक्यमाने इव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते ।

सहस्वेदानीम् इति वाच्यम् अविनयवतीविषयम् । भर्तृविषयं त्वपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् । स⁵हस्वेत्यपि च त⁶द्विषयं व्यङ्ग्यम् । तस्यां प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इ⁷यता खलीकृताऽस्मीति लाघवमात्मनि ग्रहीतुं न युक्तं, प्रत्युतायं बहुमानः, सहस्व शोभस्वेदानीमिति स⁸खीविषयं सौभाग्यख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता, पुनः प्रकटदशनरदनविधिरत्र न युक्त इति तच्चौर्यकामुकविषयं सम्बोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति । एवमन्यदप्युदाहार्यम् ।

द्वितीयोऽपि प्रभेदो वाच्यविभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते ।

---

१. ग्घाइणि ? ॥ २ काका ॥ ३. नायिकायाः ॥ ४. अविनीतया ॥ ५ एतां विना नान्यत्र तवाऽपि निर्वृतिर्भविष्यतीति क्षमस्व ॥ ६. भर्तृ ॥ ७. उक्तेन ॥ ८. पूर्वोक्ताऽविनीता ॥

तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते। न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव। यथा च वाच्यसामर्थ्याक्षिप्तत्वं न तु साक्षाच्छब्दव्यापारविषयत्वं रसादेस्तथा स्वशब्दवाच्यतालक्षणे रसदोषे दर्शितमेव।

एवं प्रतीयमानं पुनरन्यदेव वाच्यादस्तीति प्रतिपाद्य तस्यैव काव्यात्मत्वमितिहासव्याजेन दर्शयति

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥

**काव्यस्य** इति विविधवाच्यवाचकरचनाचारुण इत्यर्थः। **आत्मा** इति सारभूतः। **स एव** इति। प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव स ध्वनिरिति मन्तव्यमितिहासबलात्। तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्यत इति वाच्यादुत्कृष्टौ तावदित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तमिति। यत् यन्महिम्ना स्फुरति तत्तत्र सारभूतं, शरीरे इव जीवितम्। व्यङ्ग्यमहिम्ना च काव्यं स्फुरितमिति। न च हेतुरसिद्ध इत्यागमेन संवादयति—**तथा चादिकवेः** इति। आदिकवेर्वाल्मीकेः। **क्रौञ्च**—इति। क्रौञ्चस्य द्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसेन उत्थितो यः शोकः स्थायिभावो, निरपेक्षभावत्वाद्विप्रलम्भशृङ्गारोचितरतिस्थायिभावादन्य एव, स एव तथाभूतविभावतदुत्थाऽऽक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः, करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तद्रुतिसमास्वाद्यसारां प्रतिपन्नः, रसपरिपूर्णकुम्भोच्छलनवच्चित्तवृत्तिनिष्पन्दस्वभावां वाग्विलापादिवत्समयानपेक्षत्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेनाकृतकतयैवावेशवशात्, समुचितच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः॥

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥ इति।

न तु मुनेः शोक इति मन्तव्यम्। एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत्, न च दुःखसन्तप्तस्यैषा दशेति। एवमस्येतिहासस्य

१. साहचर्यध्वंस ॥ २. यथा वाग्विलापादयः कस्मिंश्चिदभीष्टे वस्तुनि विनष्टे एवमहममून् विदधामीति अभिसन्धिं विनाऽपि आवेशवशादकृतका जायन्ते, अर्थनिरपेक्षाणां वर्णरचनादीनां ध्वनिविशेषाणां च काकुप्रभृतीनां चित्तवृत्तिव्यञ्जकत्वाभ्युपगमात्, संकेतमनपेक्ष्य प्रवृत्ता अपि चित्तवृत्तेर्व्यञ्जकाश्च, तथाऽस्मिन्नर्थे इदं छन्दो वृत्तम् अयं शब्द इयं च रचनेत्येवमभिसन्धिमन्तरेणाऽपि या समुचितच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपता, एतदुपज्ञनिखिलकविकाव्यविलक्षणा चित्तवृत्तिव्यञ्जिका तां प्राप्त इत्यर्थः।

चर्वणोचितशोकस्थायिभावात्मककरुणरससमुच्छलनस्वभावत्वात् स एव काव्यस्यात्मा सारभूतस्वभावोऽपर[1]शाब्दवैलक्षण्यकारकः ।

एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य स्वसंवित्सिद्धमप्येतदिति दर्शयति

सरस्वती स्वादु तदर्थवस्तु विष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥

**सरस्वती** वाग्रूपा भगवती। **अर्थवस्तु** वस्तुतत्त्वम्। **विष्यन्दमाना** दि[2]व्यमानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः । येन वस्तुतत्त्वेन प्रतिभाविशेषेण वा परिस्फुरताऽस्मिन्नियति विचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते । यो यस्य विशेषव्यपदेशहेतुः स तस्योत्कर्षनिबन्धनः । राजव्यवहारः पुरुषस्येव भूपालत्वनिबन्धनः, महाकविव्यवहारश्च कालिदासादीनां प्रतीयमानत्वनिबन्धनः । तस्मात् प्रतीयमानमेव काव्ये प्रधानम् ।

न केवलं प्रतीयमानं पुनरन्यदेवेत्येतत्कारिकासूचितौ स्वरूपविषयभेदावेव, यावद्भिन्नसामग्रीवेद्यत्वमपि प्रतीयमानस्य वाच्यातिरिक्तत्वसाधनं प्रमाणमस्तीत्याह

" [3]शब्दार्थशासन[4]ज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ "

यो यज्ज्ञानसामग्र्यतिरिक्तसामग्रीसंवेद्यः स तस्माद्भिन्नः । र[5]स इव रूपात्। वाच्यज्ञानसामग्र्यतिरिक्तसामग्रीसंवेद्यश्च प्रतीयमानः[6] ।

इदानीमग्रे प्रतिपादितमपि प्राधान्यं पुनस्तस्यैव, तन्नान्यस्येति दर्शयति

" सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ [7]शब्दार्थौ महाकवेः ॥ "

**प्रत्यभिज्ञेयौ** इति । अर्हार्थे कृत्यः । **महाकवेः** इति । यो [8]महाकविरहं भूयासमित्याशंसते ।

---

१. शास्त्रेतिहासेभ्यः काव्यस्य ॥ २. यदाह भट्टनायकः–

वाग्धेनुर्दुग्ध एतं हि रसं यद् बालतृष्णया ।
तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः ॥

तदावेशेन विनाऽप्याक्रान्त्या हि योगिभिर्दुह्यते ॥ ३. व्याकरणम् । अभिधानकोशः ॥ ४. प्रकरणादिज्ञस्वरहितेनेत्यर्थः ॥ ५ मधुरादिः ॥ ६. व्यङ्ग्यः ॥ ७ प्रसिद्धशब्दार्थविलक्षणौ व्यङ्ग्यव्यञ्जकरूपौ ॥ ८ सुप्रयुक्ताभ्यां व्यङ्ग्यव्यञ्जकाभ्यामेव हि महाकवित्वलाभो भवति ॥

सम्प्रति व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह

"आलोकार्थी यथा दीपशिखायां यत्नवान् जनः ।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥"

**तदादृतः** इति तं व्यङ्ग्यमर्थं प्रति सादर इत्यर्थः । अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं प्रति व्यापारो दर्शितः ।

प्रतिपाद्यस्यापि तं दर्शयितुमाह

"यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते ।
वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः ॥"

अधुना वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य यथा प्राधान्यं न व्यालुप्यते तथा दर्शयति

"स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि ।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥
तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झगित्येवावभासते ॥"

स्वसामर्थ्यमाकाङ्क्षा-योग्यता-सन्निधयः । **न विभाव्यते** इति विभक्ततया न भाव्यत इत्यर्थः । **तद्वद्** इति **वाच्यार्थ**–इति च । पदार्थवत् वाच्येऽर्थे विमुखो विश्रान्तिनिबन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यर्थः ।

इति ध्वनिलक्षणाङ्गोपन्यासेऽपरशब्देभ्यः काव्यभेदनम् अर्थः सहृदयेत्यार्द्धेन, अर्थविभागो वाच्यप्रतीयमानेत्यादिना, वाच्यस्याविस्तरे हेतुस्तत्र वाच्य इत्यादिना, व्यङ्ग्यस्य सद्व्यवहारे प्राधान्ये च प्रमाणानि । प्रतीयमानं [पुनः] पुनरन्यदेवेति, शब्दार्थशासनेति च, काव्यस्यात्मेति, सरस्वती स्वाद्विति, सोऽर्थ इत्यार्द्धेन च । विशिष्टशब्दार्थोपयोगो यत्नत इत्यादिना । वाच्यवाचकयोरङ्गत्वमालोकार्थी यथेति, यथा पदार्थद्वारेणेति च । व्यङ्ग्यप्राधान्यस्य न व्यालोपः स्वसामर्थ्यवशेनैवेत्यादि कारिकाद्वयेनेत्यष्टौ प्रमेयाणि ।

तदेवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्रकृते ध्वनिलक्षणे उपयोगं गमयन्नाह

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥"

---

१. ज्ञानम् ॥ २. व्यङ्ग्यस्य ॥ ३. व्यंङ्ग्यतत्प्राधान्यतदङ्गशब्दार्थ ॥ ४ श-ग. ॥
५. सत्तां प्राधान्यं च ॥

यत्रार्थो वाच्यविशेष उपसर्जनीकृतात्मा शब्दो वा वाचकविशेष उपसर्जनीकृताभिधेयस्तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरिति।

**तमर्थम्** इति उपयोगः। **व्यङ्क्तः** इति द्विवचनेनेदमाह। यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाऽप्यर्थस्यापि सहकारिता न त्रुट्यति। अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात्। विवक्षितान्यपरवाच्ये च शब्दस्याऽपि सहकारित्वं भवत्येव। विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। **अर्थः शब्दो वा** इति तु विकल्पाभिधानं प्राधान्याभिप्रायेण। काव्यं च तद्विशेषश्चासौ काव्यस्य वा विशेषः। काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम्। **स** इति अर्थो वा शब्दो वा व्यापारो वा। अर्थोऽपि वाच्यो वा ध्वनतीति। शब्दोऽप्येवं व्यङ्ग्यो वा ध्वन्यत इति। व्यापारो वा शब्दार्थयोर्ध्वननमिति। कारिकया तु प्राधान्येन समुदाय एव काव्यरूपो मुख्यतया ध्वनिरिति प्रतिपादितम्। अनेन च लक्षणेन वाच्यवाचकचारुत्वहेतुभ्यो गुणालङ्कारेभ्यो विभक्त एव ध्वनेर्विषय इति दर्शितम्। तेषां वाच्यवाचकभावप्राणत्वादस्य च तदन्यव्यङ्ग्यव्यञ्जकभावसारत्वान्नाऽस्य तेष्वन्तर्भाव इति।

एतदेवाह

"व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः।"

एतेन यदभाववादिनः **केचिदा**चक्षीरन्[1]—शब्दार्थशरीरं तावत् काव्यम्। तस्य शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः सङ्घटनाधर्माश्च माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्तवृत्तयो[2] वृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशितास्ता अपि गताः श्रवणगोचरम्। रीतयश्च वैदर्भीप्रभृतयः। तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति तत् पराकृतम्। यतो ध्वनिव्यवहारप्रयोजको व्यङ्ग्यव्यञ्जकभावो भिन्नसामग्री[3]वेद्यत्वाद्वाच्यवाचकयोस्तद्धर्माणां[4] चैकज्ञानसंसर्गित्वमेव न भजत इति।

ननु यत्र प्रतीयमानस्यार्थस्य चारुतया स्फुटतया चाप्रतीतिः स नाम माऽभूद् ध्वनेर्विषयः, यत्र तु तत्प्रतीतिरस्ति समासोक्त्यादौ तत्र ध्वनेरन्तर्भावो भविष्यतीति निराकर्तुमभिहितम्—**उपसर्जनीकृतस्वार्थौ** इति। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतत् समासोक्त्यादावस्ति। समासोक्तौ तावत्—**उपोढरागेण** इति। अत्र व्यङ्ग्येनानुगतं वाच्यमेव

---

१. संभावनया लिङ्॥ २. तस्मादनुप्रासात् तेभ्यो माधुर्यादिभ्यश्चानधिको व्यापारो यासाम्। अनुप्रासरूपा हि वृत्तयो गुणात्मानश्च रीतयः॥ ३. प्रकरणादि॥ ४. गुणालङ्काराणाम्॥

प्राधान्येन प्रतीयते, समारोपितनायिका-नायक- व्यवहारयोर्निशा-शशिनोरेव वाक्यार्थत्वात्। अयमर्थः । अत्र यद्यपि शब्दो वाच्यमर्थं निर्वाह्य द्वितीयमर्थमवगमयति, तथापि तेनार्थेन चेतनवृत्तान्तरूपेणाचेतनवृत्तान्तरूपोऽर्थ उपस्क्रियते इति वाच्यस्यैव प्राधान्यम्। यद्यप्यत्र वाच्यार्थापेक्षया चेतनवृत्तान्तरूपत्वाद् व्यङ्ग्योऽर्थश्चारुस्तथापि न स पृथक् सत्तां लभते । विशेष्यपदयोरेकार्थवाचित्वात्। इति वाच्यसंस्कारकत्वेनाऽस्य स्थितिरिति वाच्यस्यैव प्राधान्यम्। 'गावो वः पावनानाम्' इत्यादौ तु विशेष्यपदमप्युभयार्थाभिधायीति वाक्यार्थयोरुपमानोपमेयभावो व्यङ्ग्य इत्यलङ्कारस्य प्राधान्यमिति तत्र ध्वनिः। श्लोकव्याख्यानं च **मूलग्रन्थे** रूपकालङ्कारे वक्रोक्तौ मतान्तरप्रदर्शनेन कृतमस्तीति तत एवावसेयम्। आक्षेपेऽपि व्यङ्ग्यविशेषाक्षेपिणो वाच्यस्यैव चारुत्वं, प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते। तत्र हि शब्दोपारूढो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन् मुख्यं काव्यशरीरम् । यथा

बालय णाहं दूई तीए पियोऽसि त्ति णऽम्ह वावारो ।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो ॥

इत्यादावुक्तविषये तावन्नास्ति व्यङ्ग्यसम्भावना ।

सुहअ विलंबसु थोअं जाव इमं विरहकायरं हिअयं ।
संठविऊण भणिस्सं अहवा वोलेसु किं भणिमो ॥

इत्यादौ वक्ष्यमाणविषये तु यद्यप्यस्ति व्यङ्ग्यं, तथाऽपि न तत्प्रधानम्। तथा हि–व्यङ्ग्येऽपि निषेध्ये स्थिते वाच्यमेव निषेधरूपं प्राधान्येनास्ते, तेनैव व्यपदेशात्। प्रधानेन हि व्यपदेशा भवन्तीत्याहुः ।

एवं यत्र लब्धसत्ताकं वाच्यं व्यङ्ग्यस्य व्यञ्जकं तत्रापि प्राधान्यादाक्षेपोऽलङ्कार एव। यत्तु **भामहे**नोदाहृतम्–'अहं त्वा यदि नेक्षेय' इति। तत्र वाच्यं 'म्रियें' इति व्यङ्ग्येन विना सत्तामेव न लभत इति का तत्र वाच्यायमाने व्यङ्ग्ये ध्वनिसम्भावना। अनुक्तनिमित्तायामपि विशेषोक्तौ 'आहूतोऽपि सहायैः' इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रं, न तु तत्प्रतीतिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम्। अत्र च यैः शीतार्त्तत्वं निमित्तं कथ्यते तन्मतेनास्ति व्यङ्ग्यप्राधान्यम्। प्रस्थानादपि निद्राकरणं प्रियासमागमे लघुरुपायः स्वप्नदर्शनादित्यपि यैरभिप्रायः कल्प्यते तैर्व्यङ्ग्योपस्कृतं वाच्यमेव प्रधानमिति नापह्नोतव्यम्। अचिन्त्यनिमित्तोक्तनिमित्तयोस्तु अचिन्त्यत्वादुक्तत्वाच निमित्तस्य व्यङ्यसम्भावनैव नास्तीति तृतीयैव शङ्किता ।

---

१. नायिकाया नायके यो व्यवहारः स निशायां समारोपितः। नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति नैकशेषः ॥ २. सुहय विलंबसु थोवम् इत्यादौ ॥

पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वमस्मत्तः शिक्षित्वा 'भम धम्मिय' इत्याद्युदाहियते, तद्भवतु तस्य ध्वनावन्तर्भावो न तु ध्वनेस्तत्राऽन्तर्भावः, तस्य महाविषयत्वेन काव्यविशेषरूपतया च प्रतिपादयिष्यमाणत्वात्। न पुनः पर्यायोक्ते भामहोदाहृते 'गृहेष्वध्वसु वा' इत्यादौ तत्सदृशे च 'यं प्रेक्ष्य चिर' इत्यादौ व्यङ्ग्यस्य प्राधान्यम्, अपि तु पुनरपि वाच्य एव विश्रान्तेर्गुणीभूतत्वमेव बोद्धव्यम्। अपह्नुति–दीपकयोरपि वाच्यस्यैव व्यङ्ग्योपमासहितस्य प्राधान्यमिति गुणीभूतव्यङ्ग्यतैव स्फुटेति। यथा–'नेयं विरौति' इति।

मणिः शाणोल्लीढः समरविजयी हेतिनिहतः
कलाशेषश्चन्द्रः सुरतमृदिता बालललना।
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः॥ इति च।

अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्तिभावाद्वाऽभिधीयमानस्याऽप्रस्तुतस्य प्रस्तुतेन प्रतीयमानेनाभिसम्बन्धस्तदाभिधीयमानप्रतीयमानयोः सममेव प्राधान्यम्। तत्र यदा तावत् सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धस्तदा विशेषस्य प्रतीतौ सत्यामपि प्राधान्येन तस्य सामान्येनाविनाभावात् सामान्यस्याऽपि प्राधान्यम्। यथा

अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम्।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः॥

अत्र हि दैवस्वातन्त्र्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत्प्रकृते क्वापि वस्तुनि विनष्टे विशेषात्मनि पर्यवस्यति। यदाऽपि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेषस्यापि प्राधान्यम्। यथा–'एतत्तस्य मुखात्' इति। निमित्तनिमित्तिभावे चायमेव न्यायः। यथा–'[2]ये यान्त्यभ्युदये' इति। '[3]सुँगं अपारियायम्' इति च। यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाऽप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः। यथा

त्वन्मूले पुरुषायुषं गतमिदं प्रायेण संशुष्यतां
क्षोदीयांसमपि क्षणं परमितः शक्तिः कुतः प्राणितुम्।
तत् स्वस्त्यस्तु विवृद्धिमेहि महतीमद्यापि का नस्त्वरा
कल्याणैः फलिताऽसि तालविटपिन् पुत्रेषु पौत्रेषु च॥

---

१ काव्यं च तद्विशेषश्चासौ॥ २. नैमित्तिके प्रस्तुते निमित्तमप्रस्तुतमत्र॥ ३ पूर्ववैपरीत्यमत्र॥

यथा च

भाववातहठाज्जनस्य हृदयान्याक्रम्य यन्नर्त्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य संक्रीडसे ।
स त्वामाह जडं ततः सहृदयं म(? ध)न्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसम्भावनात् ॥ TA 1.332

कश्चिन्महापुरुषो 'वीतरागा अपि सरागवत्' इति न्यायेन गाढविवेकालोकतिरस्कृत-तिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयन् लोकं च वाचालयन्नात्मन्यप्रतिभामेवाङ्गी-कुर्वंस्तेनैव लोकेन मूर्खोऽयमिति यदाऽवज्ञायते तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं व्यङ्ग्यतया प्राधान्येन प्रकाश्यते। जडोऽयमिति ह्युद्यानें(?ह्युच्यमाने[1] स)हृदयादिर्भावो लोकेनाऽवज्ञायते[2] । स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसता-मन्यस्य प्रहर्षपरवशतां करोतीति हठादेव लोकं यथेच्छं विकारकारणाभिर्नर्त्तयति । न च तस्य हृदयं केनाऽपि ज्ञायते कीदृगयमिति । प्रत्युत महागम्भीरोऽतिविदग्धः सुष्ठु गर्वहीनो-ऽतिशयेन क्रीडाचतुरः स यदि लोकेन जड इति तत एव कारणात् प्रत्युत वैदग्ध्यसम्भावना-निमित्तात् सम्भावितः। आत्मा च यत एव कारणात् प्रत्युत जाड्यं सम्भाव्यं तत एव सहृदयः सम्भावितः । तदस्य लोकस्य जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भाववात-स्यातिविदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति जडादपि पापीयानयं लोक इति ध्वन्यते।

यदा त्वप्रस्तुतस्य सरूपस्याऽभिधीयमानस्य प्राधान्येन विवक्षा तदा गुणीभूत-व्यङ्ग्यतैव । यथा

प्राणा येन समर्पितास्[3]तव बलाद्येन त्वमुत्थापितः[4]
स्कन्धे[5] यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्या पुरः ।
तस्यास्य स्मित[6]मात्रकेण जनयन् जीवापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥

अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाऽप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम् । न ह्यचेतनोपालम्भवदसम्भाव्यमानोऽयमर्थो न च न हृद्य इति वाच्यस्यात्र प्रधानता। व्याजस्तुतावप्ययमेव न्यायः। यदा तावदभिधीयमानाया

---

१. मोह- क. ॥ २. मिति...ज्ञायते — स्पष्टं नास्ति। लोके तावत् ज्ञायते ख. ॥ ३. मृतशरीरे समारोपणात् ॥ ४. मृतशरीरोत्थापनद्वारेणोत्थापितो वेतालः ॥ ५. मृतशरीरद्वारेणैव स्कन्धे स्थितः ॥ ६. यदा किल वेतालः स्मितं करोति तदा साधकस्य भयान्मरणं सम्पद्यते ॥

निन्दायाः स्तुतेर्वा प्राधान्येनो[1]विवक्षा तदा ध्वनावेवान्तर्भावः । यथा दर्शितं प्राक् 'कथमवनिप' इति । 'हे हेलाजित–' इति च । इतरथा तु गुणीभूतव्यङ्ग्यतैव । यथा

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

अत्र व्यङ्ग्यं यत् स्तुत्यात्मकं तेन वाच्यमेवोपक्रियते । यत्तूदाहृतं केनचित्

आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
जाता सम्प्रति साम्बुराशिरशना जाया कुलोद्भूतये ।
पूर्णे वर्षशते भविष्यति पुनः सैवाऽनवद्या स्नुषा,
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥ इति ।

तदस्माकं ग्राम्यं प्रतिभात्यत्यन्ताऽसभ्यस्मृतिहेतुत्वात् । का चाऽनेन स्तुतिः कृता । त्वं वंशक्रमेण राजेति हि कियदिदम् । इत्येवंप्राया व्याजस्तुतिः सहृदयगोष्ठीषु निन्दितेत्युपेक्ष्यैव । भावालङ्कारेऽपि 'एकाकिनी यदबला'इत्यादौ वाच्यस्यैव प्राधान्यमिति गुणीभूतव्यङ्ग्यतैव । सङ्करालङ्कारेऽपि यदालङ्कारोऽलङ्कारान्तरच्छायाम[2]नुगृह्णाति तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् । यथा– परस्परोपकारेणेति सङ्करप्रकारे ।

अकर्त्तव्येष्वसाध्वीव तृष्णा प्रेरयते जनम् ।
तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ॥

अत्रास्य शुभमशुभं वा भवतु मम तावत् परिपोषोऽस्त्विवति तृष्णाबुद्धिः, विपरीता तु लज्जाबुद्धिरुत्प्रेक्ष्यते इति प्रतीयमानोत्प्रेक्षा[3] छा[4]यामनुगृह्णात्युपमा, न तु पृथगसा[5]वलङ्कार[6]ः । अनेकालङ्क्रियोल्लेखे इत्यलङ्कारद्वयसम्भावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम् । यथा

शशिवदना सितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसम्भवहृद्याकारा कृता विधिना ॥

अत्र सन्देहसंकरे शशी वदनं शशीव वा वदनमस्याः इत्यादिरूपकोपमयोः समं प्राधान्यम्, एकत्र निश्चयाभावात् । अथानुग्राह्याऽनुग्राहकभावसङ्करे वाच्योपसर्जनीभावेन व्यङ्ग्यस्य व्यवस्थानं, तदा सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति शक्यं वक्तुम् । यथा

१ न वा वि–ग ॥ २. अनुग्रहः आत्मोपकारत्वेनाऽत्र परिग्रहः ॥ ३. अनुग्राहिका ॥ ४. प्रतिभामात्रे न तु लब्धप्रतिष्ठाम् ॥ ५. उपमा ॥ ६. अपि तु नरसिंहन्यायेनाऽनुग्राह्याऽनुग्राहकलक्षणमलंकारान्तरमेव ॥

होइ ण गुणाणुराओ जडाण णवरं पसिद्धिसरणाण ।
किर पन्हुवइ ससिमणी चंदे ण पियामुहे दिट्ठे ॥

इत्यत्रा[1]ऽर्थान्तरन्यासे चन्द्रात् प्रियामुखस्य [2]व्यतिरेकः प्रतीयते । स च प्रधानमिति सङ्करालङ्कार एवायं न भवति, अपि त्वलङ्कारध्वनिनामाऽयं ध्वनेर्द्वितीयो भेदः । प्रकारान्तरद्वये तु ध्वनिसम्भावनैव नास्ति । तथाहि

"शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र भाविनः ।"

सङ्करो वा यथा । [3]इत्थं स्थितिर्वरार्था चेत्या[4]दि । भिन्नदेश एष शब्दार्थालङ्कारसङ्करः । एकदेशस्तु सः एकवाक्यांशप्रवेशाद्वाऽभिधीयत इति लक्षितः । यथा- मैवमेवास्व[5]सच्छायेति(?)। परमार्थतस्तु सर्वेष्वपि प्रभेदेषु सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति। सङ्कीर्णता हि मिश्रत्वं लोलीभावस्तत्र कथमेकस्य प्राधान्यं क्षीरजलवदिति भावः। तदयमत्र संक्षेपः

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्राऽनुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थाऽनुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥

व्यङ्ग्यं वाच्यानुगतं तदननुगतं [6]च । अननुगतमप्यस्फुटं स्फुटं वा । स्फुटमप्यप्रधानं प्रधानं वा। प्रधानमपि सन्देहेन निश्चयेन वा। निश्चयश्च तस्याऽपि तस्यैव वेति षट् पक्षाः ।

तत्र वाच्याऽनुगतं वाच्यार्थानुगमेऽपि चेत्युक्तम् । यथा 'अहं त्वा यदि नेक्षेय' इत्यादौ 'म्रिये' इति व्यङ्ग्यम् । वाच्यपूरणत्वाद्वाच्यायमानम् । यथा वा--'कमलायराणमलिया' इत्यादि वक्ष्यमाणम् । अत्र हि दृष्टमेघप्रतिबिम्बा मुग्धवधूरिदं वक्तीति व्यङ्ग्यं पूर्वं वाच्येनापेक्षितं वाच्यायमानमेव । अस्फुटं प्रतिभामात्र इत्यनेन दर्शितम् । प्रतिभामात्रमस्त्यत्र व्यङ्ग्यमिति सामान्येनावगमः न तु विशेषेण यथा

अहअं उज्जुअरूआ तस्स वि उम्मंथराइं पिम्माइं ।
सहियायणो य निउणो अलाहि किं पाअराएण ॥

अत्र स मां पुरुषायितेऽर्थयतेऽहं च निषेद्धुमशक्ता। तत् सख्यः पादमुद्रया तर्कयित्वा

---

१. अनुग्राह्ये ॥ २. अनुग्राहकः ॥ ३. आद्येऽर्द्धेऽनुप्रासो द्वितीयेऽर्थान्तरन्यासः ॥ ४ चेदित्यादि ग. ॥ ५. सच्छायेत्यादि पदद्वये श्लेषानुप्रासयोः स्थितिः ॥ ६. च वा ग. ॥

मा मां हासिषुरिति व्यङ्ग्यमस्फुटम् । अप्रधानं व्यङ्ग्यं व्यङ्ग्यस्य यत्रेत्यादिना कथितम् । समासोक्त्यादय इत्युपलक्षणं गुणीभूतव्यङ्ग्यस्य । वाणीरकुडङ्गोड्डीनेत्यादौ हि गुणीभूतव्यङ्ग्यत्वं वक्ष्यति । न च तत्र समासोक्त्यादयः । सन्दिग्धप्राधान्यं द्वयोरपि प्राधान्यं च यत्र वा तस्ये-त्यादिनाऽभिहितम् । तस्येति तस्यैवेत्यर्थः । आद्यं यथा

मेंहिलासहस्सभरिए तुह हियए सुहय सा अमायंती ।
अणुदिणु अणन्नयम्मा अंगं तणुयंमि तणुएइ ॥

अत्राऽन्यासक्तस्याऽपि तवैवाविरतं ध्यानपरा, तनूभावप्रकर्षारोहेण यावदत्याहितं नाप्नोति तावदुज्झित्वा दौर्जन्यं साऽनुनीयतामिति व्यङ्ग्यम् ।

द्वयोरपि प्राधान्यं यथा

पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
पूर्वे भवेयुरियताऽप्यथवा त्रपेरन् ।
सन्तोऽप्यसन्त इति चेत् प्रतिभान्ति भानो-
र्भासावृते नभसि शीतमयूखमुख्याः ।

अत्र प्राकरणिकाऽप्राकरणिकयोः समं प्राधान्यम् ।

**तत्परौ** इति । यत्र तस्यैव प्राधान्यं तदनेन प्रकाश्यते । **सङ्करोज्झित** इति । अनेन वक्ष्यमाणं सङ्केतकालमनसमित्यादि निराक्रियते । अत्र हि व्यङ्ग्यस्यैव प्रदोषसमय-लक्षणस्य प्राधान्येऽपि कविना पुनराद्यपादत्रयोक्त्या वाच्यभाव आपादितः । तस्मान्न ध्वनेरन्यत्रान्तर्भावः । तदेवं **ध्वनेरभाववादिनस्**तावत् प्रत्युक्ताः ।

अस्ति ध्वनिः । सँ चाऽविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन । तत्राद्यस्योदाहरणम्

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

सुवर्णं न तु ताम्रादि, पुष्पाणि प्रतिदिनं ग्राह्याणि, न तु दीनारादिवत् सकृद् ग्राह्याणि, पृथिवीं न तु नगरादिमात्रम्, चिन्वन्ति उच्चिन्वन्ति, प्रत्यहं गृहीतसारां कुर्वते पुरुषाः इति । अन्ये त्वकार्यकराः । त्रयः इति न तु चत्वारः । एवं शूरः पराक्रमेण

१. अत्र किं व्यङ्ग्यं प्रधानं किं वाच्यमिति सन्देहः ॥ २ व्यङ्ग्यस्य वाच्यत्वेन सङ्कीर्णता ॥ ३ युग ॥ ४ अभाववादे निराकृते युक्तं भेदकथनम् । उदाहरणपृष्ठे च भाक्तवादः सुशङ्कः सुपरिहरश्चेति विप्रतिपत्तिनिराकृतिमप्ययुक्तमेव भेदकथनम् ॥ ५. सुवर्णपुष्पां ख. ॥

दुर्घटकार्यकारी। कृता परं धाराधिरोहं नीता विद्या तत्त्वावबोधहेतुर्येन। सेवक इति सेवाज्ञ इति वा वक्तव्ये ज्ञानस्यालौकिकत्वमनौचित्यायगगनादि च ध्वनितुं यश्चेत्यादिकृतम्। शूरकृतविद्यवत् सेवाज्ञस्य निर्गुणस्याऽपि लाभप्राप्तिरिति त्रयश्चकाराः। एतच्च वा॑क्य-मेवाऽसम्भवत्स्वार्थमिति कृत्वा अ॑विवक्षितवाच्यं, तत एव पदार्थमभिधायाऽन्वयं च तात्पर्य-शक्त्याऽवगमय्यैव बाधकवशेन तै॑मपहस्त्य सादृश्यात् सुलभसमृद्धिसम्भारभाजनतां लक्षयति। तल्लक्षणाप्रयोजनं शूर-कृतविद्य-सेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सन्नायिका-कुचकलशयुगलमिव महार्घतामुपयद् ध्वन्यत इति। शब्दोऽत्र प्रधानतया व्यञ्जकोऽर्थस्तु तत्सहकारितयेति चत्वारोऽत्र व्यापाराः।

द्वितीयस्याऽपि

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥

न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतप्रभृतय इमां सिद्धिं विदध्युः। दिव्यकल्प-सहस्रादिश्चात्र परिमितः कालः। न चैवंविधोत्तमफलत्वेन पञ्चाग्निप्रभृत्यपि तपः श्रुतम्। तवेति भिन्नं पदं, समासेन विगलिततया सा न प्रतीयते तव दशतीत्यभिप्रायेण। तेन यदाकुतानुरोधात्त्वदधरपाटलमिति न कृतमिति, तदसदेव। दशतीत्यास्वादयत्यविच्छिन्न-प्रबन्धतया, न त्वौदरिकवत् परिभुङ्क्तेऽपि तु रसज्ञो॑ऽत्रेति तत्प्राप्तिवदेव रसज्ञताऽप्यस्य तपःप्रभावादेवेति। शुकशावक इति तारुण्याद्युचितकाललाभोऽपि तपस एवेति। अनु-रागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकभावोन्मीलनं व्यङ्ग्यम्। अत्र च त्रय एव व्यापाराः, अभिधा तात्पर्यं ध्वननं चेति। मुख्यार्थबाधाविरहे मध्यकक्ष्याया लक्षणायास्तृतीयस्या अभावात्। तदेवं लक्षणकरणे ध्वनिलक्षणम्, अभाववादपरिहारः, समासोक्त्याद्यलङ्काराणां ध्वनेर्विवेकः, निर्भङ्ग्येतरवैलक्षण्येन ध्वनेर्विषयदर्शनं च यत्रार्थः शब्दो वेत्यादिना, प्रभेदकथनं स चाविवक्षितवाच्य इत्यादिना, उदाहरणदर्शनं सुवर्ण-पुष्पामित्यादिनेति षट् प्रमेयाणि।

इदानीं ध्वनिर्भक्तिर्न भवतीत्याह

"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।"

१. पुष्प-चिन्वन्तिशब्दौ। पुष्पशब्दो हि सुलभसमृद्धिसम्भारं चिन्वन्तिशब्दश्च तद्भाजनत शूरादीनां लक्षयतीत्यर्थः॥ २. अत्यन्ततिरस्कृतम्॥ ३. अन्वयम्॥ ४. विम्बफले॥ ५. वाच्यानु-गतादिभ्यो गुणीभूतव्यङ्ग्यप्रकारेभ्यः॥ ६. -भ- ख.॥

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकरूपतां तादूप्यं घटकुम्भवत्[1] बिभर्त्ति, भिन्नरूपत्वात्। वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र स ध्वनिः, उपचारमात्रं तु भक्तिः। तत्रैतत्[2] स्यात् भक्तिर्लक्षणं ध्वनेः[3], पृथिवीत्वमिव पृथिव्यास्तादात्म्येन स्थितमित्याह

"अतिव्याप्तेरथाव्याप्तेर्न चाऽसौ लक्ष्यते तया।"

न च भक्त्या ध्वनिर्लक्ष्यते। कथमतिव्याप्तेरव्याप्तेश्च। तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात्। यत्र हि व्यञ्जकत्वकृतं महत् सौष्ठवं नास्ति तत्राऽप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्त्तितव्यवहाराः कवयो दृश्यन्ते। यथा—परिम्लानं पीनस्तनेति। गात्रान्तरसङ्गे म्लानम्। उभयतः स्तनजघनविश्रमपदे तु परितः समन्तात् म्लानम्। अन्तर्मध्यस्य बुध्नभागे सन्तापं वदति प्रकाशयत्यत[4] एव तथाभूताऽनुभाववशात् तत्सन्तापे दृढपरामर्शेन साक्षात्कारायमाणे उदयनोऽपि यदा सन्तापमनुभवति तदा सन्तापं वदत्युप[5]दिशति सङ्क्रमयतीत्यप्यर्थो व्याख्येयः। अत्र वदति प्रकाशयतीति प्रतिपत्तेः[6] करणं लक्ष्यते। तस्य स्फुटत्वं प्रयोजनम्। तदप्रयोजनकल्पमगुप्तत्वेनाऽभिहितत्वेनेव प्रतीतेस्तत्प्रत्युत प्रतिपन्नमद्वयम्। कार्यमुखेन हि प्रतिपन्नः सन्तापो यथा चमत्करोति न तथाऽभिहितरूपः। वदति सङ्क्रमयतीत्यत्र[7] व्याख्याते द्वितीयेऽर्थे गुप्तत्वेन प्रतीयमानं स्फुटत्व[8]लक्षणं प्रयोजनमस्तीति शङ्कित्वा उदाहरणान्तराणि दर्शयन्ते[9]।

चुंबिज्जइ सयहुत्तं अवरुंडिज्जइ सहस्सहुत्तं पि।
रमिए पुणो रमिज्जइ पिये जणे णत्थि पुणरुत्तं॥

अत्र पौनरुक्त्येन वैरस्यं[10] लक्ष्यते, क्रमश्चोपलक्ष्यते। एवं च क्रमोऽपि[11] नास्तीत्यर्थः। तथाहि—आलिङ्गनादनन्तरं परिचुम्बनमिति कामसूत्रम्। इह तु परिचुम्बनमादावुक्तम्।

कुवियाओ पसण्णाओ ओरुण्णमुहीओ विहसमाणीओ।
जह गहिया तह हिययं हरन्ति उच्छण्णमहिलाओ॥

ओरुण्णमुहीओ उपरुदितवदनाः। उच्छण्णमहिलाओ स्वैरिण्यो महिलाः। न केवलं प्रसन्ना विहसन्त्यश्च, यावत्कुपिता रुदत्योऽप्यावर्जयन्ति। यथेति ताडनादि कुर्वत्योऽपि। अत्र ग्रहणेन उपादेयता लक्ष्यते। हरणेन तत्पर[12]तन्त्रतापत्तिः।

---

१. व्यतिरेकी दृष्टान्तः। 'तादूप्यं घटकुम्भवत्' अयं पाठः ग पुस्तके नास्ति॥ २. आशङ्केयम्॥ ३. ध्वनेरित्याह इति पाठः ग. पुस्तके॥ ४. व्याख्यानान्तरमिदम्॥ ५. सामान्येन वदनेन विशेषरूप उपदेशस्तेन च स्वफलभूतं संक्रमणं लक्ष्यते॥ ६ प्रतिपादनम्॥ ७ सङ्क्रा- ग.॥ ८. प्रतीयमानमस्फुटत्व-ग.॥ ९. कार्यम्॥ १०. पौनरुक्त्यं हि दोषः, स चेहाऽसम्भवन् दोषत्वसमानजातीयं क्रममुपलक्षयति। प्रियतमजने हि उपभोगस्य कः क्रम इति लौकिकी प्रसिद्धिस्तदाश्रयणेन च तस्य दोषगणनेति। लक्षिताभ्यामर्थाभ्यां तात्पर्यं गाथायाः कथयति॥ ११ अपिशब्दाद् वैरस्यम्॥ १२. स्त्री॥

अज्झाइ पहारो णवलयाए दिण्णो पियेण थणवट्ठे ।
मउओ वि दूसहो च्चिय जाओ हियए सवत्तीण ॥

कनिष्ठभार्यायाः स्तनपृष्ठे नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्यसूचकतत्क्रीडासंविभागमप्राप्तानां हृदये दुःसहो जातो मृदुकत्वादेव। अन्यस्य दत्तो मृदुः प्रहारोऽन्यस्य च सम्पद्यते दुःसहश्च मृदुरपीति चित्रम्। दानेन स्वत्वनिवृत्तिपरत्वापादनरूपेणासम्भवताऽत्र तत्फलवत्त्वं[1] लक्ष्यते। परार्थे यः पीडामनुभवति इति। यद्यपि प्रस्तुतमहापुरुषापेक्षयाऽनुभवतिशब्दो मुख्य एव, तथाऽप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवनेन असम्भवता पीडावत्त्वं[2] लक्ष्यते। तच्च पीड्यमानत्वे पर्यवस्यति। नन्वस्त्येतेषु किमपि किमपि प्रयोजनं, तत् किमिति न ध्वन्यते। मैवम्। न ह्येवंविधः कदाचिदपि ध्वनेर्विषयो युक्त इत्याह

"उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयी भवेत्॥"

उक्त्यन्तरेण इति। ध्वन्यतिरिक्तेन स्फुटेन शब्दार्थव्यापार[3]विशेषेणेत्यर्थः। ध्वन्युक्तेर्विषयी भवेद् इति ध्वनिशब्देनोच्येतेत्यर्थः। वदतीत्यादावुदाहृते च विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः। एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापारः इत्युक्त्वा, यत्र मूलत एव प्रयोजनं नास्ति भवति चोपचारस्तत्राऽपि को ध्वननव्यापार इत्याह

"रुढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥"

लावण्याद्या ये शब्दाः स्वविषयाल्लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः, रूढत्वादेव च त्रितयसन्निध्यपेक्षणव्यवधानशून्याः। यदाह

"निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवद्।" इति।

ते तस्मिन् स्वविषयादन्यत्र प्रयुक्ता अपि न ध्वनेः पदं भवन्ति। न तत्र ध्वनिव्यवहारः। तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्त्तते, न तथाविधशब्दमुखेन। यथा

दीवडि तेल्लु णाहि पलु द्रम्मि गमिट्ठाँ[4]।
लावण्णुज्जलंगु घरि ढोल्लु पइट्ठा॥

१. दानफलं सम्बन्धः, प्रहारसम्बन्धवती जातेत्यर्थः॥ २. पीडया सह सम्बन्धः॥ ३ वाच्यवाचकभावात्मना॥ ४. गविट्ठा ख.॥

अत्र हि प्रियतमस्यैव समस्ताशाप्रकाशकत्वं ध्वन्यते, तत्तु न लावण्यशब्दाद् अपि तु समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादेव । एवं यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति तावन्नास्ति । तेन ध्वनेर्यदि भक्तिर्लक्षणं तदा भक्तिसन्निधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यतिव्याप्तिः । अभ्युपगम्याऽपि ब्रूमः । भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः, तथाऽपि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः । न च भिन्नविषययोर्द्धर्मधर्मिभावो धर्म एव च लक्षणमिति । उच्यते—तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः । ध्वननं च प्रयोजनविषयम् । न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः, लक्षणासामग्र्यभावादित्यभिप्रायेणाह

"मुख्यां वृत्तिं परित्यज्य गुणवृत्त्याऽर्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥"

फलं प्रयोजनम्, स्खलद्गतिः प्रतिपादयितुमशक्तः । तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने प्रतिपादयितव्ये यदि शब्दस्य लक्षकत्वं तत्तस्य प्रयोगे दुष्टतैव स्यात् । प्रयोजनावगमस्य सुखसम्पत्तये हि स शब्दः प्रयुज्यते, तस्मिन्नमुख्येऽर्थे । यदि च सिंहो बटुरिति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य, तत्तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत् तत्राऽपि प्रयोजनान्तरमन्वेष्यम् । तत्राऽप्युपचारेऽनवस्था । अथ तत्र न स्खलद्गतित्वं, तर्हि प्रयोजनेऽवगमयितव्ये न लक्षणाख्यो व्यापारस्तत्सामग्र्यभावात् । न च नास्ति व्यापारः, न चासावभिधा, समयस्य तत्राऽभावात् । यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः । अत एव च न प्रयोगे दुष्टता काचित् । प्रयोजनस्याविघ्नेनैव प्रतीतेः । तेनाभिधैव मुख्येऽर्थे बाधकेन प्रविवृत्सुर्निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरति । अत एवामुख्योऽस्यायमर्थ इति व्यवहारः । तथैव चामुख्यतया सङ्केतग्रहणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा । यतश्चाभिधाबाधनेनोत्थानात्तत्पुच्छभूतत्वाच्चाऽभिधाशेषभूतैव लक्षणा, ततो वाचकत्वमभिधाव्यापारमाश्रिता कथं ध्वनेर्व्यञ्जनात्मनो लक्षणं स्याद्, भिन्नविषयत्वात् । तदाह

"वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ।"

तस्मादतिव्याप्तेस्तत्प्रसङ्गेनोपदर्शिताद्भिन्नविषयत्वाच्चान्यो ध्वनिरन्या च गुणवृत्तिः । अव्याप्तिरप्यस्य लक्षणस्य । न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणोऽन्ये च बहवस्तत्प्रकारा वक्ष्यमाणा भक्त्या व्याप्यन्ते ।

---

१. शब्दानाम् । २. –र्न रुध्यमाना ख. ॥

तस्माद्भक्तिरलक्षणा ।

"कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।"

कस्यचिद् इति अविवक्षितवाच्यस्येत्यर्थः। ननु भक्तिस्तावच्चिरन्तनैरुक्ता। तदुपलक्षणमुखेन च ध्वनिमपि समग्रभेदं लक्षयिष्यन्ति ज्ञास्यन्ति, किं तल्लक्षणेन। मैवं, यदि हि गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते, तदाभिधाव्यापारेण तदितरालङ्कारवर्गः समग्रो लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणकरणवैयर्थ्यप्रसङ्गः। अभिधानाभिधेयभावो ह्यलङ्काराणां व्यापकस्तदभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते कुत्रेदानीमलङ्कारकाराणां व्यापारः। तथा, हेतुबलात् कार्यं जायत इति तार्किकैरुक्ते, किमिदानीमीश्वरप्रभृतीनां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरारम्भः स्यादित्यर्थः। माऽगूढ्ढाऽपूर्वोन्मीलनं, पूर्वोन्मीलितमेवास्माभिः सम्यग् निरूपितं, तथाऽपि को दोष इत्यभिप्रायेणाह

"लक्षणेऽन्यैः कृते चाऽस्य पक्षसंसिद्धिरेव नः।"

ध्वनिरस्तीति नः पक्षः, स च प्रागेव संसिद्धः। इत्ययत्नसम्पन्नसमीहितार्थाः संवृत्ताः स्मः। तदेवं भाक्तवादनिराकृतौ ताद्रूप्यनिषेधो[1] भक्त्या इत्याद्यर्द्धेन, लक्ष्यलक्षणतादात्म्यपराकृतावतिव्याप्तिकथनम् अतिव्याप्तः इत्यनेन, व्यञ्जकशब्दलक्षणं उक्त्यन्तरेण इत्यादिना, निर्विवादमतिव्याप्तिदर्शनं रूढा ये विषये इत्यादिना, अतिव्याप्त्यभ्युपगमेऽपि लक्षणाऽनुपपत्तावुपपत्तिः मुख्यां वृत्तिम् इत्यादिना, लक्षणानुपपत्त्युपसंहारो वाचकत्वाश्रयेण इत्यादिना, अव्याप्तिकथनम् अव्याप्तेः इत्यनेन, उपलक्ष्योपलक्षणभावेऽसार्वत्रिकत्वं कस्यचिद् इत्यादिना, अर्द्धेन सर्वथा लक्षणस्य कर्त्तव्यत्वं कस्यचिदित्यत्रैव नतु भक्तिरित्याक्षेपपुरःसरपरिहारेण, अन्यैः कृतेऽपि लक्षणे पक्षसिद्धिः लक्षणेऽन्यैः इत्यादिना, इति दश प्रमेयाणि।

एवमविवक्षितवाच्यविवक्षिताऽन्यपरवाच्यत्वेन ध्वनिर्द्विप्रकारः प्रकाशितः। तत्राविवक्षितवाच्यस्य प्रभेद[3]प्रतिपादनायेदमुच्यते

"अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥"

योऽर्थ उपपद्यमानोऽपि तावतैवाऽनुपयोगाद्धर्मान्तरसंवलनयाऽन्यतामिव गतोऽपि लक्ष्यमाणोऽनुगतधर्मिसूत्रन्यायेनास्ते स रूपान्तरपरिणत उक्तः। यस्त्वनुपपद्यमान उपायतामात्रेणाऽर्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृत इति। तत्र अर्थान्तरसङ्क्रमितवाच्यो यथा—स्निग्धश्यामलकान्ति इति। यथा च—ताला जायन्ति गुणा इति। अत्र द्वितीयः कमलशब्दो लक्ष्मीपात्रत्वकान्तावदनोपमानक्षमत्वादिधर्मान्तरशतचित्रतापरिणतं संज्ञिनमाह[4]।

---

१. –धात्ततादात्म्यपराकृतिः भ–ग.॥ २. –लक्षकभावपरा– ग.॥ ३. प्रभेद इति नास्ति ग. पुस्तके॥ ४. लक्ष्मीपात्रत्वादिधर्मान्तरप्रतिपत्त्यर्थं विशिष्टं कमलं लक्षयतीत्यर्थः॥

अत्यन्ततिरस्कृतवाच्यो यथा

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

हेमन्तवर्णने पञ्चवट्यां[1] रामस्योक्तिः । अन्ध इति चोपसंहृतदृष्टिः, जातान्धस्यापि गर्भे दृष्ट्युपघातात् । अन्धोऽयं पुरोऽपि न पश्यतीति । अस्त्यत्र तिरस्कारोऽन्धार्थस्य न त्वत्यन्तम् । इह तु आदर्शस्याऽऽन्ध्यमारोप्यमाणमपि न सह्यमिति अन्धशब्दोऽत्र पदार्थ-स्फुटीकरणाशक्तत्वं[2] नष्टदृष्टिगतं निमित्तीकृत्यादर्शं[3] लक्षणया प्रतिपादयति । असाधारण-विच्छायत्वानुपयोगित्वादिधर्मजातमसङ्ख्यं प्रयोजनं व्यनक्ति । यथा च

गयणं च मत्तमेहं धारालुलियज्जुणाइं अ वणाइं ।
णिरहंकारमियंका हरन्ति णीलाउ वि णिसाओ ॥

चशब्दोऽपिशब्दार्थे । गगनं मत्तमेवमपि न केवलं तारकितम्, धारालुलितार्जुन-वृक्षाण्यपि वनानि, न केवलं मलयमरुदान्दोलितसहकाराणि, निरहंकारमृगाङ्का नीला अपि निशाः, न केवलं सितकरकिरणधवलिताः, हरन्ति उत्सुकयन्तीत्यर्थः । मत्तशब्देन सर्वथै-वेहाऽसम्भवत्स्वार्थेन बाधितमद्योपयोगर्क्षीबात्मकमुख्यार्थेन सादृश्यान्मेघान् लक्षयताऽसमञ्ज-सकारित्व[4]दुर्निवारत्वादिधर्मसहस्रं ध्वन्यते । निरहङ्कारशब्देनाऽपि चन्द्रं लक्षयता तत्पार-तन्त्र्यविच्छायत्वोज्जिगमिषारूपजिगीषात्यागप्रभृति ।

"असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितो परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥"

असंलक्ष्यक्रम इत्यनेन क्रमोऽत्र भवत्येवेति प्रकाश्यते । विशेषप्रतिषेधे शेषाभ्यनु-ज्ञानमिति न्यायात् । तत्र—

"रसभाव[9]तदाभासतत्[10]प्रशान्त्यादिरक्रमः ।
ध्वनेरात्माऽङ्गिभावेन भासमानो व्यवस्थितः ॥

रसादिरेवाक्रमो न तु रसादिरक्रम एव । एवंवादिनि देवर्षौ इत्यादौ कचिद्भा-वस्य क्रमव्यङ्ग्यत्वप्रकाशनात् । तत्र रसध्वनिः स[11] एव यत्र मुख्यतया[12] विभावानुभाव-व्यभिचारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवाऽऽस्वाद-प्रकर्षः । यथा

---

१ स्थानविशेषे ॥ २ –र्थास्फुटी–क । ३. सादृश्य ॥ ४ मर्यादोल्लङ्घनसारूप्यात् ॥ ५ स्खलनगर्जनभ्रमनविद्युज्जिह्वाप्रसारणनिखिलजगत्प्लावनवियुक्तप्राणहरणादि ॥ ६. बाधितबलौर्जित्य गर्वाभावात्मकमुख्यार्थेन ॥ ७ जीवन्मृतप्रायत्वसादृश्यात् ॥ ८. चन्द्र ॥ ९. रसभाव ॥ १० भाव ॥ ११ अन्यस्तु रसवदलङ्कारो भावादिध्वनिर्वा ॥ १२ अङ्गिभावेन ॥

कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्ता नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःस्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥

अत्र हि नायिकाकाराऽनुवर्त्यमानस्वात्मप्रतिकृतिपविचित्रितचित्रफलहकालोकनाद्वत्सराजस्य परस्परास्थाबन्धरूपो रतिस्थायिभावो विभावाऽनुभावसंयोजनावशेन चर्वणारूढ इति । यद्यपि च रसेनैव सर्वं जीवति काव्यं तथापि तस्य रसस्यैकघनचमत्कारात्मनोऽपि कुतश्चिदंशात् प्रयोजकीभूतादधिकोऽसौ चमत्कारो भवति । तत्र यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो व्यभिचारी चमत्कारातिशये प्रयोजको भवति तदा भावध्वनिः । यथा—तिष्ठेत् कोपवशाद् इति । अत्र हि विप्रलम्भरससद्भावेऽपि ईर्ष्यति वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः । व्यभिचारिणः उदयस्थित्यपायत्रिधर्मकाः । यदाह—"विविधमाभिमुख्येन चरन्तीति व्यभिचारिणः" इति ।

तत्रोदयावस्थाप्रयुक्तः कदाचिद्यथा—याते गोत्रविपर्यये इति । अत्र हि प्रणयकोपस्योज्जिगमिषयैव यदवस्थानं न तु पारित इत्युदयावकाशनिराकरणात्तदेवाऽऽस्वादजीवितम् । स्थितिः पुनरुदाहृता तिष्ठेत् कोपवशाद् इत्यादिना । क्वचित्तु व्यभिचारिणः प्रशमावस्थया प्रयुक्तश्चमत्कारः । यथा—एकस्मिन् शयने इति । क्वचिद् व्यभिचारिणोः सन्धिरेव चर्वणास्पदम् । यथा—उसुरुसुंभियाए इति । क्वचिद् व्यभिचार्यन्तरशबलतैव विश्रान्तिपदम् । यथा काकार्यम् इति । एवमन्यदुत्प्रेक्ष्यम् । एतानि चोदयसन्धिशबलत्वादिकानि कारिकायाम् **आदि**ग्रहणेन गृहीतानि ।

यदा च विभावाभासाद्रत्याभासोदयस्तदा विभावानुभावाभासाच्चर्वणाभास इति । रसाभासस्य विषयो यथा—रावणकाव्याकर्णने शृङ्गाराभासः । यद्यपि "शृङ्गारानुकृतिर्या तु स हास्यः" इति **मुनि**ना निरूपितं, तथाऽप्यौत्तर[2]कालिकं तत्र हास्यरसत्वमिति दूराकर्षणमोहेत्यत्र[3] न हास्यरसचर्वणावसरः । ननु नात्र रतिस्थायिभावोऽस्ति परस्परास्थाबन्धाभावात् । केनैतदुक्तं रतिः इति । रत्याभासो हि सः । अतश्चाभासो येनाऽस्य सीतामप्युपेक्षिका द्विष्टा वेति प्रतिपत्तिर्हृदयं न स्पृशत्येव । तत्स्पर्शे हि तस्याप्यभिलाषो लीयेत । न च मयीयमनुरक्ता इत्यपि निश्चयेन कृत्यं, कामकृतान्मोहाद् । अत एव तदाभासत्वं वस्तुतस्तत्र स्थाप्यं, शुक्तौ रजताभासवत् । एतच्च शृङ्गारानुकृतिशब्दं प्रयुञ्जानो **मुनि**रपि सूचितवान् । अनुकृतिरमुख्यता आभास इति ह्येकोऽर्थः । अत एवाभि[4]लाषिके एकतरनिष्ठेऽपि शृङ्गार-

१. श्रुतावगतवाक्यार्थमात्रे ॥ २. शृङ्गारानुकृतिकालानन्तरभाविकालोद्भवम् ॥ ३. शृङ्गारानुकृतिमात्रे श्लोके । ४. विप्रलम्भशृङ्गारे ॥

शब्देन तत्र तत्र व्यवहारस्तदाभासतया मन्तव्यः। शृङ्गारेण वीरादीनामप्याभासरूपतोपलक्षितैव। एवं रसध्वनेरेवाऽमी भावध्वनिप्रभृतयो निष्यन्दा आस्वादे प्रधानं प्रयोजकमंशं विभज्य पृथग् व्यवस्थाप्यन्ते। यथा गन्धयुक्तिज्ञैरेकसंमूर्छितामोदोपभोगेऽपि सुपरिशुद्धं[1] आस्यादिप्रयुक्तमिदं सौरभमिति।

इदानीं रसवदलंकारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति दर्श्यते

"वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः॥"

रस-भाव-तदाभास-तत्प्रशमनलक्षणं मुख्यमर्थमनुवर्त्तमाना यत्र शब्दालङ्कारा अर्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः।

"प्रधानेऽन्यत्र वाक्यार्थे यत्राऽङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥"

यद्यपि रसवदलङ्कारस्यान्यैर्[2]दर्शितो विषयस्तथाऽपि यस्मिन् काव्ये प्रधानतयाऽन्योऽर्थो वाक्यार्थीभूतस्तस्य चाङ्गभूता ये रसादयस्ते रसादेरलङ्कारस्य विषय इति मामकः[3] पक्षः। तद्यथा–चाटुषु प्रेयोलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते। स च रसादिरलङ्कारः शुद्धः संकीर्णो वा। तत्राद्यो यथा–किं हास्येन न मे इति। अत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम्। यद्यप्यत्र शृङ्गारोऽप्यस्ति तथाऽपि स करुणस्यैवाङ्गमिति न[4] सङ्करः। स्वप्नस्याऽनुभूतसदृशत्वेन भवनमिति हसन्नेव प्रियतमः स्वप्नेऽप्यवलोकितः।

न मे प्रयास्यसि पुनरिति। इदानीं त्वां विदितशठभावं बाहुपाशबन्धान्न मोक्ष्यामि। अत एव रिक्तबाहुवलयः इति। स्वीकृतस्य चोपालम्भो युक्त इत्याह–केयं निष्करुणेति। केनासीति। गोत्रस्खलितादावपि न कदाचिन्मया खेदितोऽसीति। स्वप्नान्तेषु स्वप्नायितेषु स्वप्नप्रलपितेषु पुनः पुनरुद्भूततया बहुष्विति वदन् युष्माकं सम्बन्धी रिपुस्त्रीजनः प्रियतमे विशेषेण आसक्तः कण्ठग्रहो येन तादृश एव सन् बुद्ध्वा शून्यवलयाकारी कृतबाहुपाशः सन् तारं मुक्तकण्ठं रोदितीति। अत्र शोकस्थायिभावेन स्वप्नदर्शनोद्दीपितेन करुणरसेन चर्व्यमाणेन सुन्दरीभूतो नरपतिप्रभावो भातीति करुणः शुद्ध एवालङ्कारः। न हि त्वया

---

१. सुरभिद्रव्यम्॥ २. रसवद्दर्शितस्पष्टशृङ्गारादिरसमिति वाक्यार्थत्वेन। अलंकारकाराणामभिप्रायेग प्रेयोलंकारस्य वाक्यार्थत्व इत्युक्तमाचार्याभिप्रायेण तु भावध्वनाविति वक्तव्यम्॥ ३. मदुपज्ञमेतदित्यर्थः॥ ४. न संकीर्णता॥

रिपवो हता इति यादृगनलङ्कृतोऽयं वाक्यार्थस्तादृगयमपि तु सुन्दरतरीभूतोऽत्रार्थः। सौन्दर्यं च करुणरसकृतमेवेति।

चन्द्रादिना वस्तुना यथा वस्त्वन्तरं वदनाद्यलङ्क्रियते, तदुपमितत्वेन चारुतयाऽवभासात्तथा रसेनाऽपि वस्तु वा रसान्तरं चोपस्कृतं सुन्दरं भातीति रसस्याऽपि वस्तुन इवालङ्कारत्वे को विरोधः। ननु रसेन किं कुर्वता प्रस्तुतोऽर्थोऽलङ्क्रियते। तदुपमयाऽपि किं कुर्वत्याऽलङ्क्रियते। ननु तयोपमीयते प्रस्तुतोऽर्थः। रसेनाऽपि तर्हि सरसीक्रियते सोऽर्थ इति स्वसंवेद्यमेतत्। संकीर्ण्णो रसादिरङ्गभूतो यथा क्षिप्तो हस्तावलग्न इति। अत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे कामीवेत्यनेनोपमानेनाऽत्र श्लेषानुगृहीतेनेर्ष्याविप्रलम्भो य आकृष्टस्तस्य श्लेषोपमासहितस्याङ्गत्वं न केवलस्य। यद्यप्यत्र करुणरसो वास्तवोऽप्यस्ति तथापि स तच्चारुत्वप्रतीत्यै न व्याप्रियत इत्यनेनाऽभिप्रायेण श्लेषसहितस्येत्येतावदेवोच्यते।

अथवा अत्रेर्ष्याविप्रलम्भः करुणस्याङ्गम्। करुणश्च प्रभावातिशयस्य। न च विप्रलम्भस्य करुणे विश्रान्तिरिति तयोः समत्वात् साङ्कर्येणाङ्गभाव इति। **रसादिरित्यादि-**ग्रहणेन भावाद्यलङ्कारा अपि प्रेयस्विप्रभृतिलक्षणा गृह्यन्ते। तत्र भावालङ्कारस्य शुद्धस्योदाहरणम्। यथा

तव शतपत्रपत्रमृदुताम्रतलश्चरणः
चलकलहंसनूपुरकलध्वनिना मुखरः।
महिषमहासुरस्य शिरसि प्रसभं निहितः
कनकमहामहीध्रगुरुतां कथमिव गतः॥

इत्यत्र देवतास्तोत्रे वाक्यार्थीभूते वितर्कविस्मयादिभावस्य चारुत्वहेतुतेति तस्याङ्गत्वाद्भावालङ्कारस्य विषयः। रसाभासस्यालङ्कारता यथा

समस्तगुणसम्पदः सममलङ्क्रियाणां गणैः
भवन्ति यदि भूषणं तव तथाऽपि नो शोभसे।
शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेः
तदेव ननु वाणि ते जगति सर्वलोकोत्तरम्॥

अत्र हि परमेशस्तुतिमात्रे वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाराभासश्चारुत्वहेतुः समासोक्तिसहितः। न ह्ययं पूर्णः शृङ्गारो नायिकाया निर्गुणत्वे निरलङ्कारत्वे च भवति। "उत्तमयुवप्रकृतिरुज्ज्वलवेषात्मकः" इति चाभिधानात्। भावाभासाङ्गता यथा

१ प्रभाव॥ २ विस्मयादीनां भावानां वितर्कं प्रति अङ्गत्वमिति समत्वाभावान्न सङ्कीर्णतयाऽलङ्कारत्वम्॥ ३. विस्मयादेः॥ ४. -ते ग.॥ ५. शृङ्गारः॥

स पातु वो यस्य हताऽवशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥

अत्र रौद्रप्रकृतीनामनुचितस्त्रासो भगवत्प्रभावकारणकृत इति भावाभासः ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वाऽपि तवेक्षणे क्षणात् ॥

अत्र राजविषयस्य रतिभावस्य भावप्रशमोऽङ्गम्[1] ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याऽभिधायि तव नाम विभो गृहीतं
केनाऽपि तत्र विषमामकरोदवस्थाम् ॥

अत्र त्रासस्योदयः[2] ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत् कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वाऽसि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ।

अत्र शङ्काऽसूयाधृतिस्मृत्यौत्सुक्यश्रमदैन्यविबोधौत्सुक्यानां शबलता । एते च रसवदाद्यलङ्काराः । यद्यपि भावोदयसन्धिशबलत्वानि नालङ्कारतयोक्तानि तथाऽपि कश्चिद् ब्रूयादित्येवमुक्तम् । एवंविध एव रसवदादेरलङ्कारस्य न्याय्यो विषयः । यत्र हि रसादेर्वाक्यार्थीभावस्तत्र कथमलङ्कारत्वम् । अलंकारो हि चारुत्वसिद्धिहेतुः प्रसिद्धो न त्वात्मैवात्मनः । तथा चाऽयमत्र संक्षेपः ।

"रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥"

---

१. निमित्तसप्तमी ॥ २. अङ्गमिति सम्बन्धः ॥

तस्माद्यत्र रसादयो वाक्यार्थीभूताः स सर्वो ध्वनेः प्रभेदः। तस्य च प्रधानस्यात्मभूतस्योपमादयोऽलङ्काराः। एतदुक्तं भवति—उपमया यद्यपि वाच्योऽर्थोऽलङ्क्रियते तथाऽपि तस्य तदेवाऽलङ्करणं यद् व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानम्, इति वस्तुतो ध्वन्यात्मैवाऽलङ्कार्यः। कटककेयूरादिभिरपि हि शरीरसम[1]वायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयाऽलङ्क्रियते। तथा ह्यचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति, अलङ्कार्यस्याऽभावात्। यतिशरीरं च कटकादियुक्तं हास्यावहं भाति, अलङ्कार्यस्यानौचित्यात्। न च देहस्य किञ्चिदनौचित्यमिति वस्तुत आत्मैवालङ्कार्यः, अहमलंकृत इत्यभिमानात्। यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसा[2]देरलङ्कारतायां[3] विषयः। एवं ध्वनेरुपमादीनां रसवदाद्यलङ्कारस्य च विभक्तविषयता भवति। यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय इत्युच्यते, तदुपमादीनां प्रविरलविषयता निर्विषयतैवाऽभिहिता स्यात्। यस्मादचेतनवस्तुवृत्तान्ते वाक्यार्थीभूते पुनश्चेतनवस्तुवृत्तान्तयोजनया यथा कथञ्चिद् भवितव्यम्।

अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नाऽसौ रसवदलङ्कारस्य विषय इत्युच्यते। तन्महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात्। यथा तरङ्गभ्रूभङ्गा[4] इति। तरङ्गा एव भ्रूभङ्गा यस्याः। विकर्षन्ती इति विलम्बमानं बलादाक्षिपन्ती वसनमंशुकं प्रियतमावलम्बननिषेधायेति भावः। बहुशो यत् स्खलितं बहवो येऽपराधास्तदभिसन्धाय हृदयेनैकीकृत्य। असहना मानिनीत्यर्थः। अथ च मद्वियोगपश्चात्तापासहिष्णुस्तापशान्तये नदी सम्पन्नेति। यद्यपि सा नदी सम्पन्नेत्युत्पत्तिक्रमस्तथाऽपि नदीदर्शने तत्परिणामनिश्चय इति ज्ञप्तिक्रमस्तेन भ्रूभङ्गतरङ्गेत्यादिनोक्तम्। संरम्भशिथिलमिवेति भिन्नक्रमः इवशब्दः उत्प्रेक्षाद्योतकस्ततस्तत्त्वापत्तिरूपे परिणामे कथमुपमेति न चोद्यम्।

मेरूरुकेसरमुदारदिगन्तपत्र—
मामूललम्बिचलशेषशरीरनालम्।
येनोद्धृतं कुवलयं ललता सलीलम्
उत्तंसनार्थमिव पातु स वो वराहः॥

इत्यादौ यथाशब्दस्योभयार्थाऽभिधानसामर्थ्ये कुवलयकुवलयमित्यादि न क्रियते,

---

१. संयोगमात्र॥ २,३. व्यधिकरणे षष्ठ्यौ एते ग.॥

४. तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
यथाऽऽविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता॥ ख.॥

तथेह रूपकप्रकरणे[1] तरङ्गभ्रूभङ्गेत्यादिशब्दान्तरमहिम्नाऽनपह्नुतभेदयोरभेद इति नदीगते आविद्धत्वादौ तद्गतमेतदेवारोप्यत इति रूपकेऽप्याविद्धाविद्धमित्यादि[4] न कृतं तद्रूपकप्रस्तावे कथमतिशयोक्तिरिति न वाच्यम्। इयं नदी सा भावेनाऽनुरागेण परिणतेति योजना, न तु नदीभावेन नदीत्वेनेति। तस्मादव्यक्ते गुणसन्दोहे[5] नपुंसकवचनमेव प्रयुज्यत इति कथमियमिति स्त्रीत्वेन निर्देश इति न चोदनीयम्। यथा च—तन्वी मेघजलार्द्रेति[6]। तन्वी इति वियोगकृशाऽपि। अनुतप्ता चाभरणानि त्यजति। स्वकालो वसन्तग्रीष्मप्रायः। उपायचिन्तनार्थं मौनं चिन्तामौनम्। किमिति पादपतितमपि दयितमवधूतवत्यहमिति च चिन्तया मौनम्। चण्डी कोपना। एतौ श्लोकौ नदीलतावर्ण्णनपरौ तात्पर्येण पुरूरवस उन्मादाक्रान्तस्योक्तिरूपौ। यथा वा

तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम्।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥

हे भद्र तेषाम् इति ये ममैव हृदये स्थिताः। गोपवधूनां गोपीनां, ये विलाससुहृदो नर्मसचिवाः। प्रच्छन्नानुरागिणीनां हि नान्यो नर्मसुहृद्भवति। राधा च सातिशयं प्रेमस्थानमित्याह—राधासंभोगानां ये साक्षाद् द्रष्टारः। कलिन्दशैलतनया यमुना, तस्यास्तीरे लतागृहाणां क्षेमं कुशलमिति काका प्रश्नः। एवं तं पृष्ट्वा गोपदर्शनप्रबुद्धसंस्कारः आलम्बनोद्दीपनविभावस्मरणात् प्रबुद्धरतिभाव आत्मगतमौत्सुक्यगर्भमाह द्वारकागतो भगवान् कृष्णः। स्मरतल्पस्य मदनशय्यायाः कल्पनार्थं मृदु सुकुमारं कृत्वा यश्छेदस्त्रोटनं स एवोपयोगः साफल्यम्। अथ च[7] स्मरतल्पे यत् कल्पनं क्लृप्तिः स एव मृदुः सुकुमार उत्कृष्टश्छेदोपयोगस्त्रोटनफलं तस्मिन् विच्छिन्ने। मय्यनासन्ने का स्मरतल्पकल्पनेति भावः। अत एव परस्पराऽनुरागनिश्चयगर्भमेवाह—ते जाने इति। वाक्यार्थस्यात्र कर्मत्वम्।

अधुना जरठीभवन्ति इति मयि तु सन्निहितेऽनवरतकथितोपयोगयोगान्नेमं जरा-

१. ण ग.॥ २. उल्वण॥ ३. स्त्री॥ ४. आदिग्रहणेन स्खलितस्खलितं गृह्यते॥
५. सन्देहे ग.॥
६. तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥ ख.॥
७. अथवा इत्यर्थः। चो वार्थे॥

जीर्णताखलीकारं कदाचिदाप्तवन्त इति भावः। अत एव विगलन्ती नीला त्विट् येषामित्यनेन कतिपयकालप्रोषितस्याऽप्यौत्सुक्यनिर्भरत्वं ध्वनितम्। एवमात्मगतमियमुक्तिः यदि वा गोपं प्रत्येव सम्प्रधारणोक्तिः। इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तुवृत्तान्तयोजना अस्त्येव।

अथ यत्र चेतनवस्तुवृत्तान्तयोजनाऽस्ति तत्र रसादिरलङ्कारः। तदेवं सत्युपमादयो निर्विषयाः[1] प्रविरलविषया वा स्युः। यस्मान्नास्त्येवाऽसावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो विभावत्वेन, तस्मादङ्गत्वेन रसादीनामलङ्कारता। यः पुनरङ्गी रसो भावो वा सर्वाकारमलङ्कार्यः[3] स ध्वनेरात्मा। न केवलं रसवदलङ्कारस्योपमादीनां चाकृतपूर्वो विषयविवेकः कृतः, यावद् गुणानामलङ्काराणां च क्रियत इत्याह—

"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥"

ये तमर्थं[4] रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः, शौर्यादिवत्। वाच्यवाचकलक्षणान्यङ्गानि ये पुनराश्रितास्तेऽलङ्कारा मन्तव्याः, कुण्डलादिवत्। तथा च

"शृङ्गार[6] एव मधुरः परः प्रह्लादनो रसः। तन्मयं[7] काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति[8]॥
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। माधुर्यमार्द्रतां[9] याति यतस्तत्राधिकं मनः॥
रौद्रादयो[10] रसा दीप्त्या लक्ष्यन्ते काव्यवर्त्तिनः। तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥"

रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां[11] जनयन्तीति लक्षणया[12] त एव [13]दीप्तिरित्युच्यन्ते। [14]तत्प्रकाशनपरः शब्दो दीर्घसमासरचनाऽलङ्कृतं वाक्यम्। यथा—चञ्चद्भुजभ्रमित[15]—इति। चञ्चद्भ्यां वेगावर्त्तमानाभ्यां भुजाभ्यां भ्रमिता या इयं चण्डा दारुणा गदा तया योऽभितः

१. निर्धारणेन पर्यालोचनेन वा॥ २ रत्यादिचित्तवृत्तिव्यञ्जकत्वेन। रत्यादिचित्तवृत्तिजनकत्वेन ख. टि.॥ ३. सर्वप्रकारं सर्वथेति॥ ४ 'तम्' इत्यत्र द्रष्टव्यम् ख.। यद्यपि श्यामत्वादयो गुणाः शरीरेऽपि सन्ति, तथापि न तद्गुणवति काव्यशरीरेऽलङ्काराणामपि समवायेनैव स्थितिरिति वक्तुं युक्तम्, एवं ह्यलङ्काराणामपि गुणत्वं स्यादिति यथोक्तरूप एव गुणालङ्कारप्रविवेकः। तथापि गुणवति काव्यशरीरे ग.। स्थितिरित्यलङ्काराणामपि ग.॥ ५. उत्तरार्द्धे दृष्टान्तस्य पर्यालोचनादध्याहृत्य व्याख्यातमिदम्॥ ६. अर्थात् सम्भोगः॥ ७ स शृङ्गार आत्मत्वेन प्रस्तुतो यत्र व्यङ्ग्यतया। व्यङ्ग्यतया तत् ग.॥ ८. प्रतिष्ठां लभते॥ ९. द्रुतिविस्तारविकाशकारिणो ह्यमी गुणाः ख.॥ १०. प्रकारार्थत्वेन वीराद्भुतौ॥ ११. विकाशविस्तरप्रज्वलनस्वभावामोजःशब्दवाच्याम्॥ १२ ओजसा रौद्रादयस्तैश्च स्वव्यक्तिहेतू शब्दार्थाविति लक्षितलक्षणा॥ १३. ओजः॥ १४. रौद्रादि॥ १५. चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥ ख.॥

सर्वत ऊर्वोर्घातस्तेन सम्यक् चूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलं युगपदेव ऊरुद्वयं यस्य। तं सुयोधनमनादृत्यैव स्त्यानेनावश्यानतया न तु कालान्तरशुष्कतयाऽवनद्धं हस्ताभ्यामविचलद्रूपमत्यन्तमाभ्यन्तरतया घनं न तु रसमात्रस्वभावं यच्छोणितं रुधिरं तेन शोणौ लोहितौ पाणी यस्य। अत एव स भीमः कातरत्रासदायी। तवेति यस्यास्तत्तदपमानजातं[1] देव्यनुचितमपि तस्यास्तव कचानुत्तंसयिष्यति उत्तंसवतः करिष्यतीति वेणीत्वमपहरन् करविच्युतशोणितशकलकैर्लोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा। तव देवीत्यनेन कुलकलत्रखलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति, नात्र शृङ्गारशङ्का कर्त्तव्या। सुयोधनस्य चानादरणं द्वितीयगदाघातदानाद्यनुद्यमः। स च सञ्चूर्णितोरुत्वादेव। **स्त्यान**ग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा सूचिता। समासेन च सन्ततवेगवहनस्वभावा तावत्येव मध्ये विश्रान्तिमलभमाना सञ्चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिरेकघनैव भवतीत्यौद्धत्यस्य परं परिपोषिका।

**अन्ये तु सुयोधनस्य**[2] सम्बन्धि यत्स्त्यानावनद्धं घनं शोणितं तेन शोणपाणिरिति व्याचक्षते। तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनप्रसन्नवाचकाभिधेयो यथा—यो यः शस्त्रं बिभर्तीति। स्वभुजयोर्गुरुर्मदो यस्य चमूनां मध्येऽर्जुनादिरित्यर्थः। **पञ्चाल**राजपुत्रेण **धृष्टद्युम्नेन द्रोणस्य** व्यापादनात् तत्कुलं प्रत्यधिकः क्रोधावेशोऽ**श्वत्थाम्नः**। तत्कर्मसाक्षी इति **कर्ण**प्रभृतिः। रणे सङ्ग्रामे कर्त्तव्ये यो मयि मद्विषयं प्रतीपं चरति समरविघ्नमाचरति, यदि वा मयि चरति सति सङ्ग्रामे यः प्रतीपं प्रतिकूलं कृत्वा आस्ते, स एवंविधो यदि सकलजगदन्तको भवति तस्याऽप्यहमन्तकः, किमुतान्यस्य मानुषस्य देवस्य वा। अत्र पृथग्भूतैरेव क्रमाद्विमृश्यमानैरर्थैः पदात् पदं क्रोधः परां धारां श्रित इत्यसमस्ततैव दीप्तिनिबन्धनम्। एवं माधुर्य-दीप्ती परस्परप्रतिद्वन्द्वितया स्थिते शृङ्गारादिरौद्रादिगते इति प्रदर्शयता तत्[3]समावेशवैचित्र्यं हास्य-भयानक-बीभत्स-शान्तेषु दर्शितम्। हास्यस्य शृङ्गाराङ्गतया माधुर्यं प्रकृष्टं विकाशधर्मतया चौजोऽपि प्रकृष्टमिति साम्यं द्वयोः। भयानकस्य मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्ततया ओजः प्रकृष्टं, माधुर्यमल्पम्। बीभत्सेऽप्येवम्। शान्ते तु विभाववैचित्र्यात् कदाचिदोजः प्रकृष्टं कदाचिन्माधुर्यमिति विभागः।

"समर्पकत्वं काव्यस्य[4] यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्व[5]साधारणक्रियः।"

---

१. 'कृतम्' इति ख. ग. पुस्तकयोरधिकम्॥ २. अन्ये त्वसुयो–क.॥ ३. माधुर्यदीप्त्योः॥ ४. मुख्यवृत्त्या प्रसादो रसाश्रय इत्यपेक्ष्यम् उपचारात्तु शब्दार्थधर्मः॥ ५ समासातिसमाससमध्यमसमासः॥

एवमस्मत्पक्ष एव गुणालङ्कारव्यवहारो विभागेनोपपद्यत इति प्रदर्श्य नित्यानित्यदोषविभागोऽप्यस्मत्पक्ष एव सङ्गच्छत इति दर्शयितुमाह

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥"

शृङ्गारे इति उचितरसोपलक्षणार्थम् । वीरशान्ताद्भुतादावपि तेषां वर्जनात् । एवमयमलक्ष्यक्रमोद्द्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन ।

"तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसंबन्धपरिकल्पने ॥"

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयः, ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणाः विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्तस्वाश्रयापेक्षया निःसीमानो विशेषास्तेषामन्योन्यसम्बन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्याऽपि रसस्य प्रकाराः परिसङ्ख्यातुं न शक्यन्ते किमुत सर्वेषाम् । तथाहि—शृङ्गारस्यैवाङ्गिनस्तावदाद्यौ द्वौ भेदौ—सम्भोगो विप्रलम्भश्च । सम्भोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः । विप्रलम्भस्याऽपि अभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः[२] । तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदाः । तेषां च देशकालाश्रयावस्थाभेद इति स्वगतभेदापेक्षयैव तस्याऽपरिमेयत्वं, किं पुनरङ्गप्रभेदकलनया । ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति ।

"दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादिताऽऽलोका सर्वत्रैव भविष्यति ॥"

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्राऽपि रसप्रभेदे सहालङ्कारैरङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति । तत्र

"शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान् ।
सर्वेष्वेव प्रभेदेषु नाऽनुप्रासः प्रकाशकः ॥"

---

१. गुणालङ्कारविवेके एवेदं साधनम् । तथाहि यत्रैव दोषास्तत्रैव गुणाः । रसविशेषे च दोषाः । ननु शब्दार्थयोः स्वरूपे यदि हि तयो स्युस्तद् बीभत्सादौ पारुष्यादयो गुणा न भवेयुर्हास्यादौ चाऽसभ्यस्मृतिहेतुत्वादयः । अनित्याश्चैते दोषा उक्तास्ततो यस्याङ्गिनस्ते दोषाः, तदभावे न दोषास्तद्भावे तु दोषा इति दोषैर्गुणैश्चान्वयव्यतिरेकाभ्यां रसविशेष एवाश्रयोऽधिगम्यते ।
२. आदिशब्देन शापविप्रलम्भः ॥

एकरूप इति । एकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तो न त्वेकरूपमनुबन्धं त्यक्त्वा विचित्रो दोषायेत्यर्थः । अङ्गभूतस्य तु शृङ्गारस्य एकरूपानुबन्ध्यनुप्रासनिबन्धने कामचार एवेति ।

"ध्वन्यात्मभूते शृङ्गारे[1] यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥"

प्रमादित्वमित्यनेनैतद्दर्श्यते-काकतालीयेन कदाचित् कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नाऽलङ्कारान्तरवत् रसाङ्गत्वेन निबन्धो न कर्त्तव्य इति । विप्रलम्भे इति । सौकुमार्यातिशययोगाद्यमकनिबन्धो विप्रलम्भे नियमान्न कर्त्तव्यः । तत्र युक्तिरभिधीयते

"रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥"

यथा कपोले[2] पत्रालीति । करकिशलयन्यस्तवदना श्वासतान्ताधरा प्रवर्त्तमानबाष्पभरनिरुद्धकण्ठी विच्छिन्नविच्छिन्नरुदितचञ्चलकुचतटा रोषमपरित्यजन्ती चाटूक्त्या यावत् प्रसाद्यते तावदीर्ष्याविप्रलम्भगताऽनुभावचर्वणावहितचेतस एव वक्तुः श्लेषरूपकव्यतिरेकाद्या अयत्ननिष्पाद्याश्चर्वयितुरपि न रसचर्वणाविघ्नमादधतीति ।

"रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते ।
शक्तस्याऽपि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते ।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते ॥"

इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते । ध्वन्यात्मभूते शृङ्गारे इति, विवक्षा तत्परत्वेनेति, निर्व्यूढावपि[3] चेत्येतत्कारिकात्रयं सोदाहरणं कल्पपल्लवे

---

१. रसोपलक्षणपरः ॥

२. कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ख. ॥

३. नात्रातिशयवद्दौन्मुख्यं येन प्रतिपत्तॄणां वैरस्यं संपतेत् । -दौन्मुख्यं प्रतिपत्तॄणां येन वैरस्यमापतेत् ग. ॥ निर्व्यूढामपि ख. ॥

विभूषणाख्ये लक्षणे प्रपञ्चितम् । एवं विवक्षिताऽन्यपरवाच्यस्य ध्वनेः प्रथमं भेदमलक्ष्यक्रमं विचार्य द्वितीयं भेदं विभक्तुमाह

"क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः ।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः ॥"

ननु शब्दशक्त्या यत्राऽर्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते, तदिदानीं श्लेषस्य विषय एवापहृतः स्यात् । नापहृत इत्याह

"आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥"

यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितः । वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः । यथा—येन ध्वस्तमनोभवेनेति । अत्र वस्तुमात्रं द्वितीयं प्रतीतं नालङ्कार इति श्लेषस्यैष विषयः । नन्व-लङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेश एवेति प्रदर्शितं भट्टोद्भटेन । तत्पुनरपि शब्दशक्ति-मूलो ध्वनिरनवकाश इत्याशङ्क्येदमुक्तमाक्षिप्त इति । तदयमर्थः । यत्र शब्दशक्त्या साक्षा-दलङ्कारान्तरं वाच्यं सत्प्रतिभासते स सर्वः श्लेषः । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः ।

शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—तस्या विनाऽपि हारेणेति । विना-ऽपीत्यपिशब्दोऽयं विरोधमाचक्षाणोऽर्थद्वयेऽप्यभिधाशक्तिं नियच्छतीति । हरतो हृदयम-वश्यमिति हारिणौ, हारो विद्यते ययोस्तौ हारिणाविति । अत एव विस्मयशब्दोऽस्यैवार्थ-स्योपोद्बलकः । अपिशब्दाभावे तु न तत एवार्थद्वयाभिधा स्यात् । स्वसौन्दर्यादेव स्तनयो-र्विस्मयहेतुत्वोपपत्तेः । अत्र साक्षाद्विरोधालङ्कारः प्रतिभातीति विरोधच्छायाऽनुग्राहिणः श्लेष-स्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः । अलक्ष्यक्रमप्रतिभस्य तु ध्वनेर्वाच्येन

---

१. विवक्षितास्वपरस्य वाच्यस्यास्य ख. विवक्षितान्यपरवाच्यस्य ध्वनेः ग. ॥ २ शब्दशक्ति-मूलोऽर्थशक्तिमूलश्च ॥ ३. भट्टोद्भट्टेन ख. ॥

४. तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥ ख. ॥

५. नियन्त्रयति ख. ॥    ६. विस्मयशब्दात् क. । हारिणौ इति पदात् ख. ।

विरोधच्छायानुग्राहिणा श्लेषेण व्यञ्जितस्य विषय एवायम् । यथा वा-श्लाघ्याशेषतनुमिति[1] । अत्र स्वतनोरधिकामितिशब्देन व्यतिरेकस्योक्तत्वाद्वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः । यथा च–भ्रमिमरतिमिति[2] । अत्र रूपकच्छायाऽनुग्राही श्लेषो वाच्यतयैवावभासते । भुजगशब्दार्थपर्यालोचनाबलादेव विषशब्दो जलमभिधायाऽपि न विरन्तुमुत्सहते अपि तु द्वितीयमर्थं हालाहललक्षणमाह । तदभिधानेन विनाऽभिधाया एवाऽसमाप्तत्वात् । भ्रमिप्रभृतीनां तु मरणान्तानां साधारण एवार्थः । यथा वा

चमढियमाणसकंचणपंकयणिम्महियपरिमला जस्स ।
अक्खुडियदाणपसरा बाहुप्फलिह च्चिय गइंदा ॥

अत्राऽपि रूपकच्छायाऽनुग्राही श्लेषस्तथैव । निराशीकृतत्वेन खण्डितानि यानि मानसानि शत्रुहृदयानि तान्येव काञ्चनपङ्कजानि ससारत्वात्तैर्हेतुभूतैः णिम्महियपरिमला इति प्रसृतप्रतापसारा अखण्डितविश्राणनप्रसरा बाहुपरिघा एव यस्य गजेन्द्रा इति । गजेन्द्रशब्दवशाच्चमढियशब्दः परिमलशब्दो दानशब्दश्च त्रोटन-सौरभ-मदलक्षणानर्थान् प्रतिपाद्याऽपि न परिसमाप्ताऽभिधाव्यापारा भवन्तीति उक्तरूपं द्वितीयमप्यर्थमभिदधत्येव ।

एवमाक्षिप्तशब्दस्य व्यवच्छेद्यं प्रदर्श्य एवकारस्य व्यवच्छेद्यं प्रदर्श्यते । स चाक्षिप्तोऽप्यलङ्कारो यत्र पुनः शब्दान्तरेणाऽभिहितस्वरूपस्तत्र न शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः, किन्तु वाच्यश्लेषालङ्कारव्यवहार एव । अयमर्थः–उभयार्थप्रतिपादनशक्तशब्दप्रयोगे यत्र तावदेकतरविषयनियमनकारणमभिधाया नास्ति, यथा–येन ध्वस्तमनोभवेनेति । यत्र वा प्रत्युत द्वितीयाभिधाव्यापारसद्भावावेदकं प्रमाणमस्ति । यथा तस्या विनाऽपीत्यादौ चमढिय इत्यन्ते । तत्र तावत् सर्वथा सोऽर्थोऽभिधेयः[4] इति स्फुटमदः । यत्राऽप्यभिधाया एकतरत्र नियमहेतुः प्रकरणादिर्विद्यते तेन [ येन ? ] द्वितीयस्मिन्नर्थे नाभिधा सङ्क्रामति । तत्र द्वितीयोऽर्थोऽसावाक्षिप्त इत्युच्यते । तत्राऽपि यदि पुनस्तादृक् शब्दो विद्यते येनाऽसौ नियामकः प्रकरणादिरपहतशक्तिकः सम्पाद्यते । अत एव साऽभिधाशक्तिर्बाधिताऽपि सती प्रतिप्रसूते च । तत्रापि न ध्वनेर्विषय इति । यथा–दृष्ट्या केशवगोपरागहृतयेति । अत्र

---

१ श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ ख. ॥

२ भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ ख. ॥

३. विरोधव्यतिरेकरूपकप्रकरणलक्षणम् ॥ ४. –धेय एवेति ख ॥

सर्वेषामसमर्थानां त्वमेको गतिरित्येवंविधेऽर्थे यद्यप्येते प्रकरणेन नियन्त्रिताऽभिधाशक्तयः शब्दास्तथाऽपि सा सर्वासां नारीणां त्वमेव गतिरिति द्वितीयेऽर्थेऽभिधाशक्तिर्निरुद्धाऽपि सती सलेशमित्यनेन शब्देन प्रत्युज्जीविता ।

एवंजातीयकः सर्व एव भवतु कामं वाच्यश्लेषविषयः । यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः । यथा—अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माऽभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः । कुसुमसमयात्मकं यद् युगं मासद्वयं तदुपसंहरन् । धवलानि हर्म्याणि अट्टानि आपणा येन तादृक् । फुल्लमल्लिकानां हासो विकासेन सितिमा यत्र । फुल्लमल्लिका एव धवलोऽट्टहासोऽस्येति तु व्याख्याने जलदभुजगजमित्येतत्तुल्यमेतत् स्यात् । महांश्चासौ दिनदैर्घ्यदुरतिवाहतायोगात् कालः समयः । अत्र ऋतुवर्णनप्रस्तावनियन्त्रिताऽभिधानशक्तयोऽत एवाऽवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एकमेवाऽर्थमभिधाय कृतकृत्या एव । तदनन्तरं त्वर्थान्तरावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् । यथा च—उन्नतः प्रोल्लसद्धार इति । यथा वा

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

पयोभिः पानीयैः क्षीरैश्च, संहारो ध्वंसः एकत्र ढौकनमपरत्र, गावो रश्मयः सुरभय इव । एतेषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्याऽसम्बद्धाऽभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरर्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्यत्रार्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः ।

अन्येऽपि चाऽलङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव । तथा हि—विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यत एव । यथा—मातङ्गगामिन्य इति । अत्र हि

१ एकत्रानियमिताऽभिधार्थद्वयप्रत्युतप्रमाणोल्लिखितद्वितीयार्थतादृक्शब्दप्रतिप्रसूताभिधापरार्थ—काव्यलक्षणः ॥ २. कुसुमवत् कालरूपं कृतयुगादि च ख. ॥ ३. फुल्लमल्लिकानां धवलोऽट्टहासो यस्य च । ख. ॥ ४. फुल्लमल्लिकावत् धवलोऽट्टहासो यस्य च । ख. ॥ ५. भैरवश्च । ६. अत्र प्रावृट् प्रकृता ॥ ७. पराभिप्रायेण ॥ उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥ ख. ॥

८. [ टिप्पणी नोपलब्धा ] ॥

वाच्यो विरोध इति तच्छायानुग्राही श्लेषोऽयमिति न शक्यं वक्तुम् । साक्षाच्छब्देन विरोधालङ्कारस्याऽप्रकाशितत्वात् । यदि चात्र धर्मद्वये यश्चकारः स विरोधद्योतक एव अन्यथा प्रतिधर्मं सर्वधर्मान्ते वा न क्वचिद्वा चकारः स्याद् । यदि समुच्चयार्थः स्यादित्युच्यते तदेवमुदाहरणम्-- सर्वैकशरणमिति । अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते । एवंविधो व्यतिरेकोऽपि दृश्यते । यथा

खं येऽभ्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्द्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रियै सन्तु वः ॥

नखैरुद्भासन्तेऽवश्यं, खे च गगने न उद्भासन्ते । क्षितिभृतां राज्ञामपि । उभये इति रश्म्यात्मानोऽङ्गुलीपार्ष्ण्याद्यवयविरूपाश्चेत्यर्थः ।

एवंविधाऽप्रस्तुतप्रशंसाऽपि दृश्यते । यथा

सरसं मउयसहावं विमलगुणं मित्तसंगमोल्लसियं ।
कमलं णट्ठच्छायं कुणन्त दोसायर णमो ए ॥

एतत् केनचिच्चन्द्रमेवोद्दिश्योच्यते । कमलप्रख्यस्य महापुरुषस्य श्रियं नाशितवन्तं कञ्चन श्रीजुषं प्रति त्वप्रस्तुतप्रशंसा व्यङ्ग्येति ।

अर्थान्तरन्यासोऽपि । यथा

देव्वाअत्तम्मि फले किं कीरउ इत्तियं पुण भणामि ।
कंकेलिपल्लवा पल्लवाग अण्णाण ण सरिच्छा ॥

अशोकस्य फलमाम्रादिवन्नास्ति किं क्रियतां, पल्लवास्त्वतीव हृद्या इतीयताभिधा समाप्तैव । फलशब्दस्य शक्तिबलात् समर्थकमस्य वस्तुनः पूर्वमेव प्रतीयते । लोकोत्तरजिगीषातदुपायप्रवृत्तस्याऽपि फलं सम्पल्लक्षणं दैवायत्तं कदाचिन्न भवेदपीत्येवंरूपं सामान्यात्मकम् । नन्वत्र सकलवाक्यस्याप्रस्तुतप्रशंसा प्राधान्येन व्यङ्ग्या । तत्कथमर्थान्तरन्यासस्य व्यङ्ग्यता । द्वयोर्युगपदेकत्र प्राधान्यायोगात् । मैवम् । सर्वो हि ध्वनिप्रपञ्चः

---

१. सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥ ख. ॥

२. सादृश्यादेव विवक्षितं श्रीजुषं कञ्चिदाक्षिपतश्चन्द्रमसोऽप्रस्तुतत्वेन प्रशंसनं व्यङ्ग्यमित्यर्थः । ख. ॥

३. फल ।

पदप्रकाशो वाक्यप्रकाशश्चेति वक्ष्यते। तत्र फलपदेऽर्थान्तरन्यासध्वनिः प्राधान्येन, वाक्ये त्वप्रस्तुतप्रशंसा। तत्राऽपि पुनः फलपदोपात्तसमर्थ्यसमर्थकभावप्राधान्यमेव भातीत्यर्थान्तरन्यासध्वनिरेवायमिति भावः। एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपा अलङ्कारध्वनिप्रकाराः सन्ति ते स्वयं सहृदयैरनुसर्त्तव्याः। इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः।

किञ्च

वस्तुमात्रमपि व्यङ्ग्यं शब्दशक्त्या प्रधानतः।
शब्दशक्त्युद्भवस्याऽस्य ध्वनेः स्याद्गोचरः क्वचित्॥

वस्तुमात्रमपीति। यद्वस्तुमात्रं प्रतीयमानमस्य ध्वनेरप्रयोजकमुक्तं तदपीत्यर्थः। क्वचिदिति वस्तुमात्रप्रतीतौ यत्र श्लेषव्यपदेशस्तद्व्यतिरिक्तोऽस्य विषय इत्यर्थः। यथा

पंथिय! न एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।
उग्गयपओहरं पेक्खिऊण जइ वससि ता वससु॥
पथिक! नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे।
उद्गतपयोधरं प्रेक्ष्य यदि वससि तद्वस॥ [छाया]

संस्तरस्तृणादिशय्या। प्रस्तराः पाषाणाः। एवमपि चेन्मेघभयं तद्वस। व्यङ्ग्यं तु प्रहरचतुष्टयमप्युपभोगेन नाऽत्र निद्रां कर्त्तुं लभ्यते। सर्वे ह्यत्राऽविदग्धाः। तदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदाऽऽस्स्वेति। अत्र वाच्यबाधेन व्यङ्ग्यस्य स्थितत्वात्तयोर्नोपमानोपमेयभावः।

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते।
यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः॥

यथा—एवंवादिनि देवर्षाविति। अत्र हि लीलाकमलपत्रगणनमधोमुखत्वं चेत्यनुभावरूपो देवर्षेर्वरकथाकरणं पितृपार्श्ववर्त्तनं चेति विभावरूपश्चार्थ उपसर्जनीकृतस्वरूपः शब्दव्यापारं विनैव लज्जालक्षणं व्यभिचारिणं गमयति। न चाऽयमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः, यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावेभ्यस्तत्सामर्थ्यादेव व्यवधिवन्ध्यतयैव प्रतीयमानेभ्यो व्यभिचारिभ्यश्च रसादीनां प्रतीतिः स तस्य केवलस्य मार्गः। यथा

निर्वाणभूयिष्ठमथाऽस्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या॥

इत्यादौ सम्पूर्णाऽऽलम्बनोद्दीपनविभावतायोग्यस्वभाववर्णनम्।

---

१. वाच्यः। २ शब्दव्यापारं विना। ३ निर्वाणप्रायम्॥ ४. शम्भोः॥ ५. अशोकनिर्भर्त्सितेति स्रस्तां नितम्बादित्यादौ विभावस्वभाव आलम्बनरूपः उमापि नीलालकेति अथोपनिन्ये इति चोद्दीपनरूपः॥

प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥

इत्यनेन विभावतयोपयोग उक्तः ।

हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरौष्ठे व्यापारयामास विलोचनानि ॥

अत्र हि भगवत्याः पूर्वमेव तत्प्रवणत्वात्[1] तस्य चेदानीं तदुन्मुखीभूतत्वात्[2] प्रणयिप्रियतया च पक्षपातस्य सूचितस्य गाढीभावाद्रत्यात्मनः स्थायिभावस्यौत्सुक्यावेगचापलहर्षादेश्च व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशित इति विभावाऽनुभावचर्वणैव व्यभिचारिचर्वणायां पर्यवस्यन्ती व्यभिचारिणां पारतन्त्र्यादेव स्रक्सूत्रकल्पस्थायिचर्वणाविश्रान्तेरलक्ष्यक्रमत्वम् । इह तु पद्मदलगणनमधोमुखत्वं चाऽन्यथाऽपि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां विश्रमयति हृदयमपि तु प्राक् प्रवृत्ततपश्चर्यादि वृत्तान्तानुसरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव । रसस्त्वत्रादूर एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षतयाऽलक्ष्यक्रमतैव । भावापेक्षया तु नाऽत्राऽलक्ष्यक्रमत्वम् । यत्र तु शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नाऽस्य लक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्विषयः । अलक्ष्यक्रमव्यङ्ग्यस्तु तत्राऽपि स्यात् । यथा सङ्केतकालमनसमिति । अत्र हि आद्यपादत्रयेणोक्त्यैव लीलाकमलनिमीलनस्य प्रदोषसमयं प्रति व्यञ्जकत्वमुक्तम् । यद्यपि चात्र प्रदोषार्थं प्रति न कस्यचिदभिधाशक्तिः पदस्य, तथाऽपि पादत्रयेण योऽर्थोऽभिहितः सोऽर्थान्तरस्यानऽतिदूरवर्त्तित्वेनाऽतीव प्रकाशक इति ध्वनेर्यद्दोप्यमानतोदितचारुत्वात्मकं प्राणितं तदपहस्तयतीत्यर्थः । यत्राऽप्ययमर्थशक्त्युद्भवः प्रकाशितोऽपि शब्दान्तरेण पुनरभिहितस्वरूपस्तत्राऽन्यैवाऽलङ्कृतिरिति दर्शयन्नाक्षिप्त एवेत्येवकार[3]व्यवच्छेद्यस्य शब्दशक्त्युद्भवोक्तस्योपसंहारं तृतीयप्रकारसूचनं चैकेन यत्नेन करोति ।

[4]शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राऽऽविष्क्रियते स्वोक्त्यासाऽन्यैवाऽलङ्कृतिर्ध्वनेः ॥

शब्दश्चार्थश्च शब्दार्थौ चेत्येकशेषस्तेन शब्दशक्त्याऽर्थशक्त्या शब्दार्थशक्त्या वाऽऽक्षिप्तो[5]ऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनुस्वानोपमव्यङ्ग्याख्याद् ध्वनेरन्य एवालङ्कारः श्लेषादिः । अथवा ध्वनिशब्देनाऽलक्ष्यक्रमस्तस्याऽलङ्कार्यस्याऽङ्गिनः सति सम्भवे स व्यङ्ग्योऽर्थोऽन्यो वाच्यमात्रालङ्काराऽपेक्षया द्वितीयो लोकोत्तरश्चालङ्कार इत्यर्थः । तत्र शब्दशक्त्या यथा

---

१. ईश्वर ॥ २. गौरी ॥ ३. – कारस्य ग. ॥ ४. शब्देत्यक्षरद्वयं निबध्नन् ॥ ५. – क्षिप्तो व्यङ्ग्योऽर्थः ग. ॥

वत्से ! मा गा विषादं श्वसनमुरुजवं संत्यजोद्र्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनाऽत्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः ॥

विषमत्तीति विषादः । ऊद्र्ध्वप्रवृत्तमग्निमित्यत्र चार्थो मन्तव्यः । कम्पः अपांपतिः।[1] को ब्रह्मा वा तव गुरुः । बलभिदा इन्द्रेण जृम्भितेनैश्वर्यमदमत्तेनेत्यर्थः । जृम्भितं च गात्रमर्द्दनात्मकं बलं भिनत्त्यायासकारित्वात् । प्रत्याख्यानमिति वचसैव द्वितीयोऽर्थोऽत्राऽभिधीयत इति श्लेषस्यैवाऽयं विषयः । कारयित्वेति । सा हि कमला पुण्डरीकाक्षमेव हृदये निधायोत्थितेति स्वयमेव देवान्तराणां प्रत्याख्यानं करोति । स्वभावसुकुमारतया तु मन्दरान्दोलितजलधितरङ्गभङ्गपर्याकुलीकृता तेन[2] प्रतिबोधनया तत्समर्थाचरणम्, अन्यत्र दोषोद्घट्टनेन । अत्र याहीति चाऽभिनयविशेषेण सकलगुणादरदर्शकेन कृतमत एव मन्थमूढामित्याह । इत्युक्तेन प्रकारेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं लक्ष्मीं मन्थमूढां कारयित्वा पयोधिर्यस्मै तामदात् स वो युष्माकं दुरितं दहत्विति सम्बन्धः ।

अर्थशक्त्या यथा

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र ।
अस्मिन् पापाऽहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

अत्र श्लेषपदाभावाच्छब्दशक्तिमूलता नास्ति, केवलमर्थसामर्थ्याद्व्यङ्ग्यार्थः प्रकाशितः स्वोक्त्या पुनः प्रकटीकृतः । तथा हि—प्रोषितपतिका समभिलषितगृहप्राप्तपान्थसमागमा तद्विघ्ननिवारणं शय्याविभागप्रदर्शनेनेत्थं विहितवती काचित् । अत्राऽवकाशे वृद्धा गतवयाः कृच्छ्रावबोधाऽम्बा शेते स्वपिति, ततोऽपि वर्षीयानत्र तात इति ततस्तावन्मा भैषीरित्यभिप्रायः सम्प्रति ध्वन्यमानः । इयमपि कुम्भदासी घटहारिणी कदाचिदवबुद्धा भवेदिति न शङ्कनीयम्, यतः सकलगृहव्यापारनिर्वर्त्तनवशोपजातखेदा निःसहस्रस्ततनुलता गाढतरनिद्राक्रान्तहृदया मूढैवास्मिन्नवकाशे स्वपिति । अस्मिन् पुनर्विविक्तेऽवकाशे पापा सम्भोगसुखासम्पत्त्या मन्दभाग्या स्वल्पदिनान्तरालदेशान्तरप्रगतवल्लभाऽसम्भाव्यतदागमनाशङ्का स्वपिमीति गर्भीकृतविवक्षितार्थवाच्यविश्रान्तावपि व्यङ्ग्योऽर्थः प्रकरणादिसामग्रीसचिवै[4]र्वाच्यव्यापारबललब्धप्रतिष्ठोऽवसरव्याहृतिव्याजपूर्वमित्यनेन शब्देनाऽभिधा-

१. वरुणः ॥ २. ततः ख. ॥ ३. विपरीतलक्षणायाम् ॥ ४. सहाय ख ॥

वशीकृतो म्लानिमापादित इति न ध्वनिविषयतामवलम्बते । [1]वक्रोक्तिरूपवाच्याऽलङ्कारसर[2]णिमेवाऽनुधावति ।

उभयशक्त्या यथा–दृष्ट्या केशवगोपेति । अत्र शब्दशक्तिर्गोपरागादिशब्दश्लेषवशात् । अर्थशक्तिस्तु प्रकरणवशात् । यावदत्र राधारमणस्याऽखिलतरुणीजनच्छन्नानुरागगरिमास्पदत्वं न विदितं तावदर्थान्तरस्याऽप्रतीतेः सलेशमिति चाऽत्र स्वोक्तिः । अत एव चाऽयं श्लेषस्यैव विषयो नोभयशक्तिमूलस्य ध्वनेः । अनेन च विषयविवेकेनैतज्ज्ञाप्यते–उक्तेन प्रकारद्वयेन तृतीयोऽपि प्रकारो मन्तव्यः, यत्र हि व्यङ्ग्योऽर्थः शब्दार्थशक्त्या प्रकाश्यत एव, न शब्दान्तरेण पुनरभिधीयते तत्रोभयशक्तिमूलो ध्वनिरिति । यथा

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

चन्द्रः कर्पूरमपि, समुत् सहर्षा, तारकाभ्यां कनीनिकाभ्यामपि, श्यामा रात्रिः कान्ता च । अत्र हि अतन्द्रचन्द्रेति तारकेति च शब्दशक्तिः, समुद्दीपितेति सानन्दमिति चार्थशक्तिश्च व्यञ्जिका । व्यङ्ग्या चाऽप्राकरणिकेन पुरन्ध्रिलक्षणेनार्थेनोपमेति ।

एवमर्थशक्त्युद्भवस्य सामान्यलक्षणं कृतं, श्लेषाद्यलङ्कारेभ्यश्चास्य विभक्तो विषय उक्तः। अधुनाऽस्य प्रभेदनिरूपणं करोति

प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्याऽपि द्वौ प्रकारौ। तत्राऽऽद्यो द्विविधः । कविप्रौढोक्तिमात्रनिष्पन्नशरीरः कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरश्च । तत्राद्यो यथा

सज्जेइ सुरहिमासो ण या पणामेइ जुअइअणलक्खसहे ।
अहिणवसहयारमुहे णवपल्लवपत्तले अणंगस्स सरे ॥

सज्जयति सुरभिमासो न तावत् प्रणामयति अर्पयति युवतिजनल[3]क्ष्यसहान् ।
अभिनवसहकारमुखानभिनवसहकारादिकलिकारूपान्नवपल्लवपत्रलाननङ्गाय शरान् ॥
[ छाया ]

अत्र वसन्तश्चेतनोऽनङ्गस्य सखा सज्जयति केवलं न तावदर्पयति इत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ताऽतोऽनर्पितेष्वपि

१. विचित्राक्तिसामान्यलक्षणमिदम् ॥ २. रुद्रटेन हि वक्रोक्तेरस्या भावालङ्कार इति व्यपदेशः कृतः, ॥ भामहेन तु विशेषव्यपदेशो न विहित इति सरणिमित्युक्तम् ॥ ३. वेध्यम् ॥

शरेषु ययैवं मन्मथः प्रतपति, तदर्पितेषु कियद्विजृम्भिष्यत इति मन्मथोन्माथकेस्याऽऽरम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति । अन्यथा वसन्ते सपल्लवसहकारोद्गम इति वस्तुमात्रं न व्यञ्जकं स्यात् । एषा च कवेरेवोक्तिः प्रौढा । द्वितीयो यथा—शिखरिणीत्यादि । लोहितं बिम्बफलमयं शुको दशतीति न व्यञ्जकता काचित् । यदा तु कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तुरित्थं प्रौढोक्तिस्ततो व्यञ्जकत्वम् । यथा वा

सायरविइण्णजुव्वणहॅत्थालम्बं समुण्णमंतेहिं ।
अब्भुट्ठाणं पि व वम्महस्स दिण्णं तुह थणेहिं ॥

स्तनौ तावदिह प्रधानभूतौ, ततोऽपि गौरवितः कामस्ताभ्यामभ्युत्थानेनोपचर्यते । यौवनं चाँऽनयोः परिचारकभावेन स्थितमित्येवंविधेनोक्तिवैचित्र्येण त्वदीयस्तनावलोकनप्रवृद्धमन्मथावस्थः को न भवतीति भङ्ग्या स्वाभिप्रायध्वननं कृतम् । तव तारुण्येनोन्नतौ स्तनाविति हि वचने न व्यञ्जकता । स्वतःसम्भवी य औचित्येन बहिरँपि सम्भाव्यमानसद्भावः, न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः । यथोदाहृतम्—एवंवादिनि देवर्षाविति ।

यथा वा

सिहिपिंछकण्णऊरा जाया वाहस्स गव्विरी भमइ ।
मुत्ताहलरइअपसाहणाण मज्झे सवत्तीण ॥

शिखिमात्रमारणमेव तदासक्तस्य कृत्यम् । अन्यास्तु त्वासक्तो हस्तिनोऽप्यमारयदिति बहुवचनेनोक्तमुत्तमं सौभाग्यम् । रचितानि विविधभङ्गीभिः प्रसाधनानीति तासां सम्भोगव्यग्रिमाभावात् तद्विरचनशिल्पकौशलमेव परमिति दौर्भाग्यातिशय इति दर्शितम् । गर्वश्च बाल्याऽविवेकादिनाऽपि भवतीति नाऽत्र स्वोक्तिसद्भावः शङ्क्यः । एष चार्थो यथा यथा वर्ण्यते, आस्तां वा वर्णना, बहिरपि यदि प्रत्यक्षादिनाऽवलोक्यते तथा तथा सौभाग्यातिशयं व्याधवध्वा द्योतयति । एवमर्थशक्त्युद्भवस्त्रिभेदो वस्तुमात्रस्य व्यञ्जनीयत्वे वस्तुध्वनिरूपतया निरूपितः । इदानीं तु तस्यैवालङ्काररूपे व्यञ्जनीयेऽलङ्कारध्वनित्वमपि भवतीत्याह

"अर्थशक्तेरलङ्कारो यत्राऽप्यन्यः प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥"

वाच्यालङ्कारव्यतिरिक्तो यत्राऽन्योऽलङ्कारो विचित्राविचित्रार्थसामर्थ्यात् प्रतीय-

१. स्वार्थे कः । २. सादरं वितीर्णो हस्तावलम्बो यत्रोन्नमने । ३. स्तनयोः । ४. लोकवृत्ते ख. । ५. न केवलं शब्दशक्तेरर्थशक्तेरपि, यदि वा न केवलं वस्तुमात्रमलङ्कारोऽपि ।

मानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुरणनरूपव्यङ्ग्योऽन्यो ध्वनिः । तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते

" रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः ।
स सर्वो गम्यमानत्वं बिभ्रद्भूम्ना प्रदर्शितः ॥ "

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारवर्गः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भि**र्भट्टोद्भटा**दिभिः । तथा च ससन्देहादिषूपमारूपकातिशयोक्त्यादीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरेग व्यङ्ग्यत्वं यत्र न यत्नप्रतिपाद्यं तत्र वस्तुमात्रेणाऽलङ्कारो ध्वन्यत इति कियदिदमसम्भाव्यम् । इयत् पुनरुक्तमुच्यते[1] च

" अलङ्कारान्तरस्याऽपि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥ "

अलङ्कारान्तरेऽनुरणनरूपालङ्कारान्तरप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नाऽसौ ध्वनेर्मार्गः । तथा च दीपकाऽलङ्कारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याऽव्यवस्थानान्न ध्वनिव्यपदेशः । तथा हि–चंदमयूहेहिं[2] गिसेनि । एवमादिषूपमागर्भत्वे सत्यपि वाच्यालङ्कारमुखेनैव चारुत्वं व्यवतिष्ठते, न व्यङ्ग्यालङ्कारतात्पर्येग । तस्मात् तत्र वाच्याऽलङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः ।

यत्र तु व्यङ्ग्यपरत्वेनैव काव्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः । तथा च– प्रांतश्रीरेष[3] कस्मादिति । अत्र ससन्देहोत्प्रेक्षयोः सङ्करात्सङ्करालङ्कारो वाच्यः । तेन च वासुदेवरूपता नृपतेर्ध्वन्यते । न च ससन्देहोत्प्रेक्षा[4]ऽनुपपत्तिबलाद्रूपकस्याऽऽक्षेपो येन वाच्यालङ्कारोपस्कारकत्वं व्यङ्ग्यस्य भवेत् । यो योऽसम्प्राप्तलक्ष्मीको निर्व्याजजिगीषाक्रान्तः स स मां मथ्नीयादित्याद्यर्थसम्भावनात् । न च पुनरपीति पूर्वामिति भूय इति च शब्दैरयमाकृष्टोऽर्थः । पुनरर्थस्य भूयोऽर्थस्य च कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः । यथा–पृथ्वी पूर्वं कार्त्तवीर्येण जिता पुनरपि जामदग्न्येनेति ।

---

१. उपसर्जनीकृतस्वार्थावित्यनेन क. । यत्रार्थः शब्दो वेत्यस्यां कारिकायां उपसर्जनीकृत– ग ॥

२ चंदमयूहेहिं णिसा णलिणी कमलेहिं कुसुमगुच्छेहिं लया ।
हंसेहिं सरयसोहा कव्वकहा सज्जणेहिं कीरए गरुई ॥ ख. ॥ चंदमयूएहिं ग ॥

३ प्राप्तश्रीरेष कस्मात्पुनरपि नियतं मन्थखेदं विदध्यात्
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः पुनरपि सकलद्वीपनाथानुयातः
त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥ ख ॥

४. सन्देहोत्प्रेक्षा ग ।

पूर्वा च निद्रा राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवाऽयमिति, शब्दव्यापारं विनैवाऽर्थसौन्दर्यबलाद्रूपणाप्रतिपत्तेः। यथा च— लावण्यकान्तिपरिपूरितेति। अत्राऽपि वाच्येन श्लेषेण रूपकं ध्वन्यत इत्यनुरणनरूपरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद्रूपकध्वनिरिति व्यपदेशो न्याय्यः।

उपमाध्वनिर्यथा

वीराण रमइ घुसिणारुणम्मि ण तहा पियाथणुच्छंगे।
दिट्ठी रिउगयकुंभत्थलम्मि जह बहलसिंदूरे॥

प्रसाधितप्रियतमासमाश्वसनपरतया समनन्तरीभूतयुद्धत्वरितमनस्कतया च दोलायमानदृष्टित्वेऽपि युद्धे त्वरातिशय इति व्यतिरेको वाच्यालङ्कारः। तत्र तु येयं ध्वन्यमाना उपमा प्रियाकुचकुड्मलाभ्यां सकलजनत्रासकरेष्वपि शात्रवेषु मर्दनोद्यतेषु गजकुम्भस्थलेषु तद्वशेन रतिमयानामिव बहुमान इति सैव धीरतातिशयचमत्कारं विधत्ते इत्युपमायाः प्राधान्यम्।

यथा वा—तं ताण सिरिसहोयरेति। तेषामसुराणां पातालवासिनां यैः पुनः पुनरिन्द्रपुरविमर्दनादि किं किं न कृतम्। तद् हृदयमिति यत्तेभ्यस्तेभ्योऽतिदुष्करेभ्योऽपि अकम्पनीयव्यवसायम्। तच्च हृदयं यत् श्रीसहोदराणामत एवानिर्वाच्योत्कर्षाणामित्यर्थः। तेषां रत्नानामासमन्ताद्धरणे एकरसं तत्परम्। तत्कुसुमबाणेन सुकुमारतरोपकरणसम्भारेणाऽपि प्रियाणां बिम्बाधरे निवेशितम्। तदवलोकनपरिचुम्बनदशनमात्रकृतकृत्यताऽभिमानयोगि तेन कामदेवेन कृतम्। तेषां हृदयं यदत्यन्तं विजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत्। अत्रातिशयोक्तिः पर्यायो वा, अन्येषां वाच्यालङ्कारः। प्रतीयमाना चोपमा। सकलरत्नसारतुल्यो बिम्बाधर इति हि तेषां बहुमानो वास्तव एव। अत एव न रूपकध्वनिः, रूपकस्योपचारत्वेनावास्तवत्वात्। तेषां चाऽसुराणां वस्तुवृत्त्यैव सादृश्यं स्फुरितमिति। तदेव च सादृश्यं चमत्कारहेतुः प्राधान्येन।

---

१. लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः॥ ख.॥

२. उपमा॥ ३. रतिः प्रस्तुता येषु धीरेषु॥

४. तं ताण सिरिसहोयररयणाहरणम्मि हिययमेक्करसम्।
बिंबाहरे पियाणं निवेसियं कुसुमबाणेण॥ ख.॥

५. अकम्पनीयव्यवसायम् एकरसं च॥ ६. भामहादिमते॥ ७. रुद्रटादीनाम्॥ ८ एवकारो भिन्नक्रमे सादृश्यमेवेति॥ ९. सादृश्यादपि यत् प्रवृत्तिः सुराणां तत्परत्वेन स मदनस्यैव प्रभावः।

आक्षेपध्वनिर्यथा

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं शक्तो ज्ञातुं महोदधेः ॥

अत्राऽतिशयोक्त्या निदर्शनया वा हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्याऽसाधारणतद्विशेषप्रकाशनपरस्याऽऽक्षेपस्य प्रकाशनात् ।

अर्थान्तरन्यासध्वनिर्यथा

हिययट्ठिअमन्नुं खु अणरुट्ठमुहं पि णं पसाएन्त ।
अवरद्धस्स वि ण हु दे बहुजाणय रूसियं सक्कं ॥

हृदये स्थितो न तु बहिः प्रकटितो मन्युर्यया, अत एवाऽप्रदर्शितरोषमुखीमपि मां प्रसादयन् हे बहुज्ञ ! अपराद्धस्याऽपि तव खलु न रोषकरणं शक्यम् । अत्र बहुज्ञेत्या-मन्त्रणार्थो विशेषे पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनाबलायत्सामान्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि । सा हि खण्डिता सती वैदग्ध्यानुनीता तं प्रत्यसूयां दर्शयन्ती इत्थमाह । यः कश्चिद् बहुज्ञो धूर्त्तः स स एवं सापराधोऽपि स्वापराधावकाश-मवच्छादयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति ।

व्यतिरेकध्वनिर्यथा

जाएज्ज वणुद्देसे खुज्जो चिय पायवो सडियपत्तो ।
मा माणुसम्मि लोए चाएक्करसो दरिद्दो य ॥

जायेय वनोद्देश एव वनस्यैकान्ते गहने यत्र स्फुटं बहुतरवृक्षसम्पत्त्या प्रेक्षतेऽपि न कश्चित् । कुब्जः इति यो रूपकघटनादावनुपयोगी । शटितपत्र इति छायामपि न करोति । तस्य का पुष्पफलवार्त्तेति भावः । तादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी स्यादुलूकादेर्वा निवासायेति भावः । मानुष इति सुलभार्थिजन इति भावः । लोक इति । यत्र लोक्यते सोऽर्थिभिस्तेन वार्थिजनः, न च किञ्चिच्छक्यते कर्तुं, तन्महद्वैशसमिति भावः । अत्र वाच्याऽलङ्कारो न कश्चित् । त्यागैकरसस्य दरिद्रस्य जन्माऽनभिनन्दनं, शटितपत्रकुब्जपादप-जन्माऽभिनन्दनं च साक्षाच्छब्दवाच्यं, तथाविधादपि पादपात्तादृशस्य पुंसः शोच्यताया-माधिक्यं तात्पर्येण प्रकाशयति ।

उत्प्रेक्षाध्वनिर्यथा—चन्दनासक्तभुजगेति । अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छा-कारणत्वं मन्मथोन्माथकदायित्वेनैव । तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्ष्यत

१ –थकत्वेनैव ख. ॥

२. [चन्दनासक्तभुजग—] निःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥ ख. ॥

इत्युत्प्रेक्षा साक्षादनुक्ताऽपि वाक्यार्थसामर्थ्यादनुरणनरूपव्यङ्ग्या लक्ष्यते। न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणाऽसम्बद्धतैवेति शक्यं वक्तुं, गमकत्वात्। अन्यत्राऽपि तदप्रयोगे तदर्थावगतिदर्शनात्। यथा

ईसाकलुसस्स वि तुह मुहस्स णणु एस पुण्णिमायंदो।
अज्ज सरिसत्तणं पाविऊण अंगिच्चिय न माइ॥

ईर्ष्याकलुषितस्याऽपि ईषदरुणच्छायाकस्य। यदि तु प्रसन्नस्य मुखस्य सादृश्यमुद्वहेत् सर्वदा वा तत् किं कुर्यात्। त्वन्मुखं तु चन्द्रीभवतीति मनोरथानामप्यपथमिदमित्यपिशब्दस्याऽभिप्रायः। अङ्गे स्वदेहे न मात्येव दश दिशः पूरयति। यतः अद्य इयता कालेन एकं दिवसमात्रमित्यर्थः। अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेवमुत्प्रेक्ष्यते।

यदि च ननुशब्देन वितर्कमुत्प्रेक्षारूपमाचक्षाणेनाऽसम्बद्धताऽत्र पराकृतेति सम्भाव्यते तदेदमत्रोदाहरणम्। यथा

त्रासाकुलः परिपतन् परितो निकेतान् पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथाऽपि न मृगः क्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः॥

परितः सर्वतो निकेतान् परिपतन्नाक्रामन्न कैश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथाऽपि न क्वचित्तस्थौ, त्रासचाञ्चल्ययोगात् स्वाभाविकादेव। तत्र चोत्प्रेक्षा ध्वन्यते। अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हृता ईक्षणश्रीः सर्वस्वभूताऽस्य यतः अतो न तस्थौ। नन्वेतदप्यसम्बद्धमस्तु, न शब्दाऽर्थव्यवहारे हि प्रसिद्धिरेव प्रमाणम्।

श्लेषध्वनिर्यथा—रम्या इति प्राप्तवतीरिति। पताकाः ध्वजपटान् प्राप्तवती रम्या इत्यतो हेतोः, पताकाः प्रसिद्धीः प्राप्तवतीः, किमाकारा प्रसिद्धी रम्या इत्येवमाकाराः। विविक्ता जनसङ्कुलत्वाभावादित्यतो हेतो रागं सम्भोगाऽभिलाषं वर्द्धयन्तीः।

अन्ये तु रागं चित्रशोभामिति। तथा रागमनुरागं वर्द्धयन्तीः। यतो हेतोर्विविक्ताः विभक्ताङ्ग्यो लटभाः। नमन्ति वलीकानि च्छदिःपर्यन्तभागा यासु। नमन्त्यो वल्यस्त्रिवलीलक्षणा यासाम्। सममिति सहेत्यर्थः। ननु समशब्दात्तुल्यार्थोऽपि प्रतीतः। सत्यम्, सोऽपि श्लेषबलात्। श्लेषश्च नाऽभिधावृत्तेराक्षिप्तः, अपि त्वर्थसौन्दर्यबलादेवेति सर्वथा ध्वन्यमान एव श्लेषः। समा इति हि यदि स्पष्टं भवेत्तदोपमाया एव स्पष्टत्वाच्छ्लेषस्तदाक्षिप्तः स्यात्। सममिति तु निपातोऽव्ययं सहार्थवृत्तिर्व्यञ्जकत्वबलेन क्रियाविशेषणतया शब्दश्लेषतामेति। न च तेन विनाऽभिधाया अपरिपुष्टता काचिदत एव समाप्तायामेवाऽभिधायां सहृदयैरेव स द्वितीयोऽर्थः पृथक् प्रयत्नेनाऽवगम्यः। यथोक्तं प्राक् "शब्दार्थ-

१. न मातीवेति ख ॥ २ हतेक्षणश्रीरिवेति अस्य च व्याख्यानमङ्गनाभिरिति। – रित्यादि ग. ॥ ३. इवादिशब्दप्रयोगं विना ॥ इवशब्दप्रयोगं विना ख. ॥ ४. प्राञ्जलया दृष्टया ख. ॥

शासनज्ञानमात्रेणैव" इत्यादि । एतच्च सर्वोदाहरणेष्वनुसर्त्तव्यम् ।

यथासंख्यध्वनिर्यथा

अङ्कुरितः कोरकितः पल्लवितः पुष्पितश्च सहकारः ।
अङ्कुरितः कोरकितः पल्लवितः पुष्पितश्च हृदि मदनः ॥

अत्र हि यथोद्देशमनुद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते ।

उपमेयोपमाध्वनिर्यथा

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तथे[वे]यं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याऽज्ञातपीडागमा
वापीं स्नातुमितो गताऽसि न पुनस्तस्याऽधमस्याऽन्तिकम् ॥

अत्र स इव त्वं त्वमिव सोऽप्यधम इति प्रतीयते ।

दीपकध्वनिर्यथा—मा भवन्तमनल इति । अत्र वाऽधिष्ठेति गोप्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्पत्तिः ।

अप्रस्तुतप्रशंसाध्वनिर्यथा—ढंढुल्लित मरीहसीति । प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेदमाहेति भङ्ग्स्याभिधायां प्रस्तुतत्वमेव । न चाऽऽमन्त्रणादप्रस्तुतत्वगतिः । प्रत्युताऽऽमन्त्रणं तस्या मौग्ध्यविजृम्भितमिति अभिधया तावन्नाप्रस्तुतप्रशंसा । समाप्तायां पुनरभिधायां वाच्यार्थसौन्दर्यबलादन्याऽपदेशता ध्वन्यते । यत् स्वसौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुमसदृशी मुग्धकुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यलब्धप्रसिद्ध्यतिशयानि शम्भलीकण्टकव्याप्तानि दूरामोदकेतकीवनस्थानीयानि वेश्याकुलानि इतश्चाऽमुतश्च चञ्चूर्यमाणं प्रियतममुपालभते ।

अपह्नुतिध्वनिर्यथा

यत्कालागुरुपत्रभङ्गरचनावासैकसारायते
गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।

---

१. –दे–ग. ॥ २. च्युतं चन्दनं न तु क्षालितम् । –तां ग । निर्मृष्टो न तु किञ्चिन्मृष्टः ॥ नितरां मृष्टो न तु. ग. ॥ दूरमनञ्जने निकटे तु साञ्जने । – साञ्जने अपि ग. ॥ पुलकिता तन्वीत्युभयं विधेयं व्यङ्ग्यपक्षेऽधमपदं च व्यञ्जकम् ।

३. ढंढुल्लितु मरीहसि कंटयकलियाइं केयइवणाइं ।
मालइकुसुमसरिच्छं भमर ! भमन्तो न पाविहिसि ॥ ख. ॥ ४. ज्ञानम् ॥ ५. कालागुरुपत्रभङ्गरचनावास एव आवसन्ती, कालागुरुपत्रभङ्गरचनैव यः एकः सारः स इवाचरतीत्यर्थः ।

विच्छेदाऽनलदीपितोत्कवनिताचेतोऽधिवासोद्भवं
सन्तापं विनिनीषुरेष विततैरङ्गैर्नताङ्गि स्मरः ॥

अत्र चन्द्रमण्डलमध्यवर्त्तिनो लक्ष्मणो वियोगाऽग्निपरिचितवनिताहृदयोदितप्लोषमलीमसच्छविमन्मथाकारतयाऽपह्नवो ध्वन्यते ।

अत्रैव ससन्देहध्वनिः । यतश्चन्द्रवर्त्तिनस्तस्य नामाऽपि न गृहीतम् । अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्रभङ्गविच्छित्तेर्यास्पदत्वेन यत् सारतामुत्कृष्टतामाचरतीति तन्न जानीमः किमेतद्वस्त्विति ससन्देहोऽपि ध्वन्यते । पूर्वमनङ्गीकृतप्रणयामनुतप्तां प्रणयिविरहोत्कण्ठितां वल्लभागमनप्रतीक्षापरत्वेन कृतप्रसाधनादिविधितया वासकसज्जीभूतां पूर्णचन्द्रोदयाऽवसरे दूतीमुखेनानीतः प्रियतमस्त्वदीयकुचकलशन्यस्तकालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्त्तिनी चेयं कुवलयदलश्यामला कान्तिरेवमेव करोतीति प्रतिवस्तूपमाध्वनिरपि । सुधाधामनीति चन्द्रपर्यायतयोपात्तं पदं संतापं विनिनीषुरित्यत्र हेतुतामपि व्यनक्तीति हेत्वलङ्कारध्वनिरपि । त्वदीयकुचशोभा मृगाङ्कशोभा च सह मदनमुद्दीपयत इति सहोक्तिध्वनिरपि । त्वत्कुचसदृशश्चन्द्रश्चन्द्रसमस्त्वत्कुचाभोग इत्यर्थप्रतीतेरुपमेयोपमाध्वनिरपि । एवमन्येऽप्यत्र प्रभेदाः शक्योत्प्रेक्षाः, महाकविवाचोऽस्याः कामधेनुत्वात् । यतः

हेलाऽपि कस्यचिदचिन्त्यफलप्रसूत्यै
कस्याऽपि नाऽलमणवेऽपि फलाय यत्नः ।
दिग्दन्तिरोमचलनं धरणीं धुनोति
खात् सम्पतन्नपि लतां चलयेन्न भृङ्गः ॥

एषां तु भेदानां संसृष्टित्वं सङ्करत्वं च यथायोगं चिन्त्यम् । एवमन्येऽप्यलङ्काराः क्वचिदलङ्कारो व्यञ्जकः क्वचिद्वस्त्विति यथायोगं योजनीयाः ।

एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते ।

"शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥"

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां, व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह

१. विच्छित्तेः सम्बन्धि आस्पदं स्थानमवकाशलक्षणो विषयो यस्य कलङ्करूपस्य वस्तुनस्तत्तथा. तस्य भावस्तत्त्वं । तत्स्थानीयत्वेनेति यावत् । तेन तत्स्था—ग. ॥ २ यः ग. ॥ ३ इति चाटुकं करोति प्रियतमः इति सम्बन्धः । चाटुरूपता च प्रतिवस्तुनः, उपमानत्वेनोपयोगात् । ख. ॥ ४. संसृष्टयलङ्कारध्वनित्वं सङ्करालङ्कारध्वनित्वं च । ५. ध्वनिभेदत्वम् । ध्वनिभेदत्वम् , न पुनरङ्गतामप्रधानतां ग. ॥

प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम् । व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः । इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते । अङ्गित्वेन व्यङ्ग्यतया-मप्यलङ्काराणां द्वयी गतिः । कदाचिद्वस्तुमात्रेण व्यज्यन्ते, कदाचिदलङ्कारान्तरेण । तत्र

" व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥ "

यस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं प्रवृत्तम् । अन्यथा तु तद्वाक्य-मात्रमेव स्यात् ।

" अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत् ।
चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ "

तासामेवालङ्कृतीनामलङ्कारान्तरैर्व्यङ्ग्यत्वे सतीत्यर्थः । वस्तुमात्रव्यङ्ग्यत्वेऽलङ्का-रान्तरव्यङ्ग्यत्वे चालङ्काराणामनन्तरोदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेतव्यः । अर्थशक्त्यु-द्भवे हि ध्वनौ कविप्रौढोक्तिमात्रकृतशरीरत्वादिना त्रिप्रभेदं वस्तु वस्तुनोऽलङ्कारस्य च व्यञ्ज-कम् । अलङ्कारोऽपि तथैव त्रिप्रकारोऽलङ्कारस्य वस्तुनश्चेति । तत्र कविकविनिबद्धवक्तृप्रौढो-क्तिमात्रनिष्पन्नशरीराभ्यां वस्तुभ्यां स्वतःसम्भविना च वस्तुनेति त्रिभिर्वस्तुभिर्वस्तु सज्जेइ [इ]त्याद्युदाहरणत्रितये व्यङ्ग्यं दर्शितम् ।

त्रिप्रकारेणाऽलङ्कारेण च यत्र वस्तु व्यज्यते तदनन्तरमेव निदर्शयिष्यते । यश्च त्रिविधेन वस्तुनाऽलङ्कारेण चाऽलङ्कारो व्यङ्ग्यस्तस्य विषय उन्नेय इत्यर्थः । तथा हि– प्राप्तश्रीरित्यादिना लावण्येत्यादिना च कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नेनालङ्कारेणालङ्कारः । धीराण रमइ इत्यादिना तं ताण इत्यादिना च स्वतःसम्भविना, स वक्तुमित्यादिना कवि-प्रौढोक्तिमात्रनिष्पन्नेन चालङ्कारेणाऽलङ्कारः । हिअयट्ठिएत्यादिना जाएज्जेत्यादिना च स्वतः-सम्भविना वस्तुनाऽलङ्कारः । चन्दनासक्तेत्यादिना कविप्रौढोक्तिमात्रनिष्पन्नेन वस्तुनाऽलङ्कारः । ईसाकलुसस्सेत्यादिना कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नेन वस्तुनाऽलङ्कारः । त्रासाकुल इत्यादिना कविप्रौढोक्तिमात्रनिष्पन्नेन वस्तुनाऽलङ्कारः । रम्या इत्यादिनोदाहरणपञ्चकेन स्वतःसम्भविना वस्तुनाऽलङ्कारः । यत् कालागुरुपत्रेत्यादिना कविनिबद्धवक्तृप्रौढोक्तिमात्र-निष्पन्नशरीरेण वस्तुनाऽलङ्कारो व्यज्यते । किञ्च

" वाच्यालङ्कारशक्तेस्तु वस्तु यत्र प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यो मन्तव्यः सोऽपि च ध्वनिः ॥ "

---

१. आत्मभूतध्वनिनिरूपणलक्षणात् ॥

अलङ्कारा अपि कविप्रौढोक्तिमात्रनिष्पन्नशरीरत्वादिना त्रिप्रभेदाः प्रदर्शिताः। तत्राद्यस्योदाहरणं चमढियमाणसेति। अत्र कविप्रौढोक्तिमात्रनिष्पन्नेन बाह्वोः परिघरूपणात्मना रूपकाऽलङ्कारेण भुजद्वयादन्यद्गजाश्वादिसामग्रीरूपं तस्याऽनुपादेयमिति वस्तु व्यङ्ग्यम्।

द्वितीयस्य यथा

दृशा सार्द्रं दन्तच्छदपरिचयाद्वक्त्रमरुणं
कचभ्रूकौटिल्यान्मुखमपि न मुञ्चत्यवनतिम्।
अहो दीर्घः कोपस्तव नयनयोगात् किमपरं
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम्॥

इत्यादौ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नेन हेत्वलङ्कारेण तव न स्वाभाविकः कोपोऽपि तु दृगादिपरिचयादरुणतादि कोपकार्यमिति वस्तु व्यज्यते।

तृतीयस्य यथा—चंदमऊहेहीति। अत्र स्वतःसम्भविना सज्जनैर्विना काव्यमन्धतमससमं निःश्रीकप्रायं नीरसकाष्ठतुल्यमुपलम्भकटुकं चेति दीपकसद्भावेन वस्तु व्यज्यते। तदेवमर्थमात्रेणाऽलङ्कारविशेषरूपेण चार्थेन कविप्रौढोक्तिमात्रनिष्पन्नशरीरत्वादिना प्रत्येकं त्रिभेदेनार्थान्तरस्याऽलङ्कारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्ये द्वादशविधोऽर्थशक्त्युद्भवाऽनुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः। एवमविवक्षितवाच्यो विवक्षितान्यपरवाच्य इति द्वौ मूलभेदौ। तत्राद्यस्याऽपि द्वौ भेदौ—अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्यश्च। द्वितीयस्याऽपि द्वौ—अलक्ष्यक्रमोऽनुरणनरूपश्च। प्रथमोऽनन्तभेद इत्येक एव। द्वितीयस्त्रिविधः—शब्दशक्तिमूलोऽर्थशक्तिमूलः शब्दार्थशक्तिमूलश्च। आद्यो द्विविधः—व्यङ्ग्यालङ्कारवस्तुभेदात्। मध्यमो द्वादशविधः—व्यञ्जकस्यार्थस्याऽलङ्कारस्य च कविप्रौढोक्तिकृतशरीरत्वादिना प्रत्येकं त्रैविध्ये व्यङ्ग्यस्याऽपि प्रत्येकमेव च वस्त्वलङ्कारभेदेन द्वैविध्यात्। इत्यष्टादशमुख्यभेदान् ध्वनेः प्रतिपाद्य तदाभासेभ्यो विवेकं कर्तुमिदमुच्यते—

"यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन[1] भासते।
वाच्यस्याङ्गतया[2] वाऽपि नाऽस्याऽसौ गोचरो ध्वनेः॥"

द्विविधो हि प्रतीयमानः, स्फुटश्चास्फुटश्च। तत्र य एवं स्फुटः शब्दशक्त्याऽर्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः। स[3] हि व्यङ्ग्यस्य प्रतिभामात्र इत्यत्रोदाहृतः। स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्याऽनुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः।

---

१. अस्फुटत्वेन। २. अङ्गता द्विप्रकारा दर्शयिष्यते। ३. अस्फुटः।

यथा

कमलायरा ण मलिया हंसा उड्डाविया ण य पिउच्छा।
केण वि गामतलाए अब्भं उत्ताणयं छूढं॥

पिउच्छेति हे पितृष्वसः। अत्र हि प्रतीयमानस्य मुग्धबध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव। वाच्येनैव हि विस्मयविभावरूपेण मुग्धिमातिशयः प्रतीयते इति वाच्यादेव चारुत्वसम्पत्। वाच्यं तु स्वात्मोपपत्तयेऽर्थान्तरं स्वोपस्कारकवाञ्छया व्यनक्ति। यत्र च व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते तत्र व्यङ्ग्यस्याऽप्रधानत्वेन प्रतीतौ ध्वनेरविषयत्वम्। यथा

वाणीरकुंडगुंड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए बहूए सीअन्ति अंगाइं॥

अत्र दत्तसङ्केतचौर्यकामुकसमुचितस्थानप्राप्तिर्ध्वन्यमाना वाच्यस्यैवोपस्कुरुते। तथाहि–गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि, अङ्गानीति एकमपि न तादृगङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्। सीदन्तीति। आस्तां गृहकर्मसम्पादनं स्वात्मानमपि धर्तुं न प्रभवन्ति। गृहकर्मयोगे च स्फुटं तथा लक्ष्यमाणानीत्यस्मादेव वाच्यात्सातिशयमदनपरवशताप्रतीतेश्चारुत्वसम्पत्तिः। यत्र तु प्रकरणादिप्रतिपत्त्या निर्द्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैव भासते, सोऽस्यैवाऽनुरणनरूपव्यङ्गचस्य ध्वनेर्विषयः। यथा

उच्चिणसु पडियकुसुमं मा धुण सेहालिअं हलियसुण्हे।
अह ए विसमविराओ ससुरेण सुओ वलयसद्दो॥
उच्चिनु पतितानि कुसुमानि मा धावीः शेफालिकां हालिकस्नुषे।
एष ते विषमविरामः श्वशुरेण श्रुतो वलयशब्दः॥ [छाया]

यतश्च श्वशुरः शेफालिकालतिकां प्रयत्नेन रक्षंस्तस्या आकर्षणधूननादिना कुप्यति तेनाऽत्र विषमपरिपाकत्वं मन्तव्यम्। अन्यथा तु स्वोक्त्यैव व्यङ्ग्याक्षेपः स्यात्। अत्र च–कस्स व ण होइ रोसो इत्येतदनुसारेण व्याख्या कार्या। अत्र ह्यविनयपतिना सह रममाणा सखी बहिःश्रुतवलयकलकलया सख्या प्रतिबोध्यते। एतच्च व्यङ्ग्यमपेक्षणीयं वाच्यार्थलाभाय। अन्यथा वाच्योऽर्थो न लभ्येत। स्वतःसिद्धतयाऽवचनीय एव सोऽर्थः स्यादिति यावत्। शब्दोक्ते च वाच्येऽर्थेऽविनयप्रच्छादनतात्पर्येणाऽभिधीयमाने वाच्येना-

१. कुडंगु–ग। २. –पि ता–ग। ३. पातनिकायाम्। ४. पुनर्व्यङ्ग्यत्वे विशेषणद्वारको हेतुरयम्।

ऽपेक्षितस्याऽत एव वाच्यायमानस्याऽविनयप्रच्छादनलक्षणस्याऽर्थस्य पुनर्व्यङ्ग्यत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्ये ध्वनावन्तर्भावः ।

एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके कृते सति अविवक्षितवाच्यस्याऽपि तं कर्तुमाह–

"अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥"

अव्युत्पत्तेरिति । मध्येसमुद्रमिति । अत्र वडवामुखाग्निर्लक्ष्यते । तत्र च नास्ति प्रयोजनं न च रूढिरित्यव्युत्पत्तिः ।

यस्य तु वृत्ते शब्दं प्रवेशयितुमसामर्थ्यं तस्याशक्तिः । यथा

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥

उपसंहरति

"सर्वेष्वेव प्रभेदेषु स्फुटत्वेनाऽवभासनम् ।
यद्व्यङ्ग्यस्याऽङ्गिभूतस्य तत् पूर्णं ध्वनिलक्षणम् ॥"

तदेवमविवक्षितवाच्यस्य विवक्षिताऽन्यपरवाच्यस्य च भेदवर्णनमर्थान्तरे सङ्क्रमितमित्यादिना, रसध्वनिरसवदलङ्कारयोर्विभजनं वाच्यवाचकचारुत्वेत्यादिना, गुणालङ्कारविभागस्तमर्थमवलम्बते इत्यादिना, दोषाणामनित्यत्वे युक्तिकथनं श्रुतिदुष्टादय इत्यादिना, रसादिध्वनेरानन्त्यप्रतिपादनं तस्याऽङ्गानामित्यादिना । संक्षेपेण तदङ्गानामङ्गत्वोक्तिः दिङ्मात्रं तूच्यत इत्यादिना, शब्दशक्तिमूलस्य ध्वनेः स्वरूपनिरूपणं श्लेषात्तस्यान्यताऽभिधानं च आक्षिप्त एवेत्यादिना, अर्थशक्त्युद्भवस्य तस्य स्वरूपविवेचनं अर्थशक्त्युद्भवस्त्वित्यादिना, अलङ्काराणां व्यङ्ग्यत्वेऽतिशयोदीरणं शरीरीकरणमित्यादिना, वस्त्वलङ्कारयोर्व्यङ्ग्यव्यञ्जकत्वनैयत्येऽर्थशक्त्युद्भवस्यैव ध्वनेः स्वरूपपरामर्शनं व्यज्यन्ते वस्तुमात्रेणेत्यादिना, उभयभेदध्वन्याभासविवेकश्च यत्र प्रतीयमानोऽर्थ इत्यादिनेति द्वादशप्रमेयात्मकं भेदप्रभेदतद्भेदनिरूपणमिह मुख्यं प्रमेयम् ।

एवं व्यङ्ग्यमुखेन व्यञ्जकवाच्यमुखेन च ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्यञ्जकपदवाक्यवर्णपदभागसङ्घटनामहावाक्यमुखेनैतत् प्रकाश्यते–

"अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।
तदन्यस्याऽनुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥"

---

१. न तु वाच्यायमानत्वम् । २. छन्दसि ।

तदन्यस्येति । विवक्षिताऽभिधेयस्य सम्बन्धी यो द्वितीयो भेदः क्रमद्योत्यो नाम स्वभेदसहितस्तस्याऽपि प्रत्येकं पदवाक्यप्रकाशता ।

अविवक्षितवाच्यस्याऽत्यन्ततिरस्कृतवाच्ये प्रभेदे पदप्रकाशता, यथा

धृतिः क्षमा दमः शौचं कारुण्यं वागऽनिष्ठुरा ।
मित्राणां चाऽनभिद्रोहः सप्तैताः समिधः श्रियः ॥

यथा च

कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम् ।

यथा वा

सरसिजमनुविद्धं शैवलेनाऽपि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

एतेषूदाहरणेषु समिध इति, सन्नद्ध इति, मधुराणामिति च पदानि व्यञ्जकत्वाऽभिप्रायेणैव कृतानि । तथाहि– समिच्छब्दार्थस्याऽत्र सर्वथा तिरस्कारोऽसम्भवाद् । अत एव च समिच्छब्देनाऽनन्यापेक्षलक्ष्म्युद्दीपनक्षमत्वं सप्तानां धृत्यादीनां लक्षयता सत्स्वेषु हस्तगतैव पुरुषाणां लक्ष्मीरिति वक्त्रभिप्रेतं ध्वन्यते । यद्यपि निःश्वासान्ध इत्याद्युदाहरणादप्ययमर्थो लभ्यते, तथाऽपि प्रसङ्गाद् बहुलक्ष्यव्यापित्वं दर्शयितुमुदाहरणान्तराण्युक्तानि । अत्र च वाच्यस्यात्यन्ततिरस्कारः पूर्वोक्तमनुसृत्य योजनीयः, किं पुनरुक्तेन । सन्नद्धपदेन च अत्राऽसम्भवत्स्वार्थेनोद्यतत्वं लक्षयता वक्त्रभिप्रेताः निष्करुणत्वाऽप्रतिकार्यत्वाऽप्रेक्षापूर्वकारित्वादयो ध्वन्यन्ते । तथैव मधुरशब्देन सर्वविषयरञ्जकत्वतर्पकत्वादिकं लक्षयता सातिशयाऽभिलाषविषयत्वं नाऽत्राऽऽश्चर्यमिति वक्त्रभिप्रेतं ध्वन्यते । तस्यैवार्थान्तरसङ्क्रमितवाच्ये यथा

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥

रक्षःस्वभावत्वादेव यः क्रूरोऽनभिलङ्घ्यशासनत्वदुर्मदतया च प्रसह्य निराक्रियमाणः क्रोधान्धस्तस्यैतत्तावत् स्वेचित्तवृत्तिसमुचितमनुष्ठानं यन्मूर्द्धकर्त्तनं नाम मा अन्योऽपि

१. क्रोधरूपा ।

कश्चिन्ममाज्ञां लङ्घयिष्यतीति। ते इति यया तादृगपि तथा न गणितस्तस्यास्तवेत्यर्थः। तदपि तथाऽविकारेणोत्सवाऽऽपत्तिबुद्ध्या नेत्रविस्फारतामुखप्रसादादिलक्ष्यमाणया सोढं, येन प्रकारेणेदानीं कुलजन इति यः कश्चित् पामरप्रायोऽपि वधूशब्दवाच्य उच्चैः शिरो धत्ते। एवंविधाः किल वयं कुलवध्वो भवाम इति। अथ[1] च शिरःकर्त्तनाऽवसरे त्वया शीघ्रं कर्त्यतामिति तथा सोढं तथा उच्चैः शिरो धृतं यथाऽन्योऽपि कुलस्त्रीजन उच्चैः शिरो धत्ते। नित्यप्रवृत्ततया एवं रावणस्य तव च समुचितकारित्वं निर्व्यूढम्। मम पुनः सर्वमनुचितमेव पर्यवसितम्। तथा हि– राज्यनिर्वासनादिनिरवकाशीकृतधनुर्व्यापारस्याऽपि कलत्रमात्ररक्षणादिप्रयोजनमपि यच्चापमभूत्तत् सम्प्रति त्वय्यरक्षितव्यापन्नायामेव निष्प्रयोजनं तथाऽपि च तद्धारयामि। तन्नूनं निजजीवितरक्षैवाऽस्य प्रयोजनत्वेन सम्भाव्यते। न चैतद्युक्तम्। रामेणेत्यसमसाहसरसत्वसत्यसन्धत्वोचितकारित्वादिव्यङ्ग्यधर्मान्तरपरिणतेनेत्यर्थः। प्रिये इति शब्दमात्रमेवैतदिदानीं संवृत्तम्। प्रवृत्तिनिमित्तं यत् प्रियशब्दस्य प्रेमनाम तदप्यनौचित्यकलङ्कितमिति शोकालम्बनोद्दीपनविभावयोगात् करुणरसो रामस्य स्फुटीकृतः। अत्र रामेणेत्येतत्पदं व्यञ्जकम्।

यथा वा–एमेय जणो तिस्सा इति। अत्र द्वितीयश्चन्द्रशब्दो व्यञ्जकः। एवमेवेति स्वयमविवेकाऽन्धतया। जन इति लोकप्रसिद्धिगतानुगतिकामात्रशरणः। तस्या इत्यसाधारणगुणगणमहार्घवपुषः। कपोलोपमायामिति। निर्व्याजलावण्यसर्वस्वभूतमुखमध्यवर्त्तिप्रधानभूतकपोलतलस्योपमायां प्रत्युत तदधिकगुणं वस्तु कर्त्तव्यम्। ततो दूरनिकृष्टं शशिबिम्बं कलङ्कव्याजजिह्मीकृतम्। एवं यद्यपि गड्डरिकाप्रवाहपतितो लोकस्तथाऽपि यदि परीक्षकः परीक्षते तद्द्राक् कृपैकभाजनं यश्चन्द्र इति प्रसिद्धः स चन्द्र एव। क्षयित्वविलासशून्यत्वमलिनत्वधर्मान्तरसङ्क्रान्तोऽस्यार्थः। अत्र च यथा व्यङ्ग्यधर्मान्तरसङ्क्रान्तिस्तथा पूर्वोक्तमनुसन्धेयम्। एवमुत्तरत्राऽपि।

अविवक्षितवाच्यस्य तिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा–

या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी।
यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः॥

अनेन हि वाक्येन न निशाऽर्थो न च जागरणार्थः कश्चिद्विवक्षितः। किं तर्हि तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्याऽस्य व्यञ्जकत्वम्। तथा हि–निशायां जागरितव्यमन्यत्र[2] रात्रिवदासितव्यमिति[3] किमनेनोक्तेन। उपदेश्यं प्रति कस्यचिदुपदेशस्याऽसिद्धेः। तस्माद् बाधितस्वार्थमेतद्वाक्यं[4] संयमिनो लोकोत्तर-

१. अथ चेत्यर्थः॥ २. अनिशायाम्॥ ३. निशा जागर्त्ति यस्यां रात्रिरिति शब्दाः॥ ४. इतरभूतानां त्वेतद्विपरीतं ध्वनतीत्यर्थः॥

तालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ च पराधीनत्वं ध्वनति । सर्वशब्दार्थस्य चाऽपेक्षिकतयाऽप्युपपद्यमानतेति न सर्वशब्दार्थोऽन्यथाऽनुपपत्त्याऽयमर्थ आक्षिप्तो मन्तव्यः । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां या निशा व्यामोहजननी तत्त्वदृष्टिस्तस्यां संयमी जागर्त्ति कथं प्राप्येतेति । न तु विषयवर्जनमात्रादेव संयमीति यावत् । यदि वा सर्वभूतनिशायां मोहन्यां जागर्त्ति कथमेयं हेयेति । यस्यां तु मिथ्यादृष्टौ सर्वाणि भूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयस्तस्यां हि चेष्टायां नासौ प्रबुद्धः । एवमेव च लोकोत्तराचारव्यवस्थितः पश्यति च मन्यते च तस्यैवाऽन्तर्बहिःकरणवृत्तिश्चरितार्था । अन्यस्तु न पश्यति न मन्यत इति तत्त्वदृष्टिपरेण भाव्यमिति तात्पर्यम् । एवं च पश्यत इत्यपि मुनेरित्यपि च न स्वार्थमात्रे विश्रान्तमपि तु व्यङ्ग्य एव विश्राम्यति । यत्तच्छब्दयोश्च न स्वतन्त्रार्थतेति सर्व एवायमाख्यातसहायः पदसमूहो व्यङ्ग्यपरः ।

तस्यैवार्थान्तरसङ्क्रमितवाच्यस्य वाक्यप्रकाशता यथा

विसमइओ च्चिय काण वि काण वि वोलेइ अमयणिम्माओ ।
काण वि विसामयमओ काण वि अविसामओ कालो ॥

अत्र हि अर्थान्तरसङ्क्रमितवाच्येन पदसमूहेन व्यवहारः । तथा हि—

विषमयितो विषमयतां प्राप्तः केषांचिद् दुष्कृतिनाम् अतिविवेकिनां वा, केषाञ्चित्सुकृतिनामत्यन्तमविवेकिनां वा अतिक्रामत्यमृतनिर्माणः, केषाञ्चिन्मिश्रकर्मणां विवेकाविवेकवतां वा विषाऽमृतमयः, केषामपि मूढप्रायाणां धाराप्राप्तयोगभूमिकारूढानां वा अविषाऽमृतः कालोऽतिक्रामतीति सम्बन्धः । विषामृतपदे च लावण्यादिशब्दवन्निरूढलक्षणारूपतया सुखदुःखसाधनयोर्वर्त्तते, विषं निम्बममृतं कपित्थमिति । न चाऽत्र सुखदुःखसाधने तन्मात्रविश्रान्ते, अपि तु स्वकर्त्तव्यसुखदुःखपर्यवसितेन च ते साधने सर्वथा न विवक्षिते,

---

१. यथायोगमत्यर्थमुपकारकत्वेनोपकार्यत्वेन च व्यङ्ग्यस्यात्यन्तमासन्न इति लक्षणीयोऽप्यर्थो ध्वनित्वेन व्यपदिष्टः, दुस्तरसंसारवैराग्यं निरूपमनिर्वृतिसुखसमासन्नत्वं लोकोत्तरत्वं सन्मार्गदेशकत्वं चेत्यादिमुनीनां, तद्विपरीतं तु भूतानां धर्मसहस्रमत्र हि व्यङ्ग्यमिति । तद्विपरीतत्वं तु ग. ॥ २. वाच्यायमानः ॥ ३. मिथ्यादृष्टौ ॥ ४. उपदेशपरता वाक्यस्य दर्शिता ॥ ५. अपि तु परतन्त्रार्थतापरश्च निशादिरर्थो व्यङ्ग्यविश्रान्त इत्यनयोरपि व्यङ्ग्य एव विश्रान्तिः ॥ ६. विषामृतकिमादिशब्दा दुःखसुखदुष्कृतिप्रभृतिसामान्यरूपार्थान्तरपरिणता नानाप्रकारान् स्त्रजनमरणतपश्चर्यादिकलत्रयोगपुत्रोत्पत्तिसम्पल्लाभादिजनितदुःखादिविशेषान्" ध्वनन्ति । यदि वा निर्जरारूपत्वाविषह्यमाणकष्टफलत्वाभिमन्यमानस्त्रजनमरणादितपश्चर्यादिरूपदुःखविशेषादौ सङ्क्रान्ता मोक्षनिराकाङ्क्षतादीन् ध्वनन्ति ॥ ७. विषमयितां ग ॥ ८. सुखदुःखसाधनमात्र ॥

निःसाधनयोस्[1]तयोरभावात् । केषाञ्चिदिति चाऽस्य विशेषे सङ्क्रान्तिः । अतिक्रामतीत्यस्य च क्रियामात्रे सङ्क्रान्तिः । काल इत्यस्य च सर्वव्यवहारे सङ्क्रान्तिरिति ।

एवं कारिकाप्रथमार्द्धलक्षितांश्चतुरः प्रकारानुदाहृत्य द्वितीयकारिकार्द्धस्वीकृता एकोनत्रिंशत् प्रकाराः क्रमेणोदाह्रियन्ते । उभयशक्तिमूलो हि वाक्यप्रकाश एव भवति । तत्र विवक्षिताऽभिधेयस्याऽनुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवेऽलङ्कारध्वनिप्रभेदे पदप्रकाशता यथा

प्राप्तुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नाऽस्मि ।
पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम् ॥

अत्र हि जड इत्येतत् पदं निर्विण्णेन वक्त्रा आत्मसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया तडागः कूपोऽपि जड इति तदुभयसमानाधिकरणतां स्वशक्त्या प्रतिपद्यत इति रूपकं ध्वन्यते । प्राप्तुमिति पूरयितुं, धनैरिति बहुवचनं यो येनार्थी तस्य तेनेति सूचनार्थम् । अत एवार्थिग्रहणं जनस्येति । बाहुल्येन हि लोको धनार्थी न तु गुणैरुपकारार्थी । दैवेनेत्यशक्यपर्यनुयोगेनेत्यर्थः । अस्मीति अन्यो हि तावदवश्यं कश्चित् सृष्टो न त्वहमिति निर्वेदः । प्रसन्नं लोकोपयोगि अम्बु धारयतीति । कूपोऽथवेति । लोकैरप्यलक्ष्यमाण इत्यर्थः । आत्मसमानाधिकरणतयेति जडः किंकर्त्तव्यतामूढ इत्यर्थः । अथ च तडागः कूपश्च जडो योऽर्थिता कस्य कीदृशीत्यसम्भवद्विवेक इति । अत एव च जडः शीतलो निर्वेदसन्तापरहितस्तथा जडः सततं[2]जलयोगितया परोपकारसमर्थः । अनेन तृतीयार्थेनायं जडशब्दस्तडागार्थेन पुनरुक्तार्थसम्बन्ध [3]इत्येतदर्थोऽयं तडागसमानाधिकरणतया न योजनीयः । **स्वशक्त्या**—इति । शब्दशक्त्युद्भवत्वं योजितम् । तस्यैव वाक्यप्रकाशता यथा-**हर्षचरिते सिंहनाद**वाक्येषु—“[4]वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाऽधुना त्वं शेषः” । [5]महस्याऽऽसमन्तात् प्रलयो यत्र तादृशि शोककारणभूते वृत्ते धरण्या राज्यधुराया धारणायाऽऽश्वासनाय त्वं शेषः शिष्यमाण इतीयता पूर्णे वाक्यार्थे, कल्पावसाने भूपीठभारोद्वहनक्षम एको नागराज इव नागराज एव वा दिग्दन्तिप्रभृतिष्वपि प्रलीनेष्वित्यर्थान्तरमुप[6]मारूपकपर्यवसितं शब्दशक्त्या स्फुटमेव प्रकाशते ।

तत्रैव वस्तुध्वनिप्रभेदे पदप्रकाशता यथा

---

१. सुखदुःखयोः ॥ २. अति [अचि ?] कृतेऽर्शादि [अर्श आदि ?] द्वारेणायमर्थः ॥ ३. एष तृतीयो जलयोगितालक्षणोऽर्थो यस्य जडशब्दस्य ॥ ४. भ्रातरि पितरि च विपन्ने निर्विण्णः श्रीहर्षो राज्यधुरामुद्वोढुं सिंहनादनाम्ना मन्त्रिणा प्रोत्साह्यते । प्रोत्साह्यतेऽत्र ग. ॥ ५. उत्सवस्य ॥ ६. सन्देहसङ्कर ॥

मुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिःष्यन्दं विदधाति सदागमः ॥

भुक्तिः कान्तोपभोगोऽपि, मुक्तिरुद्वेगव्यापारादपि, एकान्तः सङ्केतस्थानमपि, सतः सुन्दरस्याऽऽगमनमपि । अत्र काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसतीति सदागमपदेन प्रकाश्यते । अर्थयोश्च वैसादृश्यान्नोपमेति ।

वाक्यप्रकाशता यथा

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति व्यत्ययेन ध्वन्यते । एवं चत्वारः शब्दशक्त्युद्भवप्रभेदा इति ।

तस्यैवार्थशक्त्युद्भवे प्रभेदे कविप्रौढोक्तिमात्रनिष्पन्नशरीरेण वस्तुना वस्तुनो व्यङ्ग्यत्वे पदप्रकाशता यथा

बिंबाहरे पियाणं णिवेसियं कुसुमबाणेण ।

अत्र कुसुमबाणेनेति पदार्थो वस्तुमात्रस्वभावः कामदेवस्य कविप्रौढोक्त्याऽनुदाहृततीक्ष्णोपायसौन्दर्यरूपं वस्तुमात्रं ध्वनति । वस्तुनैवाऽलङ्कारस्य व्यङ्ग्यत्वे यथा—वीराण रमइ इति । अत्र वीराणामिति पदार्थो वस्तुमात्रस्वभावः कविप्रौढोक्तिप्रभावात्कुचयोः कुम्भस्थलस्य चोपमामलङ्कारं ध्वनति । अलङ्कारेणाऽलङ्कारस्य व्यङ्ग्यत्वे यथा—होइ ण गुणाणुराओ इति । अत्र चन्द्र इत्यस्याऽऽह्लादकत्वं यदर्थस्तत्प्रियामुखेऽपीति रूपकमुच्यमानं कविप्रौढोक्तिमहिम्ना व्यतिरेकस्य व्यञ्जकम् । एतद्रूपकमुखेनैव चार्थान्तरन्यासोऽपि व्यतिरेकं व्यनक्तीति न पूर्वापरव्याघातः ।

अलङ्कारेणैव वस्तुनो व्यङ्ग्यत्वे यथा

चूअंकुरावयंसं छणपसरमहग्घमणहरसुरामोयं ।
अपणामियं पि गहियं कुसुमसरेण महुमासलच्छीए मुहं ॥

चूताङ्कुरावतंसं महार्घेणोत्सवप्रसरेण मनोहरसुरम्यमन्मथदेवस्य आमोदश्चमत्कारो यत्र, महार्घशब्दस्य परनिपातः प्राकृते नियमाभावात् । छण इत्युत्सवः । असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मुखं प्रारम्भः वक्त्रं च, तच्च सुरामोदयुक्तं भवति । अत्र

१. प्राधान्यरूपया न त्वभिधारूपया ॥ २. शनिरशनिरित्यादिरूपेण ॥ ३. च वस्तुनो ग ॥

अपणामियं असमर्पितमपीति पदार्थविभावनालङ्कारेण वाच्येन कविप्रौढोक्तिनिष्पन्नेन मधुमासप्रौढिमनि भाविनि किं भविष्यतीत्येवंभूतं वस्तुमात्रं ध्वन्यते ।

वाक्यप्रकाशतायामपि क्रमेणोदा[हरणानि]

क्षितिपतिः स्वमनायत यत्क्षणं दुरमनायत यच्च मुहुर्मुहुः ।
इदमवेक्ष्य यथा सुमनायते स किल दासपतेरगमद् गृहम् ॥

अत्र पितुः शन्तनोः कृते भीष्मः स्वयं सत्यवतीम् आनयतेत्येवंविधः कविप्रौढोक्त्या निबद्धो वाक्यार्थः स्वशक्त्या इदं वस्तु ध्वनति । कामावस्थाभिरविरतं विडम्ब्यमाने पितरि दृष्टे भीष्मोऽपि नामानुचितप्रायस्यापि दासाधिपतेर्गृहं जगामेत्यनुचितकारित्वमपि परमुचितकारित्वमस्येति । तदेव चाऽत्र प्रधानं वस्तु, धर्मवीरोपयोगात् ।

पुत्रक्षयेन्धनघनप्रविजृम्भमाणस्नेहोत्थशोकविषमज्वलनाऽभितप्तः ।
प्रालेयशीतलममंस्त स बाह्यवह्निमह्नाय देहमथ संविदधे सरित्सात् ॥

अत्र वशिष्ठः पुत्रक्षयोपतप्तोऽग्निं प्रविष्टोऽपि न तेन दग्ध इत्ययं वाक्यार्थः कविप्रौढोक्त्या निबद्धो वस्तुरूपः शोकस्य बाह्यवह्नेराधिक्यमिति व्यतिरेकालङ्कारं ध्वनति । स वक्तुमखिलानिति । चमढियमाणसेति ।

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरेण वस्तुना वस्तुनोऽलङ्कारस्य वाऽलङ्कारेणालङ्कारस्य वस्तुनो वा व्यङ्ग्यत्वे पदप्रकाशता यथा

यावन्न यात्युपचयं न च यावदेषु प्रेम्णा धृतिं वितनुते सुहृदां स पक्षः ।
प्रोन्मूलनेन [?] तु तावदरिप्ररोहान् विध्वंसयध्वमिति मन्त्रमदात् स कर्णः ॥ '

अत्र वक्तुः प्रौढोक्त्याऽरिप्ररोहानिति पदस्य योऽर्थो रोढुं स्थितिं लब्धुमेते तावत् प्रारब्धाः पाण्डवा इति तेनेदं वस्तु ध्वन्यते । अद्यैव सूच्छेदा यदि न नाश्यन्ते तदमी यत्नशतैरपि दुरुच्छेदा एव भविष्यन्तीति । यथा च–सत्यं मनोरमाः रामा इति । अत्र कविना यो विरागी वक्ता निबद्धस्तत्प्रौढोक्त्या जीवितशब्दोऽर्थशक्तिमूलतयेदं ध्वनति । सर्व एवाऽमी कामा विभूतयश्च जीवनमात्रोपयोगिनः । तदभावे हि सद्भिरपि तैरसद्रूपायते । तदेव च जीवितं प्राणधारणरूपत्वात् । प्राणवृत्तेश्च चाञ्चल्यादनास्थापदमिति विषयेषु वराकेषु किं दोषोद्घोषणदौर्जन्येन । निजमेव तु जीवितमुपालम्भ्यम् । तदपि वा निसर्गचञ्चलमिति न सापराधमित्येतद्गाढं वैराग्यमिति ।

सहि णवणिहुवणसमरम्मि अंकपाली सहीए णिविडाए ।
हारो णिवारिओ च्चिय उव्वरयन्तो तदो कहं रमियं ॥

अङ्कपाली आलिङ्गनं सैव सखी निबिडा घना अन्तरङ्गा च। उद्ध्रियमाणः अधिकीभवन्। अत्र वस्तुना हारोच्छेदादनन्तरमन्यदेव रतमवश्यमभूत् तत् कथय कीदृगिति व्यतिरेकः कथम्पदगम्यः। तान्यक्षराणि हृदये किमपि ध्वनन्तीति। किमपीत्यत्राऽपिशब्देऽतिशयोक्तिः कविना यो निबद्धो वक्ता रागी तद्वशादाक्षेपालङ्कारं ध्वनति। तथा हि–तैरक्षरैर्यत् समर्पितं तस्याऽभीष्टमभिजल्पनीयत्वं प्रतिषिध्यमानम् अभिजल्पनीयताऽतिशय एव पर्यवस्यतीति।

शिखरिणीति। अत्र तवाधरपाटलमिति पदे समासोपमयाऽभिलाषात्मकं वस्तु ध्वन्यते। वाक्यप्रकाशतायामपि क्रमेणोदा[हरणानि]। शिखरिणि क नु नामेति। अत्र कविनिबद्धस्याऽनुरागिणो वक्तुरुक्तिशक्त्या यद्वस्तु वाक्यवाच्यं तेन स्वाभिप्रायरूपं वस्तु द्योत्यते। ईसाकलुसस्सेति। यदि वा

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम्।
पियदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरियं॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा चेति।

किमपीदं महद्भूतं तेजसां परमं पदम्।
उपाधिप्राप्तसङ्कोचमपि नोच्छेदमर्हति॥

एतद्वाक्यं कविनिबद्धस्य **बाणासुर**मन्त्रिणः **कुभाण्ड**स्य वक्तुः प्रौढोक्त्याऽतिशयोक्तिमभिदधानं परब्रह्मतेजसा सह **अनिरुद्ध**स्य रूपकाऽलङ्कारं ध्वनति।

स्मराराते: पादाम्बुजयुगसपर्यापरिकरे
प्रदीपादौ कश्चित् प्रमदमितरोऽभ्येतु विरसम्।
तथाऽस्यां भारत्यां शिवचरणचित्रस्तुतिविधौ
न चित्रोल्लासायामपि जनमतौ मेऽस्ति विकृतिः॥

अत्र कविना यो वक्ता स्वात्मैव निबद्धस्तत्प्रौढोक्तिवशाद्य उपमाख्योऽलङ्कारो वाक्यार्थस्तेनेदं वस्तु ध्वन्यते–अनवस्थितो हि लोकानामाशयो न शक्यो ग्रहीतुमिति जनापवादपरिरक्षणव्यसनमाद्रियमाणेन निजहृदयरूढस्वकर्त्तव्यविमुखेन धीरेण न भाव्यमिति। तत्रैव च स्वतःसम्भविना वस्तुना वस्तुनोऽलङ्कारस्य वाऽलङ्कारेणालङ्कारस्य वस्तुनो वा

१. समर्पितस्य ध्वनितस्य वस्तुनः॥ २. प्रतिषेध इवेष्टस्येत्याक्षेपलक्षणयोजना॥ ३. अतिशयोक्त्या अनिर्वाच्यत्वस्वरूपया॥

व्यङ्ग्यत्वे पदप्रकाशता यथा । वाणियय हत्थिदंतेति[1] । अत्र हि विलुलितालकमुखीत्येतत् पदं व्याधवध्वाः स्वतःसम्भावितशरीरार्थशक्त्या सुरतक्रीडासक्तिं सूचयत्तदीयस्य भर्तुः सततसम्भोगक्षामतां प्रकाशयति ।

लुप्तं धाम खलाननेष्वधिगतः स्वान्तेऽधिवासः सता–
मस्माभिः समुपासितो भवहरस्तत्त्वावबोधः परः ।
पीयन्ते जनजुष्यमाणविरजैस्तीर्थाधिकस्वादवः[2]
शब्दब्रह्मपरायणा यदि वयःशेषेऽपि शेषोक्तयः[3] ॥

इत्यत्र शब्दब्रह्मेतिपदस्यार्थो वस्तुमात्रस्वभावः स्वशक्तिमाहात्म्याद्धेत्वलङ्कारं ध्वनति । अर्थकामादिविद्योपार्जनं सत्यमनुचितं वयःशेषे, शेषोक्तिपरिशीलनं तु शब्दब्रह्मात्मपरतत्त्व-प्राप्त्युपायभूतं वयःशेषे यदा सेव्यते तद्यतिपदासेवनसब्रह्मचारि तत्रोचिततममेवेति[4] ।

रजनय इव सितकरकरधवलाः
कचवल्लर्यः सन्त्वथ तिमिरभरासितरुचयः ।
सङ्कुचितेऽपि वपुषि रमणीनां
नलिनीनामिव हृदि न मनागपि रागापचयः ॥

अत्र नलिनीनामिति पदस्याऽर्थ उपमानरूपः स्वभावशक्त्याऽतिशयोक्तिं ध्वनति । यदि विचार्यते तत्प्रत्युतान्तःस्थितो रागोऽपरिधूसरित एव सङ्कुचितकमलिनीवत् सातिशयः । स्थविरयोषितामिति सातिशयोक्तिर्हास्ये वा शान्ते वा धर्मवीरे वाऽङ्गमिति सैव प्रधानम् ।

सम्बन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरु-
र्गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः ।
सद्योमार्जितदाक्षिणात्यरमणीदन्तावदातद्युति-
श्चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडामणिः ॥

अत्र गौराङ्गीवदनोपमापरिचित इति पदेन योपमा प्रकाश्यते तया स्वसामर्थ्यात्तव वदनबिम्बतुल्यत्वादयं मे बहुमानास्पदमिति चाटुरूपोऽभिप्रायो द्योत्यते । वाक्यप्रकाशतायामपि

१. [वाणियय हत्थिदंता] कुत्तो अम्हाण वग्घकित्तीओ । जावि लुलियालयमुही घरम्मि परिसक्कए सुन्हा ॥ २. चतुर्थदिवसस्नाता स्त्री तीर्थम् ॥ ३. वयःशेषे तुल्यम् ॥ ४. ये शान्तं न प्रतिपन्नास्तन्मतेन । शान्तरसं ग. ॥

तोपी नेयं नियतमथवा तानि नैतानि नूनं
तीराण्यस्याः सविधविचलद्वीचिवाचालितानि ।
अन्यो वाऽहं किमथ न हि तद्वारिवेल्लद्बलाकं
यत्तत् पल्लीपतिदुहितरि स्नातुमभ्यागतायाम् ॥

अत्र वाक्यार्थेन वस्तुमात्ररूपेण अभिलषणीयजनकृतमेव भावानां हृद्यत्वं न स्वत इत्येतद्वस्तु व्यज्यते ।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहितश्च करः प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥

अत्र त्वमधन्याऽहं तु धन्येति व्यतिरेकालङ्कारः । हुमि अवहत्थियरे होइति । अत्र सकलवाक्यवाच्यो विभावनाऽलङ्कारः । तथा हि– मर्यादायोगः शास्त्राद्यायत्तता सविवेकत्वमिति तावत् प्रभुभक्तौ कारणानि । तदभावेऽपि प्रभुभक्तिर्मम स्वाभाविकीति सोऽर्थः स्वशक्तिवशाद्धेत्वलङ्कारं व्यनक्ति । यत एव हि मर्यादाशास्त्राङ्कुशयोगो विवेकश्चेति यौवनेन सर्वं निमज्यते । तत एव मदनचरितोद्दीपनतात्पर्यं यौवनस्येति ।

चंदमऊहेहीति । अत्र वाक्ये यो दीपकालङ्कारो वाच्यस्तेन स्वशक्तिबलादिदं वस्तु ध्वन्यते । सज्जनैर्विना काव्यमन्धतमसं पङ्कप्रायं नीरसकाष्ठतुल्यं सन्तापकारि । परं सज्जनैस्तु काव्यकथामात्रमपि तथा क्रियते येन तदेव सम्भोगस्थानं सर्वलक्ष्म्यास्पदं सर्वजनहृद्यं श्रोत्रमधुरं चेति । एवं चतुर्विंशतिरर्थशक्त्युद्भवप्रभेदाः । उभयशक्तिमूलस्तु वाक्यप्रकाश एवैकः । स च प्रागुदाहृत एव । एवं लक्ष्यक्रमव्यङ्ग्यस्य विवक्षितान्यपरवाच्यप्रभेदस्य ध्वनेरेकोनत्रिंशत् प्रकारा इति ।

ननु ध्वनिः काव्यविशेष इत्युक्तं, तत् कथं तस्य पदप्रकाशतेत्याह

अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम् ॥

अनिष्टस्येति अनिष्टार्थस्मारकस्य, दुष्टतामिति अचारुत्वम् । गुणमिति चारुत्वम् । यथा श्रुतिदुष्टानां पेलवादिपदानामसभ्यपेलाद्यर्थं प्रति स्मारकत्वं तद्वशाच्चाचारुरूपं काव्यम्, तच्च श्रुतिदुष्टत्वमन्वयव्यतिरेकाभ्यां भागे व्यवस्थाप्यते तथा प्रकृतेऽपीत्यर्थः । अधुनोपसंहरति

१. नदी ॥ २. सम्बोधनम् ॥ ३. काव्यं श्रुतिदुष्टं ग. ॥

पदानां स्मारकत्वेऽपि पदमात्रावभासिनः ।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ॥

पदमात्रेति । पदप्रकाशस्याऽपीत्यर्थः । अपिशब्दो ह्यत्र सम्बध्यते ।

विच्छित्तिशोभितैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥
यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥

आदिशब्देन पदैकदेशपदद्वितयादीनां ग्रहणम् । सप्तम्या निमित्तत्वमुक्तम् । तत्र वर्णानामनर्थकत्वाद् द्योतकत्वमसम्भवीत्याशङ्क्येदमुच्यते

शषौ सरेफसंयोगौ ट(ढ)कारश्चाऽपि भूयसा ।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसश्च्युतः ॥
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।
तदा तं दीपयन्त्येव तेन वर्णा रसश्च्युतः ॥

श्लोकद्वयेन व्यतिरेको[1]न्वयाभ्यां वर्णानां द्योतकत्वमादर्शितं भवति । पदे च द्योतनं यथा—उत्कम्पिनी भयेति । अत्र हि ते इत्येतत् पदं रसमयत्वेन स्फुटमेवाऽवभासते सहृदयानाम् । तथाहि—**वासवदत्ता**दाहाकर्ण्णनप्रबुद्धशोकनिर्भरस्येदं **वत्सराजस्य** परिदेवितवचनम् । तत्र च शोको नामेष्टजनविनाशप्रभव इति तस्य जनस्य ये भ्रूक्षेपकटाक्षप्रभृतयः पूर्वं रतिविभावतामवलम्बन्ते स्म, त एवाऽत्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया निरपेक्षभावत्वप्राणं करुणमुद्दीपयन्तीति स्थिते, ते लोचने इति तच्छब्दस्तल्लोचनगतस्वसंवेद्याऽव्यपदेश्याऽनन्तगुणगणस्मरणाकारद्योतको रसस्यासाधारणनिमित्ततां प्राप्तस्तेन यत् किञ्चि[2]च्चोदितं परिहृतं च तन्मिथ्यैव । तथा हि— **चोद्यं प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति सामर्थ्यमिति** । उत्तरं च—**रसाविष्टोऽत्र परामृष्टेति** । तदुभयमनुत्थानोपहतम् । य[4]त्र ह्यनुदेक्ष्यमाणधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं वस्तुनो यच्छब्देनाऽभिधाय तद् बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते । य[5]त्रोच्यते यत्तदोर्नित्याऽभिसम्बन्धादिति, तत्र पूर्वप्रक्रान्तपरामर्शकत्वं तच्छब्दस्य । यत्र पुन[6]र्निमित्तोपनतस्मरणविशेषाकारसूचकत्वं तच्छब्दस्य

---

१. श्रृङ्गारविषये शषादिप्रयोगः सुकवित्वमभिवाञ्छता न कर्त्तव्य इत्येवंफलत्वादुपदेशस्य पूर्वं व्यतिरेक उक्तः । उक्तोऽन्यत्र हि अन्वयव्यतिरेकेति ग. ॥ २. केनचित् ख. ग ॥ ३. वत्सराजः ख ॥ ४. यः पुमानुत्तमप्रकृतिः सोऽवश्यं जितेन्द्रियत्वादिगुणगणवान् भवति । अत्र हि पश्चान्निर्देक्ष्यमाणबुद्धिस्थजितेन्द्रियत्वादिधर्मान्तरसम्बन्धार्हमुत्तमप्रकृतित्वं धर्मः ख. ॥ ५. कुत इहोभयप्रयोग इत्याशङ्कायां यत्र समाधीयते ख. ॥ ६. इष्टविनाशप्रभवशोकादि ख. ॥

स घट इत्यादौ यथा तत्र का परामर्शकत्वकथेत्यास्तामलीकपरामर्शकैः **पण्डितंमन्यैः** सह मिथ्याविवादेन । उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणं मयाऽनिर्वाहितप्रतीकारमिति शोकावेगस्य विभावः, ते इति सातिशयविभ्रमैकायतनरूपे अपि लोचने विधुरं कान्दिशीकतया निर्लक्ष्ये क्षिपन्ती कस्मातात् कासावार्यपुत्र इति तयोर्लोचनयोस्तादृशी चावस्थेति सुतरां शोकोद्दीपनं, तीक्ष्णेनेति तस्याऽयं स्वभाव एव किं कुरुतां तथाऽपि च धूमेनान्धीकृतो द्रष्टुमसमर्थ इति न तु सविवेकस्य ईदृशाऽनुचितकारित्वं सम्भाव्यत इति स्मर्यमाणं तदीयं सौन्दर्यमिदानीं साऽतिशयशोकावेगविभावतां प्राप्तमिति ते शब्दे सति सर्वोऽयमर्थो निर्व्यूढः।

यथा वा

झगिति कनकचित्रे तत्र दृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः ।
पवनविलुलितानामुत्पलानां पलाशैः
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥

पदावयवे च द्योतनं यथा

व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं स्तनकलशयोर्मन्युमन्तर्नियम्य ।
तिष्ठेत्युक्तं किमिति न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥

इत्यत्र त्रिभागशब्दः । तथा हि—गुरुजनमवधीर्यापि सा मां यथा तथाऽपि साभिलाषमन्युदैन्यगर्वमन्थरं विलोकितवतीत्येवंस्मरणेन परस्परहेतुकत्वप्राग्प्रवासविप्रलम्भोद्दीपनं त्रिभागशब्दसन्निधौ स्फुटं भातीति ।

वाक्यरूपश्चालक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धोऽलङ्कारान्तरसङ्कीर्णश्चेति द्विधा मतः । तत्र शुद्धस्योदाहरणम् । यथा—कृतककुपितैर्बाष्पाम्भोभिरिति[3] । एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रदर्शयत् सर्वत एव परं रसतत्त्वं प्रकाशयति । तथा तैस्तैः प्रकारैर्मात्रा

---

१. "वह्निः" ख पुस्तके एव ॥ २ अत्रापि ते इति पदं दृष्टिपातगतस्वसंवेद्याव्यपदेश्यगुणगणस्मरणाकारद्योतकं विप्रलम्भरसस्यासाधारणनिमित्ततां प्राप्तम् ख. ।–स्मरणाकारसूचकं–ग. ॥

३. '[ कृतककुपितैर्बाष्पाम्भोभिः ] सदैन्यविलोकितैः
वनमसि गता यस्य प्रीत्या धृतापि तथाम्बया ।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥' ख. पुस्तके एव ॥

धृताऽपीत्यनुरागपरवशत्वेन गुरुवचनोल्लङ्घनमपि त्वया कृतमिति । प्रिये प्रिय इति परस्परजीवितसर्वस्वाभिमानात्मको रतिस्थायिभाव उक्तः । नवजलधरेति । असोढपूर्वं प्रावृषेण्यजलदावलोकनं विप्रलम्भोद्दीपनविभावत्वेनोक्तम् । जीवत्येवेति । सापेक्षभावता एवकारेण करुणावकाशनिराकरणायोक्ता । अलङ्कारान्तरसङ्कीर्णो यथा

स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभि-
यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥

अत्र हि रूपकेण एकनलिनीनालानीतसलिलपानक्रीडादिसूचितानामपि हंसचक्रवाकादीनां रूपेण नायकयुगलकानामरूपितत्वान्नातिनिर्वहणैषितेति यथोक्तव्यञ्जकलक्षणानुगतेन प्रसाधितो रसः सुतरामभिव्यज्यते । स्मर एव नदीपूरः प्रावृषेण्यप्रवाहः, सरभसमेव प्रबुद्धत्वात् । तेन ऊढाः सांमुख्यमबुद्धिपूर्वमेव नीताः । अनन्तरं गुरव एव श्वश्रूप्रभृतयः सेतव इच्छाप्रसरनिरोधकत्वादथ च गुरवोऽलङ्घ्याः सेतवस्तैर्विधृताः प्रतिहतेच्छाः अत एवाऽपूर्णमनोरथास्तिष्ठन्ति । तथाऽपि परस्परोन्मुखतालक्षणेनाऽन्योन्यतादात्म्येन स्वदेहे सकलवृत्तिनिरोधाल्लिखितप्रायैरङ्गैर्नयनान्येव नलिनीनालानि तैरानीतं रसं परस्पराभिलाषलक्षणम् आस्वादयन्ति । परस्पराऽभिलाषात्मकश्लिष्टेच्छाामिश्रीकारयुक्त्याऽपि कालमतिवाहयन्तीति । "अलक्ष्यक्रमव्यङ्ग्यः सङ्घटनायां भासते ध्वनिः" इत्युक्तम् । तत्र सङ्घटना–स्वरूपमेव तावत् प्रथमं निरूप्यते ।

"असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ॥"

कैश्चिदित्यर्थः । तां केवलमनूद्येदमुच्यते ।

"गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा । रसान्" अत्र च विकल्प्यं, गुणानां सङ्घटनायाश्चैक्यं व्यतिरेको वा । व्यतिरेकेऽपि द्वयी गतिः । गुणाश्रया सङ्घटना सङ्घटनाऽऽश्रया वा गुणा इति । तत्रैक्यपक्षे सङ्घटनाश्रयगुणपक्षे च गुणानात्मभूतानाधेयभूतान् वाऽऽश्रित्य तिष्ठन्ती सङ्घटना रसादीन् व्यनक्तीत्ययमर्थः । यदा तु नानात्वपक्षो गुणाश्रयसङ्घ-

१. विभावादिभूषणद्वारेण । -विभूषण- ग. ॥ २. परस्पर ख. पुस्तके एव ॥ ३. गुणेभ्यो विविक्ततया विचार्यते ॥ ४. व्यतिरेकेऽपि ग. पुस्तके नास्ति ॥ ५. बहुवचनेनार्थः सङ्गृहीत इत्यादिपदम् क. ख । रसानिति बहुवचनेना–ग. ॥

टनापक्षश्च तदा राजाश्रयाऽमात्यादिप्रकृतिवर्गन्यायेन गुणानाश्रित्य तिष्ठन्ती गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः । किं पुनरेवं विकल्पनस्य प्रयोजनमित्यभिधीयते । यदि गुणाः सङ्घटना चेत्येकं तत्त्वं सङ्घटनाऽऽश्रया वा गुणास्तदा सङ्घटनाया इव गुणानामनियतविषयत्वप्रसङ्गः । गुणानां तु माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव । रौद्राद्भुतादिविषयमोजो, माधुर्यप्रसादौ रसभावतदाभासविषयावेवेति विषयनियमो व्यवस्थितः । सङ्घटनायास्तु स विघटते । तथा हि शृङ्गारेऽपि दीर्घसमासा सा दृश्यते, रौद्रादिष्वसमासा चेति । तत्र शृङ्गारे दीर्घसमासा यथा—मन्दारकुसुमरेणुपिञ्जरितालका इति । नात्र शृङ्गारः कश्चिदित्यन्यदुदाह्रियते ।

अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥ इत्यादौ ।

एषा हि प्रणयकुपितनायिकाप्रसादनायोक्तिर्नायकस्य । तथा रौद्रादिष्वप्यसमासा दृश्यते । यथा यो यः शस्त्रमित्यादौ । तस्मान्न सङ्घटनारूपा न च सङ्घटनाश्रया गुणा इति व्याख्यानद्वयमयुक्तमित्यर्थः । ननु यदि सङ्घटना गुणानां नाश्रयस्तत् किमालम्बना एते परिकल्प्यन्ताम् । उच्यते, प्रतिपादितमेवैषामालम्बनम् ।

"तमर्थमवलम्बन्ते येऽङ्गिनं त गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलङ्कारा: .... .... ॥" इत्यत्रान्तरे ।

अथवा भवन्तु शब्दाश्रया एव गुणाः । न चैषामनुप्रासादितुल्यत्वम् । यस्मादनुप्रासादयोऽनपेक्षितार्थशब्दधर्मा एव प्रतिपादिताः । गुणास्तु व्यङ्ग्यविशेषावभासिवाच्यप्रतिपादनसमर्थशब्दधर्मा एव । शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रितत्वमिव शौर्यादीनाम् । ननु यदि शब्दाश्रया गुणास्तत्सङ्घटनारूपत्वं तदाश्रितत्वं वा तेषां प्राप्तमेव । न

---

१. गुणायत्ता गुणमुखप्रेक्षिणी न त्वाधेयरूपा । न त्वाराधेयरूपा ग ॥ २. सङ्घटनाधर्मा इत्यर्थः । ३. प्रथमपक्षे तादात्म्येन समानयोगक्षेमत्वादितरत्र तु तद्धर्मत्वेनेति भावः ॥ ४. योऽयं गुणेषु नियम उक्तः ॥ ५. शब्दार्थालम्बनत्वे हि तदलङ्कारेभ्यः को विशेष इति भावः । ६. नायमाचार्यस्य स्थितः पक्षः । आत्मनिष्ठत्वेऽपि ॥ ७. ततः ॥ ८. ननु शब्दैर्धर्मत्वं शब्दकात्मकत्वं वा तावतास्तु, किमियं मध्ये सङ्घटनानुप्रवेशितेत्याशङ्क्य स एव पूर्वपक्षत्वाद्याह नहीति । उपचारेण यदि शब्देषु गुणास्तदेदं तात्पर्यं शृङ्गारादिरसाभिव्यञ्जकवाच्यप्रतिपादनसामर्थ्यमेव शब्दस्य माधुर्यं. तच्च शब्दगतम् । विशिष्टैव सङ्घटना लभ्यते । अथ सङ्घटना न व्यतिरिक्ता काचिदपि तु सङ्घटिता एव शब्दास्तदा शब्दाश्रितं तत् सामर्थ्यमिति सङ्घटनाश्रितमेवेत्युक्तं भवतीति तात्पर्यम् । वाक्यार्थो न तु सामान्यरूपः पदार्थः । वाक्यत्वमनापन्नाः । पदानि । [?]

ह्यसङ्घटिता शब्दा अर्थविशेषप्रतिपाद्यरसाश्रितानां गुणानामवाचका आश्रयो भवन्ति। नैवं वर्ण्णपदव्यङ्ग्यत्वस्य रसादीनां प्रतिपादितत्वात्। अभ्युपगते वा[2] वाक्यव्यङ्ग्यत्वे रसादीनां नियता काचित् सङ्घटना तेषामाश्रयत्वं न प्रतिपद्यत इत्यनियतसङ्घटनाः शब्दा[3] एव, गुणानां[4] व्यङ्ग्यविशेषाऽनुगता आश्रयः।

ननु माधुर्ये यदि नामैवमुच्यते तदुच्यतां, ओजसः पुनः कथमनियतसङ्घटनशब्दाश्रयत्वम्। न ह्यसमासा सङ्घटना कदाचिदोजस आश्रयतां प्रतिपद्यते। उच्यते—यदि न प्रसिद्धिमात्रग्रहदूषितं चेतस्तदाऽत्राऽपि न न ब्रूमः। ओजसः कथमसमासा सङ्घटना नाश्रयः। रौद्रादीन् हि प्रकाशयन्[5]तः काव्यस्य दीप्तिरोज इति प्राक् प्रतिपादितम्। तच्चौजो यद्यसमासायामपि सङ्घटनायां स्यात्तदा को[6] दोषो भवेत्। न चा[7]ऽचारुत्वं सहृदयसंवेद्यमस्ति। तस्मादनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित् क्षतिः। तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य स्वरूपस्य न कदाचिद् व्यभिचारः। तस्मादन्ये गुणा अन्या च सङ्घटना, न च सङ्घटनामाश्रिता गुणा इत्येकं दर्शनम्।

अथ[8]वा सङ्घटनारूपा एव गुणाः। यत्तूक्तं सङ्घटनाव[9]द् गुणानामप्यनियतविषयत्वं प्राप्नोति। लक्ष्ये व्यभिचारदर्शनादिति। तत्राऽप्येतदुच्यते। यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तद्विरू[10]पमेवास्तु। कथमचारुत्वं तादृशे विषये सहृदयानां न प्रतिभातीति चेत्, कविश[11]क्तितिरोहितत्वात्। द्विविधो हि दोषः कवेर[12]व्युत्पत्तिकृतोऽशक्तिकृतश्च। तत्राव्युत्पत्तिकृतः शक्तितिरस्कृतत्वात् कदाचिन्न लक्ष्यते। यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते। परिकरश्लोकश्चात्र।

---

१. शब्दार्थालम्बनत्वे हि शब्दार्थालङ्कारेभ्यः को विशेष इति। ग. ॥ २. ननु वाक्यव्यङ्ग्यध्वनौ तद्यवश्यमनुप्रवेष्टव्यं सङ्घटनया, स्वसौन्दर्यं वाच्यसौन्दर्यं वा तया विना कुत इत्याह—अभ्युपगते वेति। वाशब्दोऽपिशब्दस्यार्थे वाक्यव्यङ्ग्यत्वेऽपीत्येवं योज्यः। एतदुक्तं भवति। अनुप्रविशतु तत्र सङ्घटना, तथाऽपि माधुर्यस्य न नियता सङ्घटना आश्रयो वा स्वरूपं वा वर्णपदव्यङ्ग्यत्वद्वाक्यव्यङ्ग्येऽपि रसादौ सङ्घटनां विहायापि वाक्यस्य तत्तद्रसव्यञ्जकत्वात्। ३ सङ्घटना सन्निहितापि रसव्यक्तावप्रयोजिकेति तस्मादौपचारिकत्वेऽपि शब्दाश्रया एव गुणा इत्युपसंहरति—शब्दा एवेति। वर्णानां रसाभिव्यक्तिहेतुत्वमेव पदानां रसाभिव्यक्तियोग्यार्थावभासकत्वमेव च माधुर्यादीति किं सङ्घटनया। विशेषणद्वारको हेतुरयम्। उपचारेणाऽपीत्यर्थः। शुद्धं न तु सङ्घटितम्। सङ्घटितम् इत्यर्थः ग. ॥ ४. गुणानाम्। अवाचकान्यपि वर्णपदानि रसाश्रितानां गुणानामाश्रयो भवन्तीति भावः ॥ ५ लक्षणहेत्वोरिति शतृप्रत्ययस्तेन रौद्रादिप्रकाशनालक्ष्यमाणमोज इति भावः ॥ ६. किमचारुत्वम् ॥ ७ चो हेतौ, यस्माद्यो यः शस्त्रमित्यादौ न चारुत्वं भाति तस्मादित्यर्थः ॥ ८ अथेत्यर्थः। ९. रसाभिव्यक्तावेतदेव सामर्थ्यं शब्दानां यत्तथा तथा सङ्घटमानत्वमिति भावः ॥ १०. अचारु ॥ ११. शक्तिः प्रतिभानं वर्णनीयवस्तुविषयनूतनोल्लेखशालित्वम् ॥ १२. व्युत्पत्तिः प्रतिभानोपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलम्। ततोऽन्याऽव्यु[त्प]त्तिः ग. ॥

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झगित्यवभासते ॥

तथाहि महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनाद्यनौचित्य-मुत्तमदेवीविषयं शक्तितिरस्कृतत्वाद् ग्राम्यत्वेन न प्रतिभासते। यथा—कुमारसम्भवे देवीसम्भोगवर्णनम् । एवमादौ च विषये यथौचित्यत्यागस्तथा दर्शितमेव प्राक् । शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते । तथाहि शक्तिरहितेन कविनैवंविधे विषये शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते ।

नन्वस्मिन् पक्षे यो यः शस्त्रं बिभर्तीत्यादौ किमचारुत्वम् । अप्रतीयमानमेवारोपयामः । तस्माद् गुणव्यतिरिक्तत्वे सङ्घटनाया नियमहेतुरेव नास्ति, गुणरूपत्वे वा न रसो नियमहेतुरित्यन्यः कश्चिद्वक्तव्य इत्युच्यते । तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः । तत्र वक्ता कविः कविनिबद्धो वा । कविः कविनिबद्धश्चापरसभावो रसभावसमन्वितो वा । रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा । कथानायकश्च *धीरोदात्तादिभेदभिन्नः पूर्वस्तदितरो वेति विकल्पाः ।

वाच्यं च ध्वन्यात्मभूतरसाङ्गं रसाभासाङ्गं वा । अभिनेयार्थमनभिनेयार्थं वा । उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम् । तत्र यदा कविरपरसभावो वक्ता तदा रचनायाः कामचारः । यदाऽपि कविनिबद्धो वक्ता रसभावरहितस्तदा स एव । यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितः, रसश्च प्रधानाश्रितत्वाद् ध्वन्यात्मभूतस्तदा नियमेनैव तत्रासमासामध्यमसमासे एव सङ्घटने ।

करुणविप्रलम्भशृङ्गारयोस्त्वसमासैव सङ्घटना । कथमिति चेत्, उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः । एवं च दीर्घसमासा सङ्घटना समासानामनेकप्रकारसम्भावनया रसप्रतीतिं कदाचिद् व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः शोभते, विशेषतोऽभिनेयार्थे काव्ये, तत्राऽन्यत्र च विशेषतः करुणविप्रलम्भशृङ्गारयोः । तयोर्हि सुकुमारत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति ।

रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासा सङ्घटना । कदाचिद्धीरोद्धतनायक-

१. कवेः ॥ २. सम्भोगो ह्यसौ तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति ॥ ३. सङ्घटनारूपगुणपक्षे ॥ ४. सोत्प्रासेयमाचार्यस्योक्तिः । पूर्वापरपरामर्शविवेकशालिभिरपि यन्न प्रतीयते तदारोपयितुं न शक्यत एवेति भावः ॥ ५. सङ्घटना ॥ ६. प्रधानवाक्यार्थमाश्रितः ॥ ७. रसास्वादने विघ्नरूपाः ॥ ८. विपरीताऽऽस्वादमयाः ॥ ९. अनभिनेयार्थे ॥ *वी. ग. ॥

सम्बद्धव्यापाराश्रयेण दीर्घसमासाऽपि वा। तदा[1]क्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या। सर्वासु च सङ्घटनासु प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारणः सर्वसङ्घटनासाधारणश्चेत्युक्तम्। प्रसादातिक्रमे ह्यसमासाऽपि सङ्घटना करुणविप्रलम्भशृङ्गारौ न व्य[2]नक्ति। तदपरित्यागे मध्यमसमासापि न न [तत्?] प्रकाशयति। तस्मात् सर्वत्र प्रसादोऽनुसर्त्तव्यः। अत एव च यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमद इत्यादौ यद्योजसः स्थितिर्नेष्यते, तत्प्रसादाख्य एव गुणो न माधुर्यम्। न चाऽचारुत्वम[3]भिप्रेतरसप्रकाशनात्। तस्मात् सङ्घटनाया यथोक्तादौचित्याद्विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम्। तस्याश्च रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरु[4]द्धम्।

नियामकान्तरमप्यस्तीत्याह

विष[6]याश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥

वक्तृवाच्यगतौचित्ये सत्यपि विषयाश्रितम[5]न्यदौचित्यं सङ्घटनां नियच्छति। यतः काव्यस्य प्रभेदाः—मुक्तकं संस्कृतप्राकृताऽपभ्रंशनिबद्धं संदानितकविशेषककलापककुलकानि पर्याबन्धः परिकथा खण्डकथासकलकथे सर्गबन्धोऽभिनेयार्थमाख्यायिकाकथे इत्येवमादयः। तदाश्रयेणापि सङ्घटना विशेषवती भवति। द्वाभ्यां क्रियासमाप्तौ सन्दानितकम्। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। पञ्चप्रभृतिभिः कुलकम्। इति क्रियासमाप्तिकृता भिद इति द्वन्द्वेन निर्दिष्टाः। अवान्तरक्रियासमाप्तावपि वसन्तवर्णनाद्येकवर्णनीयोद्देशेन प्रवृत्तः पर्याबन्धः। एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणाऽनन्तवृत्तान्तवर्ण्णनप्रधाना परिकथा। एकदेशवर्णना खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना सकलकथा। द्वयोरपि प्राकृतप्रसिद्धत्वाद् द्वन्द्वेन निर्देशः। पूर्वेषां तु मुक्तकादीनां भाषायामनियमः। महाकाव्यरूपः पुरुषार्थफलः समस्तवस्तुवर्ण्णनाप्रधानः सर्गबन्धः संस्कृत एव।

अभिनेयार्थं नाटकादिदशरूपकं नाटिकातोटकरासकप्रकरणिकाद्यवान्तरप्रपञ्च-

---

१. तस्या दीर्घसमाससङ्घटनाया य आक्षेपस्तेन विना यो न भवति व्यङ्ग्याभिव्यञ्जकस्तादृशो रसोचितो रसव्यञ्जकतयोपादीयमानो वाच्यस्तस्य यासावपेक्षा दीर्घां सङ्घटनां प्रति, सा वैगुण्ये हेतुः॥ २. व्यञ्जकस्य स्ववाच्यस्यैवाप्रत्यायनादिति भावः। —स्ववाच्यस्यैवाप्रतिपादनादिति-ग॥ ३. प्रसादेनैव स रसः प्रकाशितो न न प्रकाशित इत्यर्थः॥ ४. यदि गुणाः सङ्घटनैकरूपास्तथाऽपि गुणनियम एव सङ्घटनाया नियमः। गुणाधीनसङ्घटनापक्षेऽप्येवं सङ्घटनाया नियामकत्वेन यद्वक्तृवाच्यौचित्यं हेतुत्वेनोक्तं तद्गुणानामपि नियमहेतुरिति पक्षत्रयेऽपि न कश्चिद्विप्लव इत्येतद्गुणानाश्रित्य तिष्ठन्तीत्यर्थाविरोधप्रतिपादकस्य गुणाश्रयेण व्यवस्थानमप्यविरुद्धमित्यस्य तात्पर्यम्। —विप्लव इति तात्पर्यम्। ग.॥ ५. संघातविशेषः काव्यप्रभेदरूपः। ख. पुस्तके एव॥ ६. विषयाश्रयमप्यन्य-ख.॥

सहितमनेकभाषाभ्यामिश्रबन्धरूपम् । आख्यायिका उच्छ्वासादिना वक्त्राऽ[1]परवक्त्रादिना च युक्ता । कथा तद्विरहिता । उभयोरपि गद्यबन्धरूपतया द्वन्द्वेन निर्देशः । आदिग्रहणाच्चम्पूः । तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्[2]तदाश्रयमौचित्यं, तच्च [3]दर्शितमेव । [4]अन्यत्र कामचारः । मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाऽभिनिवेशिनः कवयो दृश्यन्ते । तथाहि **अमरुक**कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव । सन्दानितकादिषु तु विकटनिबन्धौचित्यान्मध्यमसमासादीर्घसमासे एव रचने[5] । [6]प्रबन्धाश्रितेषु तु यथोक्तप्रबन्धविशेषौचित्यमेवाऽनुसर्त्तव्यम् । पर्याबन्धेषु पुनरसमासामध्यमसमासे एव । कदाचिदर्थौ[7]चित्याश्रये दीर्घसमासायामपि सङ्घटनायां परुषा ग्राम्या च वृत्तिः परिहर्त्तव्या । परिकथायां कामचारस्तत्रेतिवृत्तमात्रोपन्यासे नात्यन्तं रसबन्धाभिनिवेशात् । खण्डकथासकलकथयोस्तु प्राकृतप्रसिद्धयोः कुलकादिनिबन्धनभूयस्त्वादीर्घसमासाया अपि न विरोधः । [8]वृत्त्यौचित्यं तु यथारसमनुसर्त्तव्यम् । सर्गबन्धे तु [9]रसतात्पर्ये यथारसमौचित्यम् । [10]अन्यथा तु कामचारः । [11]द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनाद्रसतात्पर्यं साधीयः अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः । आख्यायिकाकथयोस्तु गद्यनिबन्धबाहुल्याद्गद्ये च छन्दोबन्धविभिन्नप्रस्थानत्वान्नियमहेतुरकृतपूर्वोऽपि मनाक् प्रक्रियते ।

एतद्यथोक्तमौचित्यमेव तस्या नियामकम् ।
सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिते ॥

यदेतदौचित्यं वक्तृवाच्यगतं सङ्घटनाया नियामकमुक्तमेतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षं नियमहेतुः । तथा ह्यत्रापि यदा कविः कविनिबद्धो वा वक्ता रसभावरहितस्तदा कामचारः । रसभावसमन्विते तु वक्तरि पूर्वोक्तमेवाऽनुसर्त्तव्यम् । [12]अत्राऽपि च विषयौचित्यमेतत् । आख्यायिकायां भूम्ना मध्यमसमासादीर्घसमासे एव सङ्घटने । गद्यस्य विकटनिबन्धाश्रयेण छायावत्त्वात् । तत्र च तस्य प्रकृष्यमाणत्वात् । कथायां तु विकटनिबन्धप्राचुर्येऽपि गद्यस्य [13]रसबन्धोक्तमौचित्यमनुसर्त्तव्यम् ।

रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचनाविषया[14]पेक्षं तत्[15]तु किञ्चिद्विभेदवत् ॥

---

१. छन्दोविशेषः ॥ २. रसाश्रयम् ॥ ३. विशेषतः करुणविप्रलम्भशृङ्गारयोरित्यत्र ग्रन्थे ॥ ४. रसबन्धानभिनिवेशे ॥ ५. असमासायां हि सङ्घटनायां मन्थररूपा प्रतीतिः क्रियापदमनुधावन्ती वाच्य एव विश्रान्ता सती न रसतत्त्वचर्वणायोग्या स्यादिति भावः ॥ ६. मुक्तकादिषु कुलकान्तेषु । ७. रौद्रादिविषये ॥ ८. परुषादयः । -पा ग. ॥ ९. रघुवंशादौ ॥ १०. कथामात्रतात्पर्ये कादम्बरीकथासारादौ । कादम्बरीसारादौ ग. ॥ ११. सप्तमीयम् ॥ १२. एतयोः सतोऽपि च ॥ १३. स्थितं पक्षं दर्शयति । स्थितपक्ष द-ग. ॥ १४. विषयमपेक्षते सहकारितया ॥ १५. तदेव ॥

अथवा[1] पद्यवद्गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं[2] सर्वत्र संश्रिता रचना भाति । तत्तु[3] विषयापेक्षं किञ्चिद्विशेषवद्भवति[4] । न तु सर्वाकारम् । तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना न विप्रलम्भशृङ्गारकरुणयोराख्यायिकायामपि शोभते[5] । नाटकादावप्य[6]समासैव[7] न च वीररौद्रादिर्वर्णने । विषयापेक्षं त्वौ[8]चित्यं[9] प्रमाणतो[10]ऽपकृष्यते । प्रकृष्यते च तथा ह्याख्यायिकायां[11] नात्यन्तमसमासा, स्वविषयेऽपि नाटकादौ[12] नाऽतिदीर्घसमासा चेति सङ्घटनाया दिगनुसर्त्तव्या ।

> इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी ।
> सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः ।। इति ।

एवं सङ्घटनायां च अलक्ष्यक्रमो दीप्यत इति निर्णीतम् । प्रबन्धे दीप्यत इति तु निर्विवादसिद्धोऽयमर्थः **रामायणमहाभारतादौ** प्रकाशमानस्याऽस्य प्रसिद्धत्वादिति नाऽत्र वक्तव्यं किञ्चिदस्ति । केवलं कविसहृदयान् व्युत्पादयितुं रसव्यञ्जने येतिकर्त्तव्यता प्रबन्धस्य सा निरूप्येत्याह—**विभावभावानुभावे**ति । **इतिवृत्ते**ति । **सन्धिसन्ध्यङ्गे**ति । **उद्दीपने**ति । **अलङ्कृतीनाम्** इति । **अनौचित्याद्** इति । **कथाशरीरमि**ति । **सन्ति सिद्धे**ति । एतद्धि सर्वमेव व्याख्यातचरं तत्र तत्रेति ।

> अनुस्वानोपमात्माऽपि प्रभेदो य उदाहृतः ।
> ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ।।

विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्यो यः प्रभेद उदाहृतोऽर्थादर्थशक्त्युद्भवो द्वादशप्रकारः सोऽपि केषुचित् प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु व्यङ्ग्यतया स्थितः सन् अस्य अलक्ष्यक्रमस्य प्रकृतस्य व्यञ्जकतया भासते तत्पर्यवसायी भवतीत्यर्थः ।

तत्र दिङ्मात्रं यथा—**मधुमथनविजये**

> लीलादाढग्गुव्वूढसयलमहिमंडलस्स चिअ अज्ज ।
> कीस मुणालाहरणं पि तुज्झ गरुआइ अंगम्मि ।।

---

१. स्थितपक्षपक्षस्य द्योतकः । स्थितपक्षस्य द्योतकोऽयं शब्दः ग । यथा

> स्त्रियो नरपतिर्वह्निर्विषं युक्त्या निषेवितम् ।
> स्वार्थाय यदि वा दुःखसम्भारायैव केवलम् ।।

२. वक्तृवाच्यगतौचित्यापरपर्यायम् ।। ३. तर्हि विषयौचित्यं सर्वथैव त्यक्तं नेत्याह तत्त्विति ।। ४. अवान्तरवैचित्र्यवत् ।। ५. अपि तु मध्यमसमासा ।। ६. गद्ये ।। ७. न तु मध्यमसमासा ।। ८. किन्तु मध्यमसमासा ।। ९ रसौचित्या व्यतिरेकः ।। १०. युक्त्या ।। अनन्तरं दर्शितयोः ।। ११. दर्शयिष्यमाणयोः ।। १२. किं च अनु-ग. ।।

इत्यादयः **पाञ्चजन्योक्तयो** **रुक्मिणीविप्रलब्धवासुदेवा**शयप्रतिभेदनाऽभिप्रायमभिव्यजन्ति । सोऽभिव्यक्तः प्रकृतरसस्वरूपपर्यवसायी ।

यथा वा—कामदेवस्य मधुयौवनमलयानिलादिसहचरसमागमे **विषमबाणलीलायां** हुमि अवहत्थिअरेहो इत्यादयो यौवनोक्तयस्तत्तन्निजस्वभावव्यञ्जिकाः । स स्वभावः प्रकृतरसपर्यवसायी । यथा च—गृध्रगोमायुसंवादादौ **महाभारते** । तथा हि श्मशानाऽवतीर्णं पुत्रदाहार्थं भोगिनं विप्रलब्धुं गृध्रो दिवा शवशरीरभक्षणार्थी शीघ्रमेवाऽपसरत यूयमित्याह ।

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ इत्याद्यनेकमवोचत् ।

जम्बुकस्तु निशोदयावधिममी तिष्ठन्तु, ततोऽहं गृध्रादपहृत्य भक्षयिष्यामीत्यभिप्रायेणावोचत् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
इमं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं बालास्त्यक्ष्यध्वं पितृपिण्डदम् ॥ इत्यादि ।

स चाऽभिप्रायोऽभिव्यक्तः शान्तरस एव परिनिष्ठां प्राप्तः ।

एवमलक्ष्यक्रमव्यङ्ग्यस्य रसादिध्वनेर्यद्यपि वर्णेभ्यः प्रभृति प्रबन्धपर्यन्तं व्यञ्जकवर्गे निरूपिते न निरूपणीयान्तरमवशिष्यते, तथापि कविसहृदयानां शिक्षां दातुं पुनरपि सूक्ष्मदृशाऽन्वयव्यतिरेकावाश्रित्य व्यञ्जकवर्गमाह ।

सुप्तिब्[ङ्]वचनसम्बन्धैस्तथा कारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥

चकारान्निपातोपसर्गकालादिभिरित्यर्थः । यथा न्यक्कारो ह्ययमेवेति । अत्र हि श्लोके भूयसा सर्वेषाममीषां स्फुटमेव व्यञ्जकत्वं दृश्यते । तथा हि—मम अरयः इति । शत्रुशत्रुमद्भावो ममाऽनुचित इति सम्बन्धानौचित्यं क्रोधविभावं व्यनक्ति अरयः इति बहुवचनम् । तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्धितेन मत्वर्थीयेनाऽभिव्यक्तम् । तत्रापि-

१. वीर ॥ २. शृगाल ॥

शब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्ताऽसम्भाव्यमानत्वमभिव्यक्तम्। मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता। तस्यां च स कर्ता। अपि-शब्देन मानुषमात्रकः। अत्रैवेति मदधिष्ठितो देशोऽधिकरणम्। निःशेषेण हन्यमानतया राक्षसबलं च कर्मेति। तदिदमसम्भाव्यमानमुपनतमिति पुरुषकारासम्पत्तिर्ध्वन्यते तिद्[ङ्]भ्यां कारकशक्तिप्रतिपादकैश्च शब्दैः। **रावण** इति त्वर्थान्तरसङ्क्रमितवाच्यत्वं पूर्वमेव व्याख्यातम्। धिग्धिगितिनिपातस्य **शक्रजित**मित्युपपदसमासेन सह क्तेतश्च शक्रं जितवानित्याख्यायिकेयमित्येतत् प्रति व्यञ्जकत्वम्। स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम्। ग्रामटिकेति स्वार्थिकतद्धितप्रयोगस्य स्त्रीप्रत्ययसहितस्याऽबहुमानास्पदत्वं प्रति व्यञ्जकत्वम्। विलुण्ठनशब्दे विशब्दस्योपसर्गस्य निर्दयावस्कन्दव्यञ्जकत्वम्। वृथाशब्दस्य निपातस्य स्वात्मपौरुषनिन्दां प्रति व्यञ्जकता। भुजैरिति बहुवचनेन प्रत्युत-भारमात्रमेतदिति व्यज्यते। तेन तिलशस्तिलशोऽपि निर्भज्यमानेऽत्र श्लोके सर्व एवांशो व्यञ्जकत्वेन भातीति किमन्यत्।

दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधा बन्धप्रकाराः। यथा

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः।
श्वः श्वः पापीयदिवसा **पृथिवी** गतयौवना॥

अत्र हि कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्यः, पृथिवी गतयौवनेत्यनेन च पदेनाऽत्यन्त-तिरस्कृतवाच्यो ध्वनिप्रकारः प्रकाशितः। अतिक्रान्तं न तु कदाचन वर्त्तमानतामवलम्ब-मानं सुखं येषु ते। काला इति। सर्व एव, न तु सुखं प्रति वर्त्तमानो नाम कोऽपि काललेश इत्यर्थः। प्रतीपान्युपस्थितानि निवृत्तानि प्रत्यावर्त्तमानानि तथा दूरभावीन्यपि प्रत्युपस्थितानि निकटतया वर्त्तमानीभवन्ति। दारुणानि दुःखानि येषु तेन दुःखं बहुप्रकारमेव। प्रतिवर्त्त-मानरूपाः सर्वे कालांशा इत्यनेन कालस्य तावन्निर्वेदमभिव्यञ्जतः शान्तरसव्यञ्जकत्वम्। देशस्याप्याह—पृथिवी श्वः श्वः प्रातः प्रातर्दिनादिनं पापीयदिवसा पापानां सम्बन्धिनः पापिष्ठजनस्वामिका दिवसा यस्यां सा तथोक्ता। स्वभावत एव तावत् कालो दुःखमय-स्तत्राऽपि तु पापिष्ठजनस्वामिकपृथिवीलक्षणदेशदौरात्म्याद्विशेषतो दुःखमय इत्यर्थः। तथा हि—श्वः श्व इति दिनादिनम्। गतयौवना वृद्धस्त्रीवदसम्भाव्यमानसम्भोगा। गत-यौवनाया हि यो यो दिवस आगच्छति स पूर्वपूर्वापेक्षया पापीयो निकृष्टत्वात्।

केवलस्य सुबन्तस्य यथा

---

१. कृत्प्रत्ययस्य च॥ २. व्यङ्ग्यम्॥

तालैः सिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे

यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥

अत्र तालैरिति बहुवचनमनेकभङ्गिवैदग्ध्यं ध्वनद्विप्रलम्भोद्दीपकतामेति ।

तिङन्तस्य यथा

अवयस रोत्तुंचिय णिम्मियाइं मा फुससु मेह अच्छीइं ।
दंसणमेत्तुम्मइएहिं जेहिं हिययं तुह ण णायं ॥
अपकस रोदितुमेव निर्मिते मा पुंसयहते अक्षिणीमे ।
दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयमेवंरूपं न ज्ञातम् ॥ [छाया]

उन्मत्तो हि न किञ्चिज्जानातीति न कस्याऽप्यत्राऽपराधो दैवेनेत्थमेव निर्माणं कृतमिति । अपकस मा वृथा प्रयासं कार्षीः दैवस्य विपरिवर्त्तयितुमशक्यत्वादिति तिङन्तो व्यञ्जकस्तदनुगृहीतानि तु पदान्तराण्यपीति भावः । यथा वा

मा पंथ रुंध महं अवेहि वालय अहो सि अहिरीओ ।
अम्हे अणिरिक्काओ सुण्णहरं रक्खियव्वं ण्णो ॥
मा पन्थानं रुधः अपेहि बालक अप्रौढ अहो असि अह्रीकः ।
वयं परतन्त्राः, यतः शून्यगृहमस्माकं रक्षणीयं वर्त्तते ॥ [छाया]

इत्यत्र अपेहीति तिङन्तं इदं ध्वनति । त्वं तावदप्रौढो लोकमध्ये यदेवं प्रकाशयसि, अस्ति तु सङ्केतस्थानं शून्यगृहं तत्रैवाऽऽगन्तव्यमिति ।

सम्बन्धस्य यथा

अन्नत्थ वच्च वालय ण्हायंति कीस मं पुलोएसि ।
एयं भो जायाभीरुयाणत्तहं चिय न होइ ॥

अन्यत्र व्रज बालक अप्रौढबुद्धे, स्नान्तीं मां किं प्रकर्षेण लोकयसि ।
एतत् भोः इति सोल्लुण्ठनमाह्वानं जायाभीरुकाणां सम्बन्धि तटमेव न भवति ॥ [छाया]

अत्र जायातो ये भीरवस्तेषामेतत् स्नानस्थानमिति दूरापेतः सम्बन्धः इत्यनेन सम्बन्धेनैवेर्ष्यातिशयः प्रच्छन्नकामिन्याभिव्यक्तः । जायाभीरुकाणामित्यत्र तद्धितस्याऽपि व्यञ्जकत्वम् । ये ह्यरसज्ञा धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्यः कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽवज्ञातिशयद्योतकः ।

निपातानां यथा—

अयमेकपदे तया वियोगः प्रियया चोपनतोऽतिदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

---

१. अपसर ॥

अत्र द्वौ च शब्दावेवमाहतुः। काकतालीयन्यायेन गण्डस्योपरि स्फोट इतिवद्वियोगश्च वर्षासमयश्च समुपनतमेतदलं प्राणहरणाय। अत एव रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तम्। यथा वा

मुहुरङ्गुलिसंवृताधरौष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु॥

अत्र तुशब्दः पश्चात्तापसूचकः संस्तावन्मात्रपरिचुम्बनलाभेनाऽपि कृतकृत्यता स्यादिति ध्वनतीति भावः। निपातानां द्योतकत्वं वैयाकरणादिषु प्रसिद्धमपीह रसापेक्षया उक्तमिति द्रष्टव्यम्। उपसर्गाणां यथा

प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः इति।

अत्र प्रकर्षेण स्निग्धा इति प्रशब्दः प्रकर्षं द्योतयन्निङ्गुदीफलानां सरसत्वमाचक्षाणः आश्रमस्य सौन्दर्याऽतिशयं ध्वनति। तापसस्य फलविषयोऽभिलाषातिरेको ध्वन्यत इति त्वसत्। अभिज्ञानशाकुन्तले हि राज्ञ इयमुक्तिर्न तापसस्येत्यलम्।

द्वित्राणां चोपसर्गाणामेकत्र पदे यः प्रयोगो दृश्यते सोऽपि रसव्यक्त्यपेक्षयैव निर्दोषः। यथा—प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्येति[1]। सम्यगुच्चैर्विशेषेण ईक्षित्वा इति भगवतः कृपातिशयोऽभिव्यक्तः। यथा वा

मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृताऽनुमानाः।
योगीश्वरैरप्यसुबोधमीशं त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः॥

सम्यग्भूतमुपांशु कृत्वा आसमन्ताच्चरन्तमित्यनेन लोकानुजिघृक्षाऽतिशयस्तत्तदाचरतः परमेश्वरस्य ध्वनितः। निपातानामपि तथैव। 'अहो बताऽसि स्पृहणीय वीर्यः' इति।

ये जीवन्ति न मान्ति ये स्ववपुषि प्रीत्या प्रनृत्यन्ति ये
प्रस्यन्दिप्रमदाश्रवः पुलकिता दृष्टे गुणिन्यूर्जिते।
हा धिक्कष्टमहो क्व यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता॥ इति

अत्र श्लाघातिशयो निर्वेदाऽतिशयश्च अहो बतेति हा धिगिति च ध्वन्यते।

पदपौनरुक्त्यमपि व्यञ्जकत्वापेक्षयैव कयाचित् प्रयुज्यमानं शोभामावहति। यथा—

---

१. [प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य] वीतावृतीन् द्राग्
जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन्।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीं विशालं
शश्वत् सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु॥

'यद्वञ्चनाहितमतिः इति। अत्र त एव हि सर्वं विदन्ति सुतरामिति ध्वन्यते। वाक्यपौनरुक्त्यमपि तथैव। यथा—पश्य—द्वीपादन्यस्मादपीति वचनानन्तरं, कः सन्देहो द्वीपादन्यस्मादपीत्यनेनेप्सितप्राप्तिरविघ्नितैव ध्वन्यते। किं किं स्वस्था भवन्ति मयि जीवतीत्यनेनाऽऽमर्षातिशयः। सर्वक्षितिभृतां नाऽथ दृष्टा सर्वाङ्गसुन्दरीत्युन्मादाऽतिशयः। कालस्य यथा

समविसमणिव्विसेसा समन्तओ मंदमंदसंचारा।
अइरा होहिंति पहा मणोरहाणं पि दुल्लंघा॥

अत्र ह्यचिराद्भविष्यन्ति पन्थान इत्यत्र भविष्यन्तीत्यस्मिन् पदे प्रत्ययः कालविशेषाऽभिधायी रसपोषहेतुर्जायते। उत्प्रेक्ष्यमाणोऽपि हि वर्षासमयः कम्पकारी किमुत वर्त्तमान इति प्रकाशनात्। अयं हि गाथार्थः प्रवासविप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान्।

यथा चाऽत्र प्रत्ययांशो व्यञ्जकस्तथा कचित् प्रकृत्यंशोऽपि दृश्यते। यथा—तद्गेहं नतभित्तीति। अत्र दिवसैरित्येतस्मिन् पदे प्रकृत्यंशो द्योतकः। दिवसार्थो ह्यत्राऽत्यन्तासम्भाव्यमानतामस्यार्थस्य ध्वनति। सर्वनाम्नां चाऽत्र व्यञ्जकत्वमस्ति। अत एव च कविना क केत्यादिशब्दप्रयोगो न कृतः। तथा हि—तदिति पदं नतभित्तीत्येतत् प्रकृत्यंशसहायं समस्ताऽमङ्गलनिधानभूतां मूषिकाद्याकीर्णतां ध्वनति। तदिति हि केवलमुच्यमाने समुत्कर्षातिशयोऽपि सम्भाव्येत। न च नतभित्तिशब्देनाऽन्ये ते दौर्भाग्यायतनत्वसूचका विशेषा उक्ताः। एवं साधितुरित्यादावपि योज्यम्। एवंविधे च विषये स्मरणाकारद्योतकता तच्छब्दस्य, न तु यच्छब्दसम्बद्धतेत्युक्तं प्राक्। अत एवाऽत्र तदिदंशब्दादिना स्मृत्यनुभवयोरत्यन्तविरुद्धविषयतासूचनेन आश्चर्यविभावता योजिता। तदिदंशब्दाद्यभावे तु सर्वमसङ्गतं स्यादिति तदिदमादेरेव प्राणत्वं योज्यम्। अनया दिशा व्यञ्जकविशेषा अन्येऽपि सहृदयैः समुत्प्रेक्षणीयाः। एतच्च सर्वं पदवाक्यरचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम्।

एवं रसादीनां व्यञ्जकस्वरूपमभिधाय तेषामेव विरोधिरूपं लक्षयितुमुपक्रम्यते। **प्रबन्धे मुक्तके वाऽपि** इति। **विरोधिरससम्बन्धी** इति। **अकाण्ड एव** इति। **रसस्य स्याद्** इति। **मुख्यो व्यापार**—इति। **नीरसस्तु** इति। **पूर्वे** इति। **वाल्मीकि**—इति। **विवक्षितः** इति। **प्रसिद्धेऽपि** इति। **रसान्तरसमावेशः** इति। **कार्यमेकम्** इति। **अविरोधी विरोधी वा** इति। **विरुद्धैकाश्रयः** इति। **एकाश्रयत्वे** इति। **रसान्तरा-**

१. रामा रम्येव नान्तेऽस्मिन् मया विरहिता त्वया। ख. पुस्तके एव॥ २. पुरुरवस उक्तिः। ख. पुस्तके एव॥

न्तरितयोः इति। विरोधमविरोधं च इति। अवधानाऽतिशयः इति। विनेयानुन्मुखी-कर्तुम् इति। एतत् सर्वं पूर्वमेव तत्र तत्र व्याख्यातमस्तीति तत एवावसेयम्। उपसंहार-पुरःसरमस्योक्तस्य फलमाह

"विज्ञायेत्थं रसादीनामविरोधविरोधयोः।
विषयं सुकविः काव्यं कुर्वन् मुह्यति न क्वचित्॥"

एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य रसादिविषयस्य व्यञ्जक-वाच्यवाचकनिरूपणस्याऽपि तत् प्रतिपाद्यते

"वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥"

वाच्यानामितिवृत्तविशेषाणाम्। वाचकानां सुप्तिङ्गादीनाम्। एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति प्रतिपादयितुमाह

"रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान्यस्ता एता वृत्तयो द्विविधाः स्थिताः॥"

व्यवहारो हि वृत्तिरुच्यते। तत्र रसाऽनुगुणः औचित्यवान् वाच्याश्रयो व्यवहारो यस्ता एताः कैशिक्याद्या वृत्तयः, वाचकाश्रयाश्चोपनागरिकाद्या वृत्तयो हि रसादितात्पर्येण सन्निवेशिताः कामपि नाट्यस्य[1] काव्यस्य वा छायामावहन्ति। रसादयो हि द्वयोरपि तयोर्जीवभूता इतिवृत्तादि[2] तु शरीरभूतमेव। उपसंहरति

"विमतिविषयो य आसीन्मनीषिणां सततमविदितसत्तत्त्वः[3]।
ध्वनिसञ्ज्ञकः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्॥"

विमतयोऽभाववादभाक्तत्ववादादिरूपाः। ध्वनिसंज्ञकः प्रकार इति। एकपञ्चा-शत्प्रभेदभिन्न इत्यर्थः। तथा ह्यविवक्षितवाच्यो विवक्षितान्यपरवाच्य इति द्वौ मूलभेदौ। तत्राद्यश्चतुर्भेदोऽत्यन्ततिरस्कृतवाच्यस्य अर्थान्तरसङ्क्रमितवाच्यस्य च पदवाक्यप्रकाशत्वेन प्रत्येकं द्विप्रभेदत्वात्। द्वितीयस्तु सप्तचत्वारिंशत्प्रकारः। व्यङ्ग्ययोरलङ्कारवस्तुनोः पद-वाक्यप्रकाशतायां प्रत्येकं द्विप्रभेदत्वे शब्दशक्त्युद्भवस्य चतुर्भेदत्वेन व्यञ्जकस्याऽर्थस्या-लङ्कारस्य च कविप्रौढोक्तिकृतशरीरत्वेन कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरत्वेन स्वतः सम्भ-वित्वेन च प्रत्येकं त्रैविध्ये व्यङ्ग्यस्याऽपि प्रत्येकमेव च वस्त्वलङ्कारभेदेन द्वैविध्यात् द्वादशधा विभक्तस्य पदवाक्यप्रबन्धप्रकाशतायामर्थशक्त्युद्भवस्य षट्त्रिंशत्प्रकारत्वेन उभयशक्त्युद्भवस्य वाक्यप्रकाशतायामेकविधत्वेन च लक्ष्यक्रमव्यङ्ग्यस्यैकचत्वारिंशद्भेद-

१. नाट्यकाव्ययो॥ २. वाच्यवाचकौ॥ ३. परमार्थः॥

भिन्नत्वाद्वर्णपदपदैकदेशवाक्यसङ्घटना प्रबन्धप्रकाशत्वेनालक्ष्यक्रमव्यङ्ग्यस्य षट्प्रकारत्वाच्चेति ।

"प्रकारोऽन्यो[1] गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ॥"

व्यङ्ग्येनान्वयो वाच्यस्योपस्कार इत्यर्थः । व्यङ्ग्यं च वस्तु रसालङ्कारभेदात् त्रिधा । तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थाऽपेक्षया गुणीभावे सती गुणीभूतव्यङ्ग्यता । यथा–लावण्यसिन्धु[2]रिति । काञ्चित् स्त्रियं प्रत्यभिलाषविस्मयगर्भेयं कस्यचित्तरुणस्योक्तिः । अत्र सिन्धुशब्देन परिपूर्णता[3] । उत्पलपदेन कटाक्षच्छटाः । शशिशब्देन वदनम् । द्विरदकुम्भतटीशब्देन कुचयुगलकम् । कदलिकाण्डशब्देन ऊरुद्वन्द्वम् । मृणालदण्डशब्देन दोर्युगलमिति ध्वन्यते[4] । तत्र चैषां स्वार्थस्य सर्वथाऽनुपपत्तेरन्धशब्दोक्तेन न्यायेन तिरस्कृतवाच्यत्वम् । स च प्रतीयमानोऽप्यर्थविशेषोऽपरैव हि केयमित्युक्तिगर्भीकृते[6] वाच्ये[7]ऽशे चारुत्वं छायां विधत्ते । वाच्यस्यैव स्वात्मोन्मज्जनया निमज्जितव्यङ्ग्यजातस्य सुन्दरत्वेनावभासात् । सुन्दरत्वं चास्यासम्भाव्यमानसमागमसकललोकसारभूतकुवलयादिभाववर्गस्याऽतिसुभगैकाधिकरणविश्रान्तिलब्धसमुच्चयरूपतया विस्मयविभावताप्राप्तिपुरःसरीकारेण व्यङ्ग्यार्थोपस्कृतस्य तथा विचित्रस्यैव वाच्यरूपतोन्मज्जनेनाभिलाषादिविभावत्वात् । अत एवेयंति यद्यपि वाच्यस्य प्राधान्यं तथाऽपि रसध्वनौ तस्याऽपि गुणतेति सर्वत्रगुणीभूतव्यङ्ग्यप्रकारे मन्तव्यम् । तत एव ध्वनेरेवात्मत्वमित्युक्तचरं बहुशः ।

अन्ये तु जलक्रीडावतीर्णतरुणीजनलावण्यद्रवसुन्दरीकृतनदीविषयेयमुक्तिरिति सहृदयाः । तत्राऽपि चोक्तप्रकारेणैव योजना । यदि वा नदीसन्निधौ स्नानावतीर्ण्णयुवतिविषया सर्वथा तावद्विस्मयमुखेनेयति व्यापाराद्गुणता । व्यङ्ग्यस्य अतिरस्कृतवाच्येभ्यो[9]ऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन काव्यचारुत्वाऽपेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता यथा–अनुरागवती सन्ध्ये[10]ति । अत्राऽनुरागशब्दस्याऽभिलाषे

१ व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्राधान्ये सति ध्वनिरित्युक्तस्तस्मादन्य इत्यर्थः ॥ २ सिन्धुरभिलाष–ग. ॥ ३ परिपूर्णतागुणयोगिनी नायिकेत्यर्थः ॥ ४ अत्र सिन्धुप्रभृतयः शब्दाः परिपूर्णत्वहृद्यत्वसौन्दर्यातिशयसादृश्यं निमित्तीकृत्य नायिकातदवयवलक्षणेष्वर्थेष्वध्यवसिताः सेव्यत्वसच्छायत्वाऽऽप्यायकत्वविमर्दसहत्वसुकुमारत्वशीतलत्वादिधर्माननेकान् ध्वनन्तीति या निशेति श्लोकदर्शितो न्यायोऽनुसर्त्तव्यः ॥ ५ शब्द ॥ ६ क्रोडीकृते विशेषिते इति यावत् ॥ ७. नदीरूपे ॥ ८. दर्शितव्यङ्ग्यार्थोपस्कृतवाक्यार्थमात्रे ॥ ९. अर्थान्तरसङ्क्रमितवाच्येभ्यः ॥ १०. अनुरागवतीसन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥ ख पुस्तके एव ॥

तदुप[1]रक्तत्वलक्षणया लावण्यशब्दवत् प्रवृत्तिरित्यभिप्रायेणातिरस्कृतवाच्यत्व[2]मुक्तम्। रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदाद्यलङ्कारविषयः प्राक् प्रदर्शितः। तत्र च रसानामाधिकारिकवाक्यार्थाऽपेक्षया गुणीभावो विवहनप्रवृत्तभृत्यानुयायिराजवत् व्यङ्ग्यस्य चोपमादेरलङ्कारस्य गुणीभावे दीपकादिर्विषयः। एवं प्रकारत्रयस्यापि गुणीभावं प्रदर्श्य बहुतरलक्ष्यव्यापकताऽस्येति दर्शयितुमाह

"प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।
ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा॥"

गम्भीराणि व्यङ्ग्यार्थाऽऽक्षेपकत्वात्। सुखावहा इति। चारुत्वहेतुस्तत्राऽयमेव प्रकार इति भावः। यथा लच्छी[3] धूए ति। लक्ष्मीः सकलजनाभिलाषभूमिर्दुहिता जामाता हरिर्यः समस्तभोगापवर्गदानसततोद्यमी। तथा गृहिणी गङ्गा यस्याः समभिलषणीये सर्वस्मिन् वस्तुन्यनुपहत उपायभावः। अमृतमृगाङ्कौ च सुतौ। अमृतमिह वारुणी। तेन गङ्गास्नानहरिचरणाराधनाद्युपायशतलब्धाया लक्ष्म्याश्चन्द्रोदयपानगोष्ठ्युपभोगलक्षणं मुख्यं फलमिति त्रैलोक्यसारभूतता प्रतीयमाना सती अहो कुटुम्बं महोदधेरित्यहो शब्दार्थे गुणीभावमभ्येति। एवं निरलङ्कारमुत्तानतायां तुच्छतयेव भासमानममुनाऽन्तःसारेण काव्यं पवित्रीकृतमित्युक्त्वाऽलङ्कारस्याऽप्यनेनैव रम्यतरत्वमिति दर्शयति।

"वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशाऽनुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते॥"

व्यङ्ग्योंऽशोऽलङ्कारो वस्तुमात्रं वा। तथाहि दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारान्तरवस्त्वन्तरसंस्पर्शिनो दृश्यन्ते। तत्र प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। यतोऽतिशयोक्तिर्यमलंकारमधितिष्ठति कविप्रतिभावशात्तस्य चारुत्वाऽतिशययोगोऽन्यस्य त्वलङ्कारमात्रतैवेति। तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचिद्वाच्यत्वेन कदाचिद्व्यङ्ग्यत्वेन। व्यङ्ग्यत्वमपि कदाचित् प्राधान्येन कदाचिद्गुणभावेन। तत्राद्ये पक्षे वाच्यालङ्कारमार्गो द्वितीये तु ध्वनावन्तर्भावः। तृतीये तु गुणीभूतव्यङ्ग्यरूपता। अयं[4] च प्रकारोऽन्येषामप्यलङ्काराणामस्ति। तेषां तु न सर्वो विषयोऽतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि सम्भवतीत्ययं विशेषः। येषु चाऽलङ्कारेषु

१. लौहित्यस्याविदूरवर्तित्वेनाभिलाषप्रतीतेर्लौहित्यानुगतत्वलक्षणयाऽध्यारोपलक्षणयेत्यर्थः॥

२. सन्ध्यादिशब्दास्तु विवक्षितान्यपरवाच्याः। अत्र चाभिलाषादिप्रतीतस्य नायकवृत्तान्तस्य वाच्यापेक्षया गुणभावः॥

३ [लच्छीधूआ]जायादुओ हरी तह घरल्लिया गंगा।
अमियमियं काइसुया अहो कुडुंबं महो अहिणो॥ ख पुस्तके एव॥

४. योऽतिशयोक्तौ निरूपितोऽलङ्कारान्तरेऽप्यनुप्रवेशात्मकः॥

सादृश्यमुखेन तत्त्व[1]प्रतिलम्भः, यथा रूपकोपमातुल्ययोगिताविदर्शनादिषु, तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं तदेव शोभाऽतिशयशालि भवतीति ते सर्वे चारुत्वाऽतिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूतव्यङ्ग्यता निर्विवादैव। तत्र च गुणीभूतव्यङ्ग्यतायामलङ्काराणां केषाञ्चिदलङ्कारविशेषगर्भतायां नियमो यथा व्याजस्तुतेः प्रेयोऽलङ्कारगर्भत्वे। केषाञ्चिदलङ्कारमात्रगर्भतायां नियमो यथा—ससन्देहादीनामौपम्यगर्भत्वे। केषाञ्चिदलङ्काराणां परस्परगर्भताऽपि सम्भवति यथा दीपकोपमयोः। तत्र दीपकमुपमागर्भत्वेन प्रसिद्धमुपमाऽपि काचिद्दीपकच्छायानुयायिनी यथा मालोपमा। तथा हि प्रभामहत्या शिखयेव दीप इत्यादौ विषये स्फुटैव दीपकच्छाया लक्ष्यते। यतस्तया स पूतश्च विभूषितश्चेत्येकेन दीपस्थानीयेन दीपनादीपकमत्राऽनुप्रविष्टं प्रतीयमानतया। साधारणधर्माभिधानं ह्येतदुपमायां स्पष्टेनाऽभिधाप्रकारेणैव। तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वाऽतिशययोगिनो रूपकादयोऽलङ्काराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः। तदयं ध्वनिनिष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः। सर्वथा नास्त्येव हृदयहारिणः काव्यस्य स प्रकारो यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम्। तदिदं काव्यरहस्यं परमिति सूरिभिर्भावनीयम्।

"मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥"

मुख्या भूषेति सम्बन्धः। अलङ्कृतभृताम् अपिशब्दादलङ्कारशून्यानामपीत्यर्थः। प्रतीयमानकृता छाया शोभा सा च लज्जासदृशी गोपनासारसौन्दर्यप्राणत्वात्। अलङ्कारधारिणीनामपि च नायिकानां लज्जा मुख्यं भूषणम्। प्रतियमाना छायाऽन्तर्मदनोद्भेदजहृदयसौन्दर्यरूपा यया। लज्जा हि अन्तरुद्भिन्नमान्मथविकारजुगोपयिषारूपा मदनविजृम्भावद्वीतरागाणां यतीनां कौपीनापसारणेऽपि त्रपाकलङ्कस्यादर्शनात्। तथाहि—मान्मथविकारजुगोपयिषारूपलज्जाऽऽवेदकः कस्याऽपि कवेः कुरङ्गीवाङ्गानीत्यादिः श्लोकः। तथा प्रतीयमानस्य प्रियतमाभिलाषानुनाथनमानप्रभृतेः छाया कान्तिर्यया। शृङ्गाररसतरङ्गिणी हि लज्जाऽवरुद्धा निर्भरतया तांस्तान् विलासान्नेत्रगात्रविकारपरम्परारूपान् प्रसूत इति

१. स्वरूप॥ २. चारुत्वपर्यवसायित्वात्तस्याः॥ ३ अनेनोपमारूपकादयः स्वीकृताः। अनेन शब्देन उपमारूपकादयः स्वीकृताः ग.॥ ४. एवं काव्यस्यात्मा ध्वनिरिति निर्वाह्य उपसंहरति तदयमित्यादिना सौभाग्यमित्यन्तेन॥ ५. प्रधानाप्रधानोभयरूपः॥ ६. सकलसत्कविकाव्योपनिषद्भूतं, न तु प्रतारणा मात्रमर्थवादरूपं मन्तव्यमिति तात्पर्यम्॥ ७. जृम्भेव वीतरागाणाम् ग.॥ ८. कलङ्कादर्शनात् ग.॥ ९. व्याख्यानान्तरे॥

गोपनसौन्दर्यसारलज्जाविजृम्भितमेतदिति भावः। अनया च प्रतीयमानच्छायया सुप्रसिद्धोऽपि ह्यर्थः किमपि कमनीयत्वमानीयते। तद्यथा

विश्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्याः केऽपि लीलाविलासाः।
आक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते सन्ततं भावनीयाः॥

इत्यत्र केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानं त्वक्लिष्टमनन्तमर्पयता काच्छायानोपपादिता। मन्मथाचार्येण त्रिभुवनवन्द्यमानशासनेनात एव लज्जासाध्वसध्वंसिना दत्ता येयमलङ्घनीया आज्ञा तदनुष्ठानेऽवश्यकर्त्तव्ये सति साध्वसलज्जात्यागेन विश्रम्भसम्भोगकालोपनताः। मुग्धाक्ष्या इत्यकृतकसम्भोगपरिभावनोचितदृष्टिप्रसरपवित्रिताः। येऽन्येऽन्ये विलासाः गात्रनेत्रविकारा अत एवाऽक्षुण्णा नवनवरूपतया प्रतिक्षणमुन्मिषन्तस्ते केवलेनान्यत्राव्यग्रेण एकान्ताऽवस्थानपूर्वं सर्वेन्द्रियोपसंहारेण भावयितुं शक्या अर्हा उचिताः यतः—'केऽपि नाऽन्येनोपायेन शक्यनिरूपणाः। गुणीभूतव्यङ्ग्यस्य प्रकारान्तरमप्याह।

"अर्थान्तरगतिः काका या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता॥"

काका यत्राऽर्थान्तरगतिः स काव्यविशेषः इमं गुणीभूतव्यङ्ग्यप्रकारमाश्रितः। अत्र हेतुर्व्यङ्ग्यस्य हि तत्र गुणीभाव एव भवति। अर्थान्तरगतिशब्देनाऽत्र काव्यमेवोच्यते। ननु प्रतीतेरत्र गुणीभूतव्यङ्ग्यत्वं वक्तव्यम्। प्रतीतिद्वारेण वा काव्यस्य निरूपितम्।

अन्ये त्वाहुः—व्यङ्ग्यस्य गुणीभावेऽयं प्रकारोऽन्यथा तु तत्राऽपि ध्वनित्वमेवेति, तच्चासत्। काकुप्रयोगे सर्वत्र शब्दस्पृष्टत्वेन व्यङ्ग्यस्योन्मीलितस्याऽपि गुणीभावात्। काकुर्हि शब्दस्यैव कश्चिद्धर्मस्तेन[2] च स्पृष्टं गोप्यैवं गदितः सलेशमिति, हसन्नेत्राऽर्पिताकूतमितिवच्छब्देनैवाऽनुगृहीतम्। अत एव मम धम्मिएत्यादौ काकुयोजने गुणीभूतव्यङ्ग्यतैव व्यक्ता उक्तत्वेन तदाभिमानाल्लोकस्य। यथा स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः। स्वस्था इति भवन्तीति मयि जीवतीति धार्त्तराष्ट्रा इति च साकांक्षदीप्तगद्गदभारप्रशमोदीपनचित्रिता काकुरसम्भाव्योऽयमर्थोऽत्यन्तमनुचितश्चेत्यमुं व्यङ्ग्यमर्थं स्पृशन्ती तेनैवोपकृता सती क्रोधानुभावरूपतां व्यङ्ग्योपस्कृतस्य वाच्यस्यैवाधत्ते। यथा वा

आम असइम्ह ओरमपइव्वए णं तु मइलियं सीलं।
किं पुण जणस्स जायव्वचंदिलं ताण कामेमो॥'

आम असत्यो भवामः इत्यभ्युपगमकाकुः साकाङ्क्षोपहासा उपरमेति निराकांक्षतया

१. कियन्तोऽपि॥ २. काकुलक्षणेन धर्मेण॥

सूचनगर्भा पतिव्रते इति दीप्तस्मितयोगिनी न त्वया मलिनितं शीलमिति सगद्गदाऽऽकाङ्क्षा। किं पुनर्जनस्य जायेव मन्मथान्धीकृता चन्दिलं नापितमपि पामरप्रकृतिं न कामयामहे इति निराकाङ्क्षगद्गदोपहासगर्भा एषा हि कयाचिन्नापितानुरक्ता या कुलवध्वा दृष्टाविनयाया उपहस्यमानायाः प्रत्युपहासावेशगर्भा उक्तिः काकुप्रधानैव। तदेवं प्रकारोऽन्यो गुणीभूतव्यङ्ग्य इत्यादिना पूर्वमुक्तेन, प्रधानेऽन्यत्र वाक्यार्थे इत्यादिना चापरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्याङ्गं रसादि अनुरणनरूपं चेत्यपराङ्गम्, अर्थान्तरगतिः काक्वेत्यादिना काक्वाक्षिप्तं, आक्षिप्त एवालङ्कार इत्यत्राक्षिप्तैवशब्दयोर्व्यवच्छेद्यतया शब्दार्थशक्त्याक्षिप्तोऽपीत्यादिना च वाच्यसिद्ध्यङ्गम्, उपसर्जनीकृतस्वार्थाविति विशेषणव्यवच्छेद्यसङ्ग्राहकेण व्यङ्ग्यस्य यत्राप्राधान्यमित्यादिना अलङ्कारान्तरस्याऽपीत्यादिना यत्र प्रतीयमानोऽर्थ इत्यादिना चाऽगूढापरपर्यायं, वाच्यानुगतम् अस्फुटमप्रधानं सन्दिग्धप्राधान्यं तुल्यप्राधान्यं च व्यङ्ग्यमुपदर्शितमित्यष्टप्रकारो गुणीभूतव्यङ्ग्यः काव्यविशेष इति ॥

अधुना सङ्कीर्णं विषयं विभजति।

"प्रभेदस्याऽस्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना॥"

सङ्कीर्णो हि कश्चिद्ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः। तत्र यद्यस्य युक्तिसहायता तेनदेन व्यपदेशः कर्त्तव्यो न सर्वत्र ध्वनिरागिणा भवितव्यम्। यथा

'पत्युःशिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणं कृताशीर्माल्येन तां निर्वचनं जघान॥'

अनेनेति। अलक्तकोपरक्तस्य हि चन्द्रमसि परभागलाभः। अनवरतपादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टाऽनुवर्त्तिन्या भाव्यमिति चोपदेशः। शिरोविधृता च या चन्द्रकला तामपि परिभवेति सपत्नीलोकाऽवजय उक्तः। निर्वचनमित्यनेन लज्जावहित्थहर्षेर्ष्यासाध्वससौभाग्याऽभिमानप्रभृति यद्यपि ध्वन्यते तथाऽपि तन्निर्वचनशब्दार्थस्य कुमारीजनोचितस्याप्रतिपत्तिलक्षणस्यार्थस्योपस्कारकतां केवलमाचरति उपस्कृतस्त्वर्थः शृङ्गाराङ्गतामेति। यथा वा

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम्॥

ह्रियतमानि पुष्पाणि अमुके गृहाण गृहाणेति उच्चैस्तारस्वरेणादरातिशयार्थं प्रयच्छ-

१. कारिकाद्वयेन द्वितीया च कारिका वाच्यालङ्कारेति॥ २. कारिकात्रयेण॥ ३. गुणीभूतव्यङ्ग्येन॥ ४. अभिधेयस्य॥ ५. मौन॥

ताऽत एव लम्भितेति। न किञ्चिदिति। एवंविधेषु शृङ्गारादरावसरेषु तामेवाऽयं स्मरतीति मानप्रदर्शनमेवात्र न युक्तमिति सातिशयमन्युसम्भारो व्यङ्ग्यो वचननिषेधस्यैव वाच्यस्य संस्कारकः। यत्र ह्युक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तत्र तस्य प्राधान्यं यथा— एवं वादिनि देवर्षावित्यादौ। पत्युरित्यादौ पुनरुक्तिर्भङ्ग्यास्तीति वाच्यस्य प्राधान्यमिति नानुरणनरूपव्यङ्ग्यध्वनिभ्रमो विधेयः। रसाद्यपेक्षया तु तस्य गुणीभाव एवेति सर्वत्रेत्थं विचार्यमिति। एतदेव निर्वाहयन् काव्यात्मत्वं ध्वनेरेव दीपयति।

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः॥"

गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो रसभावतात्पर्यपर्यालोचनेन पुनर्ध्वनिरेव सम्पद्यते यथाऽत्रैवाऽनन्तरोदाहृते श्लोकद्वये। यथा वा

'दुराराधा राधा सुभग यदनेनापि मृजत-
स्तवैतत् प्राणेशाजघनवसनेनाश्रु पतितम्।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे,
क्रियात् कल्याणं वो हरिरनुनयेष्वेवमुदितः॥"

अकारणकुपिताऽपि पादपतिते मयि न प्रसीदसि अहो दुराराधाऽसि मा रोदीरित्युक्तिपूर्वं प्रियतमेऽश्रूणि मार्जति इयमस्या अभ्युपगमगर्भोक्तिः। सुभगेति। प्रियया यः स्वसम्भोगभूषणविहीनः क्षणमपि मोक्तुं न पार्यसे। अनेनाऽपीति पश्येदं प्रत्यक्षेणेत्यर्थः। तव च[2] यदेवम् आवृतं यल्लज्जादित्यागेनाऽपि एवं धार्यते। मृजत इति। अनेन[3] हि प्रत्युत स्रोतःसहस्रवाही बाष्पो भवति इयच्चं त्वं हतचेतनो यन्मां विस्मृत्य तामेव कुपितां मन्यसे। अन्यथा कथमेवं कुर्याः। पतितमिति गत इदानीं रोदनाऽवकाशोऽपीत्यर्थः। यदि तूच्यते इयताऽप्यादरेण किमिति कोपं न मुञ्चसि तत् किं क्रियते कठोरस्वभावं स्त्रीचेतः। स्त्रीति प्रेमाद्ययोगाद्वस्तुमात्रमेतत् तस्य चैष स्वभावः। आत्मनि चैतत्। सुकुमारहृदया योषित इति न किञ्चित् वज्रसाराधिकमासां हृदयं, यदेवंविधवृत्तान्तसाक्षात्कारेऽपि सहस्रधा न दलति। उपचारैरिति दाक्षिण्यप्रयुक्तैः। अनुनयेष्विति। बहुवचनेन वारंवारमस्य बहु वल्लभस्येयमेव स्थितिरिति सौभाग्यातिशय उक्तः। एवमेष व्यङ्ग्यार्थसार्थो वाच्यं भूषयति। तत्तु वाच्यं भूषितं सदीर्ष्याविप्रलम्भाङ्गत्वमेतीति। यस्तु त्रिष्वपि श्लोकेषु प्रतीयमानस्यैव रसाङ्गत्वं

१. ज्ञानेन॥ २. [तव च] यदेवम् आवृतमित्यस्य व्याख्यानमिदम्।–मित्यस्यैव व्या–ग.॥ ३ त्वया यद्वसनमेवमावृतं, सम्बन्धमात्रविवक्षायामत्र षष्ठी, चो व्याख्यान्तरसमुच्चये॥ ४. वसनेन॥ ५. अन्यच्चेत्यर्थः ग.॥

व्याचष्टे स्म, सदेवं विक्रीय तद्यात्रोत्सवमकार्षीत् । एवं हि व्यङ्ग्यस्य या गुणीभूतता प्रकृता सैव समूलं त्रुटयेत् । रसादिव्यतिरिक्तस्य हि व्यङ्ग्यस्य रसाङ्गभावभागित्वमेव प्राधान्यं, नान्यत् किञ्चिदिति ।

एवं ध्वनिगुणीभूतव्यङ्ग्ययोर्विभागे व्यवस्थिते न्यक्कारो ह्ययमेवेत्यादिश्लोके निर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्वमुक्तम् । न तु तेषां पदानामर्थान्तरसङ्क्रमितवाच्यध्वनिभ्रमो विधातव्यः, विवक्षितवाच्यत्वात्तेषाम् । तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते । न तु व्यङ्ग्यरूपपरिणतत्वम् । तस्माद्वाक्यं तत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि ।

न च केवलं गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्व्यञ्जकानि, यावदर्थान्तरसङ्क्रमितवाच्यध्वनिप्रभेदरूपाण्यपि । यथाऽत्रैव श्लोके रावण इत्यस्य ध्वनिप्रभेदान्तररूपस्य व्यञ्जकत्वम् । यत्र तु वाक्ये रसादितात्पर्यं नास्ति, गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः । यथा

राजानमपि सेवन्ते विषमप्युपयुञ्जते ।
रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥ इत्यादौ ।

यद्यपि चाऽत्र विषये निर्वेदात्मकः शान्तरसप्रतीतिरस्ति, तथाऽपि चमत्कारोऽयं वाच्यार्थनिष्ठ एव । व्यङ्ग्यं त्वसम्भाव्यत्वविपरीतकारित्वादि तस्यैवानुयायि । तच्चापिशब्दाभ्यामुभयतो योजिताभ्यां, चशब्देन च स्थानत्रययोजितेन, खलुशब्देन चोभयतो योजितेन, मानवशब्देन च स्पष्टमेवेति गुणीभूतम् । तस्माद्वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवेके परः प्रयत्नो विधातव्यः, येन ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्कारान्तराणां च सङ्कीर्णो विषयः सुज्ञातो भवति । एवं प्रदर्शितं ध्वनिस्वरूपम् । तद्विलक्षणगुणीभूतव्यङ्ग्यस्वरूपे हि परिज्ञाते तदपि यथावदवबुध्यत इति गुणीभूतव्यङ्ग्यस्वरूपमपि प्रदर्शितमिति भावः ।

**प्रह्वास्सर्वे** इति । प्रह्वाः शोभनाश्च सर्वे यस्य तस्य सम्बोधनम् **उदाहृतमेव** इति । दृष्टिं दृष्टिसुखामित्यादि । **सरूपवर्णविन्यासे** इति । वर्णग्रहणेन स्वरा व्यञ्जनानि च गृह्यन्ते । **द्वय्येव गतिः** इति । कथं लाटाऽनुप्रासोऽयमुच्यते इति भावः । नैतदेवमिति वक्तुं युज्यते, इदमेव तु वक्तुमुचितमिति शेषः । अयमभिप्रायः । सरूपाणां स्वरव्यञ्जनसमुदायानां विन्यासे पुनरुक्ताभासतैव सङ्गच्छते, को ह्यनुन्मत्तः पुनरुक्तं ब्रूयादिति । तत्र चार्थाभेदेऽपि तात्पर्यभेदश्चेत्तदा लाटीयोऽनुप्रासः उतार्थभेदस्ततो यमकालङ्कार इति कुतः

१. गुणीभूतव्यङ्ग्यतास्थानीयम् ॥ २. रसादौ ॥ ३. काव्य ॥ ४. कर्मत्वविरहेण तुल्यकक्ष्यत्वाभावात् स्त्रीभिरित्यत्र न योजितः ॥ ५ अत्रान्तरवाक्यार्थत्रयसमुच्चयद्योतकेन ॥ ६. क्रियात्रयः ॥ ७. विशेषणविशेष्याभ्याम् ॥

पुनरुक्तदोषप्रसङ्गः; कथं च लाटानुप्रासपर्यनुयोग इति। पुनरुक्ताभासताऽपि शब्दसारूप्येऽर्थैकत्वनानात्वयोः शब्दसारूप्याभावेऽपि अर्थैकत्वाभासे भवतीति त्रिविधा । अवान्तरभेदापेक्षया तु बहुप्रभेदा वक्ष्यते । अत एव च पुनरुक्ताभासेषु लाटीयोऽनुप्रासस्तदपवादद्वारेण च यमकालङ्कारश्च भवतीत्येतदेव वक्तुं न्याय्यमित्यर्थः ।

**अव्यासज्य** इति पृथग्भूत्वा । **अर्थाभिधा** इति । अर्थाभिधावृत्तित्वमत्र सम्भवापेक्षम् । **वीप्सा** इति। वीप्साशब्देनाऽत्र वीप्सातुल्यता लक्ष्यते । वारंवारमित्यत्र हि वीप्सातुल्यतैव प्रसिद्धा, न तु वीप्सेति । **अतिशय**–इति द्विरुक्त्या ह्यतिशयविशिष्टत्वं निरीक्षणक्रियायाः प्रतीयते । **शक्त्यन्तर**–इति । घनाघनेत्यत्र हि समुदितयोरेव वर्णसमुदाययोरर्थाभिधाने शक्तिरस्ति । न च घनेत्येकस्य वर्णसमुदायस्य काचिच्छक्तिरित्यसंमिश्रितत्वमेव । वारंवारमित्यादौ तु वारमित्यादेः शब्दस्यैकस्यऽप्यस्ति शक्तिरिति संमिश्रितत्वमेव । **अर्थभेदाद्** इति । **सम्भवापेक्षं सेवते** इति। सेवते श्रीस्तेषां गृहमिति सम्बन्धः। **अत एव च** इति । यतो गुणाननुवर्त्ततेऽतो मार्गानऽपीत्यर्थः । गुणद्वारेणैव मार्गाणां व्यवस्थानात् । वृत्तिवैचित्र्येति । वृत्तयो हि स्वतन्त्राः परिमिताश्चेत्यर्थः ।

**पत्ता येति** । प्राप्ताश्च वानराः निर्झरैः शुक्लत्वात् प्रकर्षेण हसितानीव यानि दरीमुखानि तेभ्यो निर्गतो बकुलामोद एव मदिरामोदो यत्र । **धूमाए** इति । धूमायते धूमवत् कलुषे ज्वलतीव कोपज्वालाच्छुरितत्वात् । ज्वलदारोहज्ज्वाबन्धे । **समप्फंदंतो** इति तिरस्कुर्वन्नित्यर्थः । **न व्यवधायकत्वम्** इति । चकारस्येति शेषः । **किञ्चिद्दच्चिम** इति । भवादृशेषु पतिषु सत्सु स्वेषामात्मीयानां अदोषे दमाः दोषं विना सर्वस्वापहारिणः केऽपि न दृश्यन्ते ।

केवलं त्वदीया एव गुणा ईदृशाः सन्ति एतदेव सवितर्कमाह । **ते किं सन्ति** इति हृदयं हि सर्वस्य सर्वस्वभूतमेव । **समस्तत्वम्** इति समासवत्त्वम् । **एकविधौ** इति सामान्यलक्षणाऽपेक्षया । **द्विधा** इति समग्रासमग्रपदत्वाभ्याम् । **त्रिधा** इति व्यवहिताव्यवहितोभयरूपत्वेन। **दुःखितत्वस्य च** इति। अत्र दुःखित्वं कुन्दादिषु प्रत्येकं मन्दत्वादिना विभज्य यदि वर्ण्यते तदा तथा प्रसिद्ध्यभावः । अथ मन्दादीनां शब्दानां लक्षणया दुःखप्रकर्षमात्रापरत्वमाश्रित्य तथा प्रसिद्ध्यभावः परिह्रियेत, एवं सति प्रयोजनमन्तरेण लक्षणाऽनुप्रासानुरोधेनैवाश्रिता स्यात् । अतश्च एतेषां लक्षणावशेनाऽऽविर्भूतस्वभावानामनुप्रासानां निष्फललक्षणाहेतुकत्वान्निष्फलत्वम् । सर्वत्र हि प्रयोजनवशाल्लक्षणा समाश्रीयते ।

**अनेकधा विभज्य कथने** इति । मन्दत्वादिविशेषरूपेण दुःखित्वस्य प्रतिपादनात् विशेषेण मन्दत्वादिना सामान्यस्य दुःखित्वस्य लक्षणाच्चेत्यभिप्रायः । **न किञ्चित्**

**प्रयोजनम्** इति। तथा प्रसिद्धेरभावात् मुख्यशब्दार्थोल्लङ्घनस्य च[1] निष्प्रयोजनस्याऽयुक्तत्वाच्चेत्यभिप्रायः।

तदेवं मन्दादौ विशेषे समाश्रीयमाणे तथा प्रसिद्ध्यभावः। सामान्ये तु दुःखित्वमात्रे वैफल्यमनुप्रासानां, मन्दादीनां शब्दानां वाच्यस्याऽविवक्षितत्वात्। एवं चक्री चक्रारपङ्क्तिमित्यत्राऽपि विशेषविवक्षायां तथाप्रसिद्ध्यभावः। सामान्यरूपेण तु स्पन्दनस्य लक्षणयोपवर्णने वैफल्यम्। **अन्तभागं**[2] इति प्रथमपादस्येत्यर्थः। **अन्तभागेषु** इति द्वितीयादिपादानामित्यर्थः। इति प्रकारे। **अन्त्याद्धादि** इति। आदिग्रहणेन तृतीयचतुर्थौ गृह्येते। एवं आद्यार्द्धादीत्यत्राऽपि अन्तादिकमिति। सामान्येन संज्ञेयं वक्ष्यमाणे[3] भेदत्रये अन्ताद्योर्यमनात्। **सन्दष्टकसमुद्गकादेः** इति। अत्रादिशब्देन सङ्गृहीतानां मध्ययमकादीनामसङ्ग्रहाद्विघटत इत्युक्तम्। एतदेवाह—**तथाहि** इति। **समुदाय**[4] **इति वा स्याद्** इति वाग्रहणाद्विकल्पितः। पञ्चममिति श्लोकव्याख्याक्रमेण द्वितीयमपि पञ्चानां पूरकत्वेन पञ्चममित्युक्तम्।

**रूपमात्रेण**[5] इति। **मात्र**ग्रहणेन क्रमं निराकरोति। यमके किल द्वयोरुपयोगः। रूपस्य क्रमस्य च यत् पूर्वमुपात्तं रूपं तस्यैवोत्तरत्रोपलम्भे सति यमकव्यपदेशात्। इह तु अन्तर्गतं रूपं मध्य उपलभ्यते। **साधुः संसाराद्विरस्यदस्मादसाराद्** इति। न तु साराशब्दस्य पूर्वमन्त उपलम्भः पश्चान्मध्ये तेन अन्तयमकरूपमत्र विद्यते। नन्वन्तयमकक्रमः। तेनान्तयमकगतक्रमाविवक्षायां अन्तयमकगतं रूपमात्रमुपादाय एतदन्तयमकस्याप्युदाहरणं द्रष्टव्यम्।

**न्यूनता**[6] इति। असुरस्य हि मूलभूतपितृवंशमातृकुलस्वजनवर्गसुहृत्समूहस्वाम्यत्व(न्व?)वायसेवकजनपरिकरितस्य विनाशः साधयितुमभीप्सितः। स च सर्वसमुच्छेदनक्षमक्षयमारुतसमुच्छेद्यसर्वार्थोपमितस्यैव सिध्यतीति कर्मत्वेनाऽनभिहितोऽपि सर्वार्थः सामर्थ्याद्गम्यत इति न तन्न्यूनता काचिदिति।

**अश्लीलता** इति। स मारुतः क्षयव्याधिरमङ्गलातङ्कदाय्यपि मूलभूतशरीरविनाशेनाऽसुरस्य विनाशयितुमिष्टत्वान्न दुष्टः। **आश्रयगतार्थवशेन** इति। निरर्थकत्वेऽप्यभिधाव्यापारः सम्भवतीत्यत्र हेतुरयम्। तथा ह्यर्थप्रतिपत्त्यन्यथाऽनुपपत्त्युन्नेयः शब्दव्यापारोऽभिधा। सा च तयोः समुदाययोः स्वगता आश्रयगता उभयगता वा। **स्वगता सुतरां सुतरामिति।**

---

१. च गपुस्तके नास्ति ॥ २. वैफल्यम् अन्त्यार्धादिति ग ॥ ३. -णमे- ग ॥ ४. इतः प्राक् अधिकपाठस्य चिह्नं वर्तते पाठस्तु नास्ति ॥ ५. तथाहीति रूपमात्रेणेति ग. ॥ ६. न्यूनतेति इत्यारभ्य न दुष्टः इत्यन्तः पाठो गपुस्तके नास्ति ॥

**आश्रयगता वृषभरणाभरणा** इति। अत्र हि वृषभरणाभरणा इत्येतस्य याऽसौ विशिष्टार्थविषया शक्तिः सा तावन्न निर्वहति यावद्भरणाभरणाशब्दौ द्वावनर्थकौ न प्रयुक्तौ तेनाऽत्राश्रयगताऽभिधा। **उभयगता अञ्जनभसानभसे**ति। अत्र हि प्रथमस्य नभसेत्यस्य आश्रयान्तरगताऽभिधाऽञ्जनभसेत्येतत्समाश्रयत्वात्। द्वितीयस्य तु स्वगता। तदेवमभिधाशक्त्यैवम्भूतया त्रिप्रकारया यमके प्रभिन्नौ समुदायौ प्रयुज्येते। अन्यथा विशिष्टार्थप्रतिपत्तेरनिर्वाहात्।

**सभाजनम्** इति। अत्र समस्तपादान्त्यार्द्धभागानामनन्तरपादाद्यार्द्धभागेष्वावर्त्तयितुमुपक्रान्तत्वात्तुर्यपादस्याऽपरपादानन्तर्यमसम्भवीति तद्भागं प्रथमपादभाग एवावर्त्य सान्वयमेव चक्रकव्यपदेशं चकार शास्त्रकार इति यत्र प्रथमोद्देशस्तेनैवेतरस्य यमनमिति क्रमरागितया आद्यन्तकयमकसङ्कराशङ्का न कार्या। एवं जयन्ति ते इत्यत्राऽप्यन्तादिकसङ्करभ्रमो न विधेयः। **समस्तपादगतत्वेन** इति। स्ववृत्त्याऽनेकपादव्याप्तिर्यथा। **चक्रं दहतारम्** इति। सजातीयेन यथा **सुदासेन** इति। अत्र नादौ न मध्ये नान्तेऽपि तु समग्रेऽपि पादे स्ववृत्त्या लब्धस्वरूपस्य यमकस्य सजातीयेन यमकेनाऽनेकपादव्याप्तिः। आद्यन्तयोरित्यादि। अन्ताद्योर्मध्याद्योरन्तमध्ययोरिति व्युत्क्रमेणाऽपि स्थानसाङ्कर्यं द्रष्टव्यम्। एतच्च भेदप्रभेदकलनया **कल्पलतायां दण्डिनि** च स्पष्टितमस्ति।[1]

मौलविकल्पा अष्ट भवन्तीति सम्बन्धः। **द्वाविंशतिः** इति। पादद्वयत्रयचतुष्टयद्वयद्वयगतत्वेन स्वरूपस्य त्रयो द्वावेक एकश्चेति सप्त। पञ्चदश तु प्रसिद्धा एव। **सप्त** इति। पादद्वयत्रयद्वयद्वयगतत्वेन त्रयो द्वौ द्वौ चेति।[2] आदौ मध्ये चेति उद्देशक्रमविलङ्घनेन यदेतद् व्याख्यातं तत्रापि मध्ये आदौ चेति परिहृत्य व्यत्ययो यत् प्रदर्शितः। एतस्यानन्तरस्य च पश्चान्मध्यान्तेति च यद्व्याख्यातं तत्र हेतुः क्रमस्यैवं व्यवस्थितिरुदाहरणदृष्टिश्च। यश्च लक्षणश्लोके क्रमव्यत्यासः सच्छन्दोनुरोधात् पठितपठितत्वाद्वेति शुद्धं यमकमिति। आदियमकं मध्ययमकम् अन्तयमकं चेत्यर्थः। एकपादगतत्वेन मध्यस्य मध्येन यमनं व्यपेतमेतस्य हि नाभिमतम्।

**अवसितं हसितम्** इति। अत्रा[3]द्यपादयोस्तत्पादगतत्वेन मध्यस्य मध्येन यमनान्मध्ययमके। एकैका चावृत्तिरधिका। अथवा आद्यपादस्थस्य प्रथमस्य द्वितीयस्य[4] तृतीयस्य वा मध्यस्य द्वितीयपादगतेनान्तेन यमनान्मध्यान्तयमकम्। शेषाश्चावृत्तयोऽधिकाः। अथवा प्रथमपादगतस्य मध्यस्य द्वितीयपादगतेन मध्येन यमनान्मध्ययमकं पादद्वयगतं चावृत्ति-

१. सभाजनमिति इत्यत आरभ्य स्पष्टितमस्ति इत्यन्तः पाठो गपुस्तके नास्ति ॥ २. द्वाविंशतिरितिप्रभृति द्वौ द्वौ चेति पर्यन्तः पाठः गपुस्तके पतितः ॥ ३. पादयो......आद्य—इति ग पुस्तके नास्ति ॥ ४. द्वितीयस्य...मध्यान्त यमकम् इत्यस्य स्थाने मध्यस्य द्वितीयपादगतेन यमनान्मध्यान्तयमकम् क ग ॥

द्वयमन्यदे[1]धिकम् । उत्तरपादयोस्तु मध्ययमके मध्यान्तयमके वा । **एकैका चाऽऽवृत्तिरधिका** इति । अ[2]नुल्लेखिनोऽन्यत्र यमकविशेषा आवृत्त्याधिक्यादुल्लिखन्त्येवेत्युदाहृताः । सभासु राजन्नसुराहतैरिति । अत्र पादचतुष्टयगतत्वेनैकरूपं मध्ययमकम् । द्वितीयद्वितीया चाऽऽवृत्तिः पादचतुष्टयेऽप्यधिका । अन्यभेदे व्यपेतरूपे इत्यादि । व्यपेतेऽव्यपेतं स्थूलम् ।

**उपोढरागे**ति। **सूक्ष्ममतां धुनाने**ति । **अव्यपेते अव्यपेतं स्थूलं स तमा** इति। **सूक्ष्मं स नाके**ति । **अव्यपेतेऽव्यपेतं स्थूलं हठ[3]पी**ति **सूक्ष्मं धराधरे**ति। व्यपेते व्यपेतं स्थूलं सालमित्याद्यर्द्धम् । सूक्ष्मं न नामेत्यर्द्धम् । एवमन्यभेदस्वभेदयोः प्रत्येकं स्थूलसूक्ष्मात्मत्वेनाऽव्यपेतं चतुःप्रकारं व्यपेतं च तथैवेत्यष्टधा[4]प्रायः पादसन्धियमकं बध्यत इत्यर्थः । **प्रत्याग[5]तेर्यतेश्च** इति। द्विती[6]ययामाशब्दस्य मण्डूकप्लुत्या प्रत्युच्चारणादा[7]द्यन्तयमकं यामानीतेत्यत्र विच्छे[8]दान्मध्यमकं च नोल्लिखतीत्यर्थः। **प्रागद्** इति। यामानीतेतीव धराधरेति अत्र द्वितीयादिपादेषु मही महीत्यादिर्या सूक्ष्मा वृत्तिस्तदर्द्धैरादिभागानां व्याप्तत्वान्मध्ययमकव्यपदेशस्तस्या नोचित इत्यस्थानयमकता । **सालम्** इति । अत्रादौ सूक्ष्मावृत्त्या स्वभेदे सति सुरतापनीयं सुरतापनीयमिति स्थूलावृत्त्या मध्यस्याऽपि बहुव्याप्तत्वान्नान्तयमकव्यपदेशो युज्यत इत्यस्थानयमकता । उत्तरार्द्धे तु यो यमकप्रकारः स धराधरेत्यनेनैव गतार्थ इति तस्याऽनुदाहरणता ।

**एवमपि** इति । स्वभेदान्यभेदयोः सूक्ष्मं स्थूलं चेत्यर्थः । **ननाम** इति । अत्रादौ स्थूलावृत्त्या स्वभेदे सति नना नसेति सूक्ष्माऽऽवृत्त्याऽल्पीयसोऽत्र भागस्य व्याप्तत्वात् पूर्ववदस्थानयमकता । उत्तरार्द्धे त्वनुदाहरणतेति । **तद्भाव**-इति । तस्मिन् शब्देऽर्थे वा सति भवनमित्यन्वयः । तस्मिन्नर्थे शब्दे वा सति न भवनमिति व्यतिरेकः । तयोराश्रयणादित्यर्थः । **स्तोकेन** इति । अत्र स्तोकोन्नत्यादीनां शब्दानां स्थाने स्वल्पोच्चैस्त्वादिशब्दा यदि निबध्यन्ते तथाऽपि न श्लेषत्वक्षतिः । स्वयं च पल्लवताम्रेत्यत्र तु दीप्रप्राणिशब्दौ

---

१.—दधिकं तृतीयतृतीयाभ्यां चावृत्तिभ्यां मध्यान्तयमकम् । उत्तरपादयोस्तु मध्यान्तयमके क ग ॥ २. अनुल्लेखिनो ...... त्युदाहृताः इति पाठः क ग. पुस्तकयोर्नास्ति ॥ ३. हठपीतेति ॥ ४ प्रायोग्रहणात् पादे श्लोके वाऽत एव सालमित्यादि पादे दर्शितम् । प्रायः इति क. ग. पुस्तकयोर्नास्ति ॥ ५. —गतेरिति क. ग ॥ ६. द्वितीयामा—क ॥ ७ —च्चारणादित्यर्थः यतेरिति क. ग । गतेरिति ग. ॥ ८. विच्छेदान्मध्यमकं नोल्लिखन्तीत्यर्थः । विच्छेदादित्यर्थः एवमपीति सालं वहन्तीत्यत्रोत्तरार्द्धे यो यमकप्रकारः स धराधरेत्यनेनैव गतार्थ इति चतुर्थव्यपेतपादसन्धियमकप्रकारोदाहरणदर्शनार्थमेतदिति न नामेत्यत्राप्युत्तरार्द्धयमकप्रकारस्तथैव गतार्थ इति क. ग. । दान्मध्यम........राश्रयणादित्यर्थः इति क. ग. पुस्तकयोर्नास्ति ॥ ९. आवृत्ति ॥

यदि विनिवेश्येतां तदा श्लेषत्वकथाऽपि न स्यादित्यर्थः। किंच स्वयं च पल्लवेत्यत्र यदुपमा प्रतिभोत्पत्तिहेतुः श्लेष इत्युच्यते तदपि न समीचीनम्। गुणक्रियासाम्याभावेऽपि शब्दमात्रसाम्यादप्युपमा सद्भिरभ्युपगम्यत एव। तेनाऽत्रोपमैव श्लेषप्रतिभोत्पत्तिनिमित्तं भवितुमर्हतीत्याह—**न चायम्** इति। ननु च कमलमिव मुखं मनोज्ञमेतत् कचतितरां, स्वयं च पल्लवाताम्रेत्यादिः साधारणगुणक्रियाशब्दप्रयोगयुक्तः श्लेषस्यैव विषय उपपन्नः। कमलमिव मुखं प्रभातसन्ध्येव हिमाद्रेः सुतेत्यादिस्तु साधारणगुणादिप्रयोगशून्य उपमाया विषय इत्याह—**न च** इति। ननु नामगुणक्रियोभयप्रयोगे पूर्णोपमायाः शब्दमात्रप्रयोगे तु श्लेषस्याऽस्तु विषयः। मैवं यदि हि तद्व्यतिरिक्तः श्लेषस्य विषयो न स्यात्तदा भवेदेवम्। अस्ति च तद्व्यतिरिक्तोऽपि तस्य विषय इत्याह—**देवत्वमेव** इत्यादि। **उपमाद्यलङ्कार**-इति। **आदि**ग्रहणेन विरोधैकदेशविवर्तिरूपकादयः समानन्यायाः संगृहीताः। **द्वयोर्योगः** इति। यदि चाऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुरत्र श्लेष इत्युच्यते तदा द्वयोरन्यत्र लब्धसत्ताकयोरङ्गाङ्गिभावेनाऽवस्थानात्तत्सङ्कर एव वक्तुमुचित इत्यर्थः। **विधीयेत** इति उच्चार्येतेत्यर्थः। युगपदनेकार्थेत्यादिवाक्ये तद्विधाने चेत्यनेकमिति युगपदिति च विशेषणसामर्थ्याऽऽवृत्त्या योजनीयमित्यभिप्रायः। **अर्थप्रतिपादनयोः** इति। अनेकमर्थं युगपद्वक्तुमित्येवंरूपतयेत्यर्थः। प्रतिपादनशब्देन च वक्तुमित्यत्र यः प्रकृत्यर्थो वचनरूपः स आख्यातः। **पदश्लेषेऽपि** इति। अर्थभेदाच्छब्दभेद इति हारपदभेदे पदानां श्लेषेऽपीत्यर्थः। **पदाभेदाद्** इति। पद्म इत्यादेः पदस्याऽनेकार्थत्वाभावेन भेदाभावात्। **अरिभेदः** इति। अत्रारिभेदः पलाश इति वृक्षविशेषद्वयाऽभिधायित्वेन शत्रुभेदो मांसादनवाचित्वेन च श्लेषः। **इत्यादिभिः** इति वस्तुरूपैरुक्तैः। **अन्यैरपि** इति अमुक्तैः। **क्रमानुरोधेन** इति। अर्द्धगते तदक्षरागतगतिचित्रे दर्शिते श्लोकगतं तद्दर्शनीयं न तु श्लोकद्वयगतम्। तद्धि **भारवि**विरचितानुरूपमनन्तरमेव दर्शयिष्यते। अर्द्धगते पादान्तरागतम् श्लोकगतेऽर्द्धान्तरागतम् श्लोकद्वयगते च तत्र श्लोकान्तरागतमिति व्यपदेशविशेषाः प्रवर्त्तन्ते।

तत्र च क्रियेत्यादि उपात्तायामेव क्रियायां तद्विशेषणं युज्यते नाध्याहृतायामिति क्रियाविहीनत्वेन नित्यं कमलवदना भक्त्या महिषमथनी कामं रसिकहृदया नूनं लटभ-

---

१. –नामगुण ... ... ... ... अयं पाठः क. ग. पुस्तकयोर्नास्ति ॥ २. –पूर्णोपमाया निर्विषयत्वं यद्यापद्यते तदापद्यतां किं कुर्महे श्लेषस्यापि हि विषय उपदर्शनीय एवेति चेदित्याह–देवत्वमेवेत्यादि उपमाद्यलङ्कारेति आदिग्रहणेन विरोधैकदेशविवर्तिरूपकादयः समानन्यायाः सङ्गृहीताः विधीयेतेति उच्चार्येतेत्यर्थः युगपदनेकार्थेत्यादिवाक्ये तद्विधाने चानेकपुस्तके अग्रे पाठो नास्ति। आदिग्रहणे ग. ॥ ३. ग पुस्तके नास्ति ॥ ४. पादान्तर ॥

ऽडितेत्यादयः षट् ४६ । ४५६ । ४७ । ४५७ । ४६७ । ४५६७ ॥ चतुष्कादिभिरङ्कैश्चतुर्थ्यादियतयः सूच्यन्त इत्येताश्चतुर्ष्वपि पादेषु परिकल्पनीयाः । एवमुत्तरत्राऽपि । कारकविहीनत्वेन—वन्द्या देवैः सिद्धैर्वीरै रिति, वन्द्या नित्यं देवैर्भक्त्या सिद्धैः कामं वीरैर्नूनमिति च द्वौ १ । १४ क्रियाकारकविहीनत्वेन—नित्यं भक्त्या कामं नूनमित्येकः ४ पदावयवभक्त्या देवी मधुमधुरस्तुत्या वरचरितध्येया रणचतुरपूज्यागुणनिलयेत्यादयो द्वादश २५ । १२५ । ३५ । १३५ । २३५ । १२३५ । २४५ । १२४५ । ३४५ । १३४५ । २३४५ । १२३४५ ।

कारकहीनत्वेन पदावयववत्तया च वन्द्या मधुमधुरदेवैर्वरचरितसिद्धै रणचतुरवीरैर्गुणनिलयेति, वन्द्या नित्यं मधुमधुरदेवैर्भक्त्या वरचरितसिद्धैः कामं रणचतुरवीरैर्नूनं गुणनिलयेति च द्वौ १५।१४५ क्रियाकारकविहीनत्वेन पदावयववत्तया च नित्यं मधुमधुरभक्त्या वरचरितकामं रणचतुरनूनं गुणनिलयेत्येकः ४५ पदावयवमात्रत्वेन मधुमधुरवरचरितरणचतुरगुणनिलयेत्येकः ५ इति पंचविंशतिर्निरर्थकाः शेषाश्च सार्थका इति सार्थकनिरर्थकविवेके व्यवस्थिते प्रथमया यत्या द्व्यक्षरायामत्युक्तायां जातौ निरर्थक एको द्वितीयया तत्रैव सार्थक एकः प्रथमाया योगे द्विकयोगश्चतुरक्षरायां प्रतिष्ठायां सार्थक एक इति द्वौ तृतीयया पञ्चाक्षरायां सुप्रतिष्ठायां सार्थक एकः प्राक्तनस्य यतिद्वयस्य योगे द्विकयोगो सप्ताक्षरायामुष्णिहि सार्थकौ द्वौ त्रिकयोगो नवाक्षरायां बृहत्यां सार्थक एक इति चत्वारः चतुर्थ्या अत्युक्तायां निरर्थक एको यतित्रयस्य योगे द्विकयोगाः प्रतिष्ठायां सार्थक एको निरर्थक एक उष्णिहि सार्थक एक इति त्रयः त्रिकयोगाः षडक्षरायां गायत्र्यां सार्थक एको बृहत्यां सार्थकौ द्वाविति त्रयः । चतुष्कयोग एकादशाक्षरायां तुष्टुभि सार्थक एक इत्यष्टौ पञ्चम्या सुप्रतिष्ठायां निरर्थक एको यतिचतुष्कस्य योगे द्विकयोगा निरर्थका उष्णिहि त्रयः दशाक्षरायां पङ्क्तावेक इति चत्वारः । त्रिकयोगा निरर्थका बृहत्यां त्रयो द्वादशाक्षरायां जगत्यां तावन्त एवेति षट् चतुष्कयोगा निरर्थकास्तुष्टुभ्येकश्चतुर्दशाक्षरायां शक्कर्यां त्रय इति चत्वारः । पञ्चकयोगो निरर्थकः षोडशाक्षरायामष्टावेक इति षोडशषष्ठ्या गायत्र्यां सार्थक एकः । यतिपञ्चकस्य योगे द्विकयोगा अष्टाक्षरायामनुष्टुभि सार्थकौ द्वौ निरर्थक एकः तुष्टुभि सार्थकौ द्वाविति पञ्च त्रिकयोगाः पङ्क्तौ सार्थकास्त्रयः । त्रयोदशाक्षरायामतिजगत्यां सार्थकाः पञ्च निरर्थक एकोऽष्टौ सार्थक एक इति दशचतुष्कयोगाः सार्थका जगत्यामेकः पञ्चदशाक्षरायामतिशक्कर्यां षट् । अष्टादशाक्षरायां धृतौ त्रय इति दशपञ्चकयोगाः सार्थकाः सप्तदशाऽक्षरायामत्यष्टौ द्वौ विंशत्यक्षरायां कृतौ त्रय इति पञ्चषड्योगः सार्थको द्वाविंशत्यक्षरायामाकृतावेक इति द्वात्रिंशत् ।

सप्तम्या उष्णिहि सार्थक एकः यतिषट्कस्य योगे द्विकयोगा बृहत्यां सार्थकौ द्वौ निरर्थक एको जगत्यां सार्थकौ द्वौ अतिजगत्यां सार्थक एक इति षट् त्रिकयोगास्तुष्टुभि सार्थकास्त्रयः शक्वर्यां सार्थकाः पञ्च निरर्थक एकः अतिशक्वर्यां सार्थकौ द्वौ निरर्थक एकः अत्यष्टौ सार्थक एको धृतौ सार्थकौ द्वाविति पञ्चदशचतुष्कयोगा अतिजगत्यां सार्थक एकोऽष्टौ सार्थकाः षट् अत्यष्टौ सार्थकास्त्रय एकोनविंशत्यक्षरायामतिधृतौ सार्थकास्तावन्तः कृतौ सार्थकाः पञ्च निरर्थक एकः त्रयोविंशत्यक्षरायां विकृतौ सार्थक एक इति विंशतिः ।

पञ्चकयोगाः सार्थका धृतौ द्वावतिधृतावेकः । एकविंशत्यक्षरायां प्रकृतौ त्रयः आकृतौ षट् पञ्चविंशत्यक्षरायामभिकृतौ त्रय इति पञ्चदशषड्योगाः सार्थका विकृतावेकः चतुर्विंशत्यक्षरायां संकृतौ द्वौ सप्तविंशत्यक्षरायां शेषजातौ त्रय इति षट् । सप्तकयोगः सार्थक एकोनत्रिंशदक्षरायां शेषजातावेक इति चतुःषष्टिरित्येवमेककाभिः सप्तभिर्यतिभिरत्युक्तायां सार्थक एको निरर्थकौ द्वौ सुप्रतिष्ठायां सार्थक एको निरर्थक एको गायत्र्यां सार्थक एकः उष्णिहि सार्थक एक इति सार्थकाश्चत्वारो निरर्थकास्त्रय इति सप्तद्विकयोगाः प्रतिष्ठायां सार्थकौ द्वौ निरर्थक एकः । उष्णिहि सार्थकास्त्रयो निरर्थकास्तावन्तोऽनुष्टुभि सार्थकौ द्वौ निरर्थक एको बृहत्यां सार्थकौ द्वौ निरर्थक एकः पङ्क्तौ निरर्थक एकस्तुष्टुभि सार्थकौ द्वौ जगत्यां सार्थकौ द्वौ अतिजगत्यां सार्थक एक इति सार्थकाश्चतुर्दश निरर्थकाः सप्त इत्येकविंशतिः ।

त्रिकयोगा गायत्र्यां सार्थक एको बृहत्यां सार्थकास्त्रयो निरर्थकास्तावन्तः पङ्क्तौ सार्थकास्त्रयस्तुष्टुभि सार्थकास्तावन्तो जगत्यां निरर्थकास्त्रयोऽतिजगत्यां सार्थकाः पञ्च निरर्थक एकः शक्वर्यां सार्थकाः पञ्च निरर्थक एकोऽतिशक्वर्यां सार्थकौ द्वौ निरर्थक एकोऽष्टौ सार्थक एकोऽत्यष्टौ सार्थक एको धृतौ सार्थकौ द्वाविति सार्थकाः षड्विंशतिर्निरर्थका नवेति पञ्चत्रिंशत् चतुष्कयोगास्तुष्टुभि सार्थक एको निरर्थक एको जगत्यां सार्थक एकोऽतिजगत्यां सार्थक एकः शक्वर्यां निरर्थकास्त्रयोऽतिशक्वर्यां सार्थकाः षट् अष्टौ सार्थकास्तावन्तोऽत्यष्टौ सार्थकास्त्रयो धृतौ सार्थकास्तावन्तोऽतिधृतौ सार्थकास्त्रयः कृतौ सार्थकाः पञ्च निरर्थक एको विकृतौ सार्थक एक इति सार्थकास्त्रिंशत् निरर्थकाः पञ्चेति पञ्चत्रिंशत् ।

पञ्चकयोगा अष्टौ निरर्थक एकोऽत्यष्टौ सार्थकौ द्वौ धृतौ सार्थकौ द्वावतिधृतौ सार्थक एकः कृतौ सार्थकास्त्रयः । प्रकृतौ सार्थकास्तावन्त आकृतौ सार्थकाः षट् अभिकृतौ सार्थकास्त्रय इति सार्थका विंशतिर्निरर्थक एक इत्येकविंशतिः षट्कयोगाः सार्थका आकृतावेको विकृतावेकः संकृतौ द्वौ शेषजातौ त्रय इति सप्तसप्तकयोगः सार्थकः शेषजातावेक इति ।

अत्युक्तायां सार्थक एको निरर्थकौ द्वौ प्रतिष्ठायां सार्थकौ द्वौ निरर्थक एकः सुप्रतिष्ठायां सार्थक एको निरर्थक एको गायत्र्यां सार्थकौ द्वावुष्णिगहि सार्थकाश्चत्वारो निरर्थकास्त्रयोऽनुष्टुभि सार्थकौ द्वौ निरर्थक एकः बृहत्यां सार्थकाः पञ्च निरर्थकाश्चत्वारः पङ्क्तौ सार्थकास्त्रयो निरर्थक एकस्त्रिष्टुभि सार्थकाः षट् निरर्थक एको जगत्यां सार्थकास्त्रयो निरर्थकास्तावन्तोऽतिजगत्यां सार्थकाः सप्त निरर्थक एकः शक्वर्यां सार्थकाः पञ्च निरर्थकाश्चत्वारोऽतिशक्वर्यां सार्थका अष्टौ निरर्थक एकोऽष्टौ सार्थकाः सप्त निरर्थक एकोऽत्यष्टौ सार्थकाः षट् धृतौ सार्थकाः सप्त अतिधृतौ सार्थकाश्चत्वारः । कृतौ सार्थका अष्टौ निरर्थक एकः । प्रकृतौ सार्थकास्त्रय आकृतौ सार्थकाः सप्त विकृतौ सार्थकौ द्वौ संकृतौ सार्थकौ द्वावभिकृतौ सार्थकास्त्रयः । शेषजातिद्वये सार्थकाश्चत्वार इति सार्थका द्व्युत्तरं शतं निरर्थकाः पञ्चविंशतिरिति सप्तविंशत्यधिकं शतम् १ नि । २ । १२ । ३ । १३ । २३ । १२३ । ४ नि । १४ नि । २४ । १२४ । ३४ । १३४ । २३४ । १२३४ । ५ नि । १५ नि । २५ नि । १२५ नि । ३५ नि । १३५ नि । २३५ नि । १२३५ नि । ४५ नि । १४५ नि । २४५ नि । १२४५ नि । ३४५ नि । १३४५ नि । २३४५ नि । १२३४५ नि । ६ । १६ । २६ । १२६ । ३६ । १३६ ! २३६ । १२३६ । ४६ नि । १४६ । २४६ । १२४६ । ३४६ । १३४६ । २३४६ । १२३४६ । ५६ । १५२५६ । १२५६ । SSSSS । ३५६ । १३५६ । २३५६ । १२३५६ । ४५६ नि । १४५६ । २४५६ । १२४५६ । ३४५६ । १३४५६ । २३४५६ । १२३४५६ । ७ । १७ । २७ । १२७ । ३७ । १३७ । २३७ । १२३७ । ४७ नि । १४७ । २४७ । १२४७ । ३४७ । १३४७ । २३४७ । १२३४७ । ५७ । १५७ । २५७ । १२५७ । ३५७ । १३५७ । २३५७ । १२३५७ । ४५७ नि । १४५७ । २४५७ । १२४५७ । ३४५७ । १३४५७ । २३४५७ । १२३४५७ । ६७ । १६७ । २६७ । १२६७ । ३६७ । १३६७ । २३६७ । १२३६७ । ४६७ नि । १४६७ । २४६७ । १२४६७ । ३४६७ । १३४६७ । २३४६७ । १२३४६७ । ५६७ । १५६७ । २५६७ । १२५६७ । ३५६७ । १३५६७ । २३५६७ । १२३५६७ । ४५६७ नि । १४५६७ । २४५६७ । १२४५६७ । ३४५६७ । १३४५६७ । २३४५६७ । १२३४५६७ ।

तत्र प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च यथा ज्ञायते तथा न्यासः सप्तभिर्विच्छेदैरबोधः क्रमेण चत्वारः पादा न्यसनीयाः । प्रथमा यत्यैको द्वितीयया द्वौ तृतीयया चत्वार इति क्रमेण सप्तम्या यत्या यावच्चतुःषष्टिः श्लोकाः समुत्पद्यन्त इति तदधस्ताद्यतौ यतावेको

द्वौ चत्वार इति द्विगुणद्विगुणाया परिपाट्या तावदङ्का विन्यस्यन्ते यावत् सप्तम्यां यतौ चतुःषष्टिः । तथा हि

| | | | | | | |
|---|---|---|---|---|---|---|
| वन्द्या | देवी | पर्वतपुत्री | नित्यं | मधुमधुर | कमलवदना | पुरन्द्रद्यधिदेवता |
| देवैः | स्तुत्या | किन्नरगेया | भक्त्या | वरचरित | महिषमथनी | जगत्त्रयनायिका |
| सिद्धै | ध्येया | केसरियाना | काम | रणचतुर | रसिकहृदया | त्रिलोचनवल्लभा |
| धीरैः | पूज्या | दर्पणपाणै | नूनं | गुणनिलय | लटभलडिता | सतीषु धुरंधरा |

प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या ज्ञेया यतिष्वधः ।
द्विगुणद्विगुणैरङ्कैरेकद्विचतुरादिकैः ॥

तत्र च प्रथमायां यतौ लोष्टे दत्ते एको द्वितीयायां दत्ते प्रथमायाश्चोत्सारिते एकः प्रथमायां पुनर्दत्ते द्विकयोगे एक इति द्वौ तृतीयायां ते चैकः प्रथमायां पुनर्दत्ते द्विकयोगे एको द्वितीयायां च दत्ते प्रथमायाश्चोत्सारिते द्विकयोग एवैकः प्रथमायां पुनर्दत्ते त्रिकयोगे एक इनि चत्वारश्चतुर्थ्यां[1] दत्ते प्राक्तनयतित्रयादुत्सारिते चैकः प्रथमायां पुनर्दत्ते द्विकयोगे एको द्वितीयायां च दत्ते प्रथमायाश्चोत्सारिते द्विकयोग एवैकः प्रथमायां पुनर्दत्ते त्रिकयोग एक इत्यमुना लोष्टसञ्चारे[2] क्रमेण प्रस्तारः परिज्ञेयः ।

सङ्ग्रहश्लोकश्चात्र

प्रथमायां यतौ लोष्टे द्वितीयायां द्वये कृते ।
तृतीयायां द्वये चैवं प्रस्तारः परिकीर्त्तितः ॥

कः प्रथमः को द्वितीयः कस्तृतीयः इत्यादौ पृष्टे यस्य विच्छेदस्याधस्तादेकोऽङ्कः स प्रथमः । यस्य चाऽधो द्विकः स द्वितीयः । ययोश्चाधस्तादेककद्विकौ तद्योगे तृतीयो यस्य चाऽधश्चतुष्कः स चतुर्थो ययोश्चाधश्चतुष्कैककौ तद्योगे पञ्चमो ययोश्चाधश्चतुष्कद्विकौ तद्योगे षष्ठो येषां चाधश्चतुष्कद्विकैककास्तद्योगे सप्तम इत्यनया रीत्या नष्टं निर्देश्यम् ।

सङ्ग्रहश्लोकश्चात्र ।

क आद्यः को द्वितीयः कस्तृतीयः कश्चतुर्थकः ।
इत्येवमादिके पृष्टेऽधोऽधोऽङ्कैर्नष्टमादिशेत् ॥

वन्द्या देवैः सिद्धैर्धीरैरिति कतमो देवी स्तुत्या ध्येया पूज्येति कतमो वन्द्या देवी देवैः स्तुत्या सिद्धैर्ध्येया धीरैः पूज्येति च कतम इत्यादौ पृष्टे वन्द्या देवैरिति प्रथमो देवी स्तुत्येति द्वितीयो वन्द्या देवी देवैः स्तुत्येति तृतीयः पर्वतपुत्री किन्नरगेयेति चतुर्थो वन्द्या

१. तृतीयायां दत्ते प्राक्तनयतिद्वयादुत्सारिते ग. ॥ २. सञ्चारक्रमेण ग. ॥

पर्वतपुत्री देवैः किन्नरगेयेति पञ्चमो देवी पर्वतपुत्री स्तुत्या किन्नरगेयेति षष्ठो वन्द्या देवी-पर्वतपुत्री देवैः स्तुत्या किन्नरगेयेति च सप्तम इत्यनया स्थित्या पृष्टश्लोकस्याऽधस्ताद्वि-न्यस्ताङ्कानुमानेनोद्दिष्टं निर्देष्टव्यमिति ।

सङ्ग्रहश्लोकश्चात्र

पठित्वा स्वेच्छया श्लोकममुकः कतमो मतः ।
इत्येवं सुधिया पृष्टेऽधोङ्कैरुद्दिष्टमादिशेत् ॥

सङ्ख्या चाऽधस्ताद्विन्यस्तानां द्विगुणद्विगुणानामेककद्विकादीनामङ्कानां मीलने भवतीति प्रथमायां यतावेको द्विकयोगे त्रयस्त्रिकयोगे सप्त चतुष्कयोगे पञ्चदश पञ्चकयोगे एकत्रिंशत् षट्कयोगे त्रिषष्टिः सप्तकयोगे तु सप्तविंशत्यधिकं शतमिति । एषा च सङ्ख्या क्रमेणैव योज्यमानासु यतिषु जायते । क्रमव्युत्क्रमाभ्यां तु या सङ्ख्या सा शतधेनु-प्रस्तावेनोपयुज्यते इति न प्रदर्शिता । यदा च यतिसप्तकयोगे कियन्त एककाः कियन्तो द्विकयोगाः कियन्तश्च त्रिकयोगा इत्यादि प्रश्नस्तदा

एगाई एगुत्तरपत्ते य पयम्मि उवरिपक्खेवो ।
एक्केक्कहागि अवसाण संखया होंति संजोगा ॥

इति पारमेश्वरवचनाऽनुसारेण ऊर्ध्वोर्ध्वक्रमेण एकादय एकोत्तरया वृद्ध्या सप्त यावन्त्यसती यः । ततश्चैकको द्विके स च त्रिकस्त्रिके स च षट्कश्चतुष्के स च दशकः पञ्चके स च पञ्चदशकः षट्के निक्षिप्यते उपरितनश्च सप्तकः परिहर्त्तव्यः । न तत्र एक-विंशतिकोऽङ्कः प्रक्षिप्यत इत्यर्थः । प्रक्षेप्याश्चैककादयोऽङ्कास्तथैव धरणीयाः । पुनश्चैकक-स्त्रिके स च चतुष्कः षट्के स च दशको दशके स च विंशतिकः पञ्चदशके निक्षिप्यते । उपरितनस्त्वेकविंशतिकः परिहर्त्तव्यः । एवं पुनः पुनर्निक्षिप्योपरितनोपरितनः पञ्चत्रिंशत्के एकविंशतिकः सप्तकश्च परिहर्त्तव्यः । मौलश्चैककस्तथैवास्त इत्युपरितनपक्षादारभ्याधोऽधः क्रमेणैककाः सप्तद्विकयोगा एकविंशतिस्त्रिकयोगाः पञ्चत्रिंशत् चतुष्कयोगास्तावन्तः पञ्चकयोगा एकविंशतिः षट्कयोगाः सप्तसप्तकयोगश्चैक इति सप्तविंशत्यधिकं शतम् ।

अस्य च करणस्य वासना यथा । एकादीनामङ्कानामेकोत्तरया वृद्ध्या ऊर्ध्वो-र्ध्वक्रमेण विन्यसनेऽधस्तनमङ्कमुपर्युपरि प्रक्षिप्य द्विकादिसंयोगविकल्पसमुत्पादनमप्रक्षि-प्यैककयतिविकल्पपरिकल्पनं चेति मुख्यामुख्ये कारणे प्रभवतः । तथा हि एकया यत्या एककयतिविकल्प एकः समुत्पद्यत इत्येककः द्वाभ्यां यतिभ्यामेककयतिविकल्पौ द्वौ समु-त्पद्येते इति द्विकः । एवं तिसृभिस्त्रय इति त्रिको यावत् सप्तभिर्यतिभिरेककयतिविकल्पाः

१. क. २ एक-ग. ॥-श्चैककस्त-ग. ॥

सप्त समुत्पद्यन्त इति सप्तको विन्यस्तः। एत एव चाङ्का द्विकयोगमुत्पादयन्तीति द्वितीयया प्रथमाया यतेर्योगे द्विकयोग एक इत्येककः स एव ततस्तृतीयया द्वितीयस्याः प्रथमायाश्च योगे द्वाविति स एव द्विकः। द्वितीयाप्रथमयोश्च योगे एक इति स एवैकक इत्येककद्विकाभ्यां मिलिताभ्यां तिसृषु यतिषु द्विकयोगास्त्रयइति त्रिकः चतुर्थ्या प्रथमादीनां तिसृणां योगे त्रय इति स एव त्रिकः। तृतीयया द्वितीयया च तथैव द्वावेकश्चेति तावेव द्विकैककौ मिलितैश्च त्रिभिरङ्कैश्च तिसृषु यतिषु षडिति षट्कः। पञ्चम्या चतसृणां योगे चत्वार इति स एव चतुष्कः। चतुर्थ्यादिना तथैव त्रयो द्वावेकश्चेति त एव त्रिकद्विकैकका मिलितैश्च पञ्चसु यतिषु दशेति दशकः। एवं षट्सु पञ्चदशेति पञ्चदशकः। सप्तसु चैकविंशतिरेकोत्तरया वृद्ध्या ऊर्ध्वोर्ध्वक्रमेण विन्यस्तैरुपर्युपरि प्रक्षिप्य मीलितैश्च द्विकयोगाः समुत्पद्यन्ते इत्येकविंशतिकः। उपरितनश्च सप्तकः सप्तभिर्यतिभिः षट्षड्भिः पञ्चपञ्चभिश्चत्वारश्चतसृभिश्च त्रयस्तिसृभिर्द्वौ द्वाभ्यामेकश्च द्विकयोगा सप्तम्यादिसद्भावे जायन्त इत्येकविंशतौ तेषु सप्तम्यादि यतिर्यथासम्भवं संयुज्यत इति गात्रत एका यतिश्चरितार्थत्वात् परिहार्येति परिहृतः। न तत्राऽधस्तनोऽङ्कः प्रक्षिप्त इत्यर्थः। तेन च सप्तकेनैककाः सप्तविकल्पाः सूच्यन्त इति कथितमेव प्रक्षेप्याश्चैककेत्रिकादयोऽङ्कास्त्रिकयोगसमुत्पत्तये तथैव वृताः। तत्र च द्वितीयया प्रथमाया योगे द्विकयोग एको यादृग् लब्धस्तादृशस्यैव तृतीयया योगे त्रिकयोग एको लभ्यत इति त्रिकयोगेष्वेककः स एव तृतीयया प्राक्तन्योर्द्वयोर्योगे द्विकयोगा यादृशस्त्रयो लब्धास्तादृशामेव तेषां चतुर्थ्या योगे त्रय इति स एव त्रिकः। प्रथमादियतित्रययोगे एकश्चेति स एवैकक इति चतसृषु यतिषु चत्वारस्त्रिकयोगा इति चतुष्कः। चतुर्थ्या प्राक्तनीनां यतीनां योगे द्विकयोगा यादृशः षड् लब्धास्तादृशामेव तेषां पञ्चम्या योगे षडिति स एव षट्कः। प्रथमादीनां चतसृणां योगे त्रय इति स एव त्रिकः। प्रथमादियतित्रययोगे एकश्चेति स एवैकक इति पञ्चसु यतिषु दशत्रिकयोगा इति दशकः। एवं षट्सु दश षट् त्रय एकश्चेति त एव दशकषट्कत्रिकैककाः। मिलितैश्च विंशतिरिति विंशतिकः। सप्तसु च पञ्चदश दश षट् त्रय एकश्चेति त एव पञ्चदशकदशकषट्कत्रिकैकाः मिलितैश्च पञ्चत्रिंशदिति पञ्चत्रिंशत्कः।

तथा हि द्वितीयातृतीयाभ्यां प्रथमाया योगे त्रिकयोग एक इत्येककः द्वितीयाचतुर्थीभ्यां प्रथमायास्तृतीयाचतुर्थीभ्यां प्रथमाया द्वितीयस्याश्च योगे त्रय इति स एव त्रिकः। प्रथमादीनां तिसृणां योगे एक इति स एवैकको मिलिताश्च चतसृषु यतिषु त्रिकयोगाश्चत्वार इति चतुष्कः चतुर्थीपञ्चमीभ्यां प्रथमादीनां तिसृणां तृतीयापञ्चमीभ्यां

१. चैकत्रि ग. ॥ २. पञ्चमीभ्यां प्रथमाद्वितीययोः द्वितीयापञ्चमीभ्याम् ग. ॥

प्रथमाया योगे[1] षडिति षट्कः[2] तृतीयाचतुर्थीभ्यां[3] द्वितीयाचतुर्थीभ्यां च तथैव त्रय इति त्रिकः। द्वितीयातृतीयाभ्यां तथैवैक इत्येकको मिलिताश्च पञ्चसु यतिषु दशेति दशकः। पञ्चमीषष्ठीभ्यां प्रथमादीनां चतसृणां चतुर्थीषष्ठीभ्यां प्रथमादीनां तिसृणां तृतीयाषष्ठीभ्यां प्रथमाद्वितीययोर्द्वितीयाषष्ठीभ्यां प्रथमायाश्च योगे दशेति दशकः। चतुर्थीपञ्चमी प्रमुखस्य द्वयस्य द्वयस्य योगे तथैव षट् त्रय एकश्चेति षट्कत्रिकैकका मिलिताश्च षट्सु पदेषु विंशतिरिति विंशतिक एवं सप्तसु पदेषु पञ्चत्रिंशत् त्रिकयोगाः समुत्पद्यन्त इति पञ्चत्रिंशत्कः। अत्रापि सप्तकः षट्कनिष्पन्न एकविंशतिकश्च पञ्चत्रिंशत्त्रिकयोगेषु द्वे द्वे यती संयुज्येते इति गात्रतो यतिद्वयं परिहार्यमिति परिहृतौ। प्रक्षेप्याश्चैककचतुष्कादयोऽङ्काश्चतुष्कयोगसमुत्पत्तये तथैव वृताः। तत्र च द्वितीयातृतीयाभ्यां प्रथमाया योगे त्रिकयोग एको यादृग्लब्धः तादृशस्यैव चतुर्थ्या योगे चतुर्योग एको लभ्यत इति चतुष्कयोगेष्वेककः स एव। चतुर्थ्या प्राक्तनीनां तिसृणां योगे त्रिकयोगा यादृशाश्चत्वारो लब्धास्तादृशामेव तेषां पञ्चम्या योगे चत्वार इति स एव चतुष्कः प्रथमादियतिचतुष्टययोगे चैक इति स एवैककश्चेति पञ्चसु यतिषु चतुष्कयोगाः पञ्चेति पञ्चकः। एवं षट्सु यतिषु चतुष्कयोगा दश चत्वार एकश्चेति। त एव दशकचतुष्कैककास्तैश्च पञ्चदशेति पञ्चदशकः सप्तसु च विंशतिर्दश चत्वार एकश्चेति त एव विंशतिकादयस्तैश्च चतुष्कयोगाः पञ्चत्रिंशत्समुत्पद्यन्त इति पञ्चत्रिंशत्कः।

तथा हि द्वितीयादिभिस्तिसृभिः प्रथमाया योगे चतुष्क योग एक इत्येककः। द्वितीयातृतीयापञ्चमीभिः द्वितीयाचतुर्थीपञ्चमीभिश्च प्रथमाया योगे तृतीयाचतुर्थीपञ्चमीभिः प्रथमाया द्वितीयस्याश्च योगे चत्वार इति स एव चतुष्कः। प्रथमादियति-चतुष्टययोगे एक इति स एवैकको मिलिताश्च पञ्चसु यतिषु चतुष्कयोगाः पञ्चेति पञ्चकः। एवं षट्सु पदेषु चतुष्कयोगाः पञ्चदशेति पञ्चदशकः। सप्तसु पञ्चत्रिंशत्कः अमुत्राऽपि सप्तक एकविंशतिकः पञ्चकनिष्पन्नः पञ्चत्रिंशत्कश्च परिहृतः। एककपञ्चकादयश्च तथैव धृताः। एवं पञ्चानां यतीनां योग एक इत्येककः स एव षट्सु पञ्चकयोगाः षडिति षट्कः सप्तसु चैकविंशतिरित्येकविंशतिकः। अमुष्मिन्नपि चत्वारोऽङ्कास्तथैव परिहृताः। एककषट्कौ च तथैव धृतौ षण्णां[4] योग एक इत्येककः स एव सप्तसु च षट्कयोगाः सप्तेति सप्तकः। उपरितनाश्चाङ्काः पञ्च तथैव परिहृताः। एककश्च तथैव धृतः। सप्तानां च योगे सप्तकयोग एक इत्येककः स एव उपरितनाश्च षडङ्काः परिहृता इति। प्रथम-

---

१. प्रथमायाः षडिति ग. ॥ २. –षट्कः प्रथमाद्वितीययोः द्वितीयापञ्चमीभ्याम् जे. ॥ ३. प्रथमाद्वितीययोः द्वितीयापञ्चमीभ्यां द्वितीयाचतुर्थीभ्यां तृतीयाचतुर्थीभ्यां च. ग. ॥ ४ षण्णां योगे षट्कयोग– ग. ॥

षष्ठानां द्वितीयपञ्चमानां तृतीयचतुर्थानां च विकल्पानामेकत्र आद्रियमाणया अपरत्र परिह्रियमाणया एकया द्वाभ्यां तिसृभिः साम्यात् समत्वमवसेयम्। एवमुत्तरत्राऽपि वासना सुधीभिरभ्यूह्या। यदि वा

अहवा पयाणि ठविउं अक्खे घेत्तूण वारणं कुज्जा।
एक्किगदुगाइजोगा भंगाणं संख कायव्वा॥ १॥

इति वचनानुसारेण एकादिका एकोत्तरया वृद्ध्या सप्त यावद्यतीः स्थापयित्वा अक्खे इति लोष्ठान् प्रक्षिप्य सञ्चार्य्य च एककद्विकादियोगसङ्ख्या कर्त्तव्या,। तथा हि एकैकस्यां यतौ लोष्ठे सञ्चारिते एककाः सप्त प्रथमायां यतौ लोष्ठे दत्ते द्वितीयादिषु च क्रमेणैकैकस्यां द्वितीयलोष्ठे सञ्चारिते षट् द्वितीयायां दत्ते तृतीयादिषु च तथैव पञ्च। तृतीयायां दत्ते चतुर्थ्यादिषु च तथैव चत्वारः। चतुर्थ्यां दत्ते पञ्चम्यादिषु च तथैव त्रयः। पञ्चम्यां दत्ते षष्ठ्यादौ च तथैव द्वौ। षष्ठ्यां सप्तम्यां च दत्ते एक इति द्विकयोगा एकविंशतिः। प्रथमाद्वितीययत्योर्लोष्ठद्वये दत्ते तृतीयादिषु च क्रमेणैकैकस्यां तृतीयलोष्ठे सञ्चारिते पञ्च प्रथमातृतीययोश्चतुर्थ्यादिषु च तथैव चत्वारः। प्रथमाचतुर्थ्योः पञ्चम्यादिषु च तथैव त्रयः प्रथमापञ्चम्योः षष्ठ्यादौ च तथैव द्वौ प्रथमाषष्ठ्योः सप्तम्यां च तथैवैकः। द्वितीयातृतीययोश्चतुर्थ्यादिषु च तथैव चत्वारः। द्वितीयाचतुर्थ्योः पञ्चम्यादिषु च तथैव त्रयः। द्वितीयापञ्चम्योः षष्ठ्यादौ च तथैव द्वौ द्वितीयाषष्ठ्योः सप्तम्यां च तथैवैकः। तृतीयाचतुर्थ्योः पञ्चम्यादिषु च तथैव त्रयः। तृतीयापञ्चम्योः षष्ठ्यादौ च तथैव द्वौ तृतीयाषष्ठ्योः सप्तम्यां च तथैवैकः। चतुर्थीपञ्चम्योः षष्ठ्यादौ च तथैव द्वौ चतुर्थीषष्ठ्योः सप्तम्यां च तथैवैकः। पञ्चमीषष्ठयोः सप्तम्यां च तथैवैक इति त्रिकयोगाः पञ्चत्रिंशदित्येवं चतुष्कादियोगा अप्युन्नेयाः। अथवा

उभयमुहं रासिदुगं हेट्ठिल्लागन्तरेण भए पढमे।
लद्धह रासि विहत्ते तस्सुवरि गुण त्ति संजोगा॥

इति वचनानुसारेण एककद्विकत्रिकचतुष्कपञ्चकषट्कसप्तकाननुलोमपङ्क्त्या लिखित्वा तदधस्तात् प्रतिलोमपङ्क्त्या एककद्विकादयस्त एवाङ्का लेखनीया। ततश्चाधस्तनैककान्तरेण द्विकेनोपरितनं प्रथमं सप्तकं विभजेत्। तत्र च सार्द्धास्त्रयो ये लभ्यन्ते ते तस्मिन् सप्तके तथैव स्थिते तदुपरि न्यस्यन्ते ततश्च लद्धहरासि विहत्ते इति। अधोराशिना विभक्ते सत्युपरितनराशौ यल्लब्धं तेन सार्द्धत्रिकेण तस्य द्विकस्योपरि यः षट्कस्तस्मिन् गुणिते द्विकसंयोगा एकविंशतिर्भवन्ति। ततश्चाधस्तनद्विकानन्तरेण त्रिकेण एकविंशतिके विभक्ते लब्धेन सप्तकेन तथैव गुणिते पञ्चके त्रिकसंयोगाः पञ्चत्रिंशत् चतुष्केन

पञ्चत्रिंशत्के विभक्ते लब्धेन पादोननवकेन चतुष्के गुणिते चतुष्कसंयोगास्तावन्त एव। पञ्चकेन पञ्चत्रिंशत्के विभक्ते लब्धेन सप्तकेन त्रिके गुणिते पञ्चकसंयोगा एकविंशतिः। षट्केनैकविंशतिके विभक्ते लब्धेन सार्द्धत्रिकेण द्विके गुणिते षट्कसंयोगाः सप्त सप्तकेन सप्तके विभक्ते लब्धेनै-ककेनैकके गुणिते सप्तकसंयोग एक एव। एककास्त्वधस्तनेनैककेनोपरितने सप्तके विभक्ते सप्तैव लभ्यन्त इत्यन्त्यः सप्तकः स्थितक एवोपरितनराशौ ध्रियत इत्येककैः सप्तभिः सह सप्त-विंशत्यधिकशतम्। यद्वा स्थितेनागन्तुकं हन्यादीप्सितेन विभाजयेदित्यादिना वक्ष्यमाणेन न्यायेन एककद्विकादिसंयोगान् निर्दिशेत्। तथैव ह्युभयमुखं राशिद्वयं स्थापयित्वाऽध-स्तनराशौ प्रागन्यस्य स्थितस्याभावात् सप्तकस्याहतेरसम्भवः। एककाश्च जिज्ञासिता इतीप्सितेनोपरितनेनैककेन तस्मिन् विभक्ते तावन्त एव लभ्यन्ते। ततश्च स्थितेन सप्तकेन सामान्यतो द्विकयोगसंख्यावाची अनन्तरो यः षट्कोऽत एव चाऽऽगन्तुकस्तस्मिन्नाहते ईप्सितेन च द्विकेन विभक्ते द्विकयोगा एकविंशतिर्भवन्ति। एवं चैकविंशत्याहते पञ्चके त्रिकेन च विभक्ते पञ्चत्रिंशत्। पञ्चत्रिंशता चाहते चतुष्के चतुष्केनैव च विभक्ते पञ्च-त्रिंशदेव पञ्चत्रिंशता चाहते त्रिके पञ्चकेन च विभक्ते एकविंशतिः। एकविंशत्या चाहते द्विके षट्केन च विभक्ते सप्तसप्तकेन चाहते एकके सप्तकेन च विभक्ते एक एवेति सप्त-विंशत्यधिकं शतं सार्थकेष्वेकोत्तरशतसङ्ख्येषु तर्णकश्लोकेषु सदृशः प्रस्ताराः प्रतिष्ठाया-मेकः उष्णिह्येकः अनुष्टुभ्येको बृहत्यां द्वौ पङ्क्तौ द्वौ तुष्टुभि द्वावतिजगत्यां द्वौ शक्वर्यां द्वावतिशक्वर्यां चत्वारोऽष्टौ त्रयोऽत्यष्टौ द्वौ धृतावेकः अतिधृतावेकः कृतौ त्रयः प्रकृतावेक आकृतौ त्रयोऽभिकृतावेकः शेषजातावेक इति त्रयस्त्रिंशत् शेषाश्च विसदृशः प्रस्तारा अष्ट-षष्टिरिति सदृशासदृशप्रस्तारास्वपि छन्दोजातिषु चतुर्विंशतौ यतिविच्छेदिनी ह्येषेत्यत्र छन्दोभेदाद् इति यदुक्तं तद्वैसादृश्यबाहुल्याभिप्रायेणेति॥

**पदान्यत्रे**त्यादि। मनु विरतिर्न जौ भजगणत्रितयं भजला गुरुर्यदि सुधाकलशः। तत्र च षट्स्वपि पदेषूपादीयमानेषु शतधेनुवत् क्रमेणैककद्विकादियोगैः श्लोकास्त्रिषष्टिरुत्प-द्यन्ते न च तत्र प्रायशः क्रियाकारकयोगो न च तथाविधप्रस्तारभेदः सहस्रं च तर्णक-श्लोकाः समुत्पाद्यास्ते च प्रस्तारान्यत्वेन परिकल्प्यमानाः प्रतिपादं विकल्पानुत्थाप्य प्रथमपादविकल्पैरुत्तरोत्तरपादविकल्पेष्वाहतेषु यदि परं समुत्पद्यन्ते, तत्राऽपि षट्सु पदेषु क्रमव्युत्क्रमाभ्यां संयुज्यमानेषु प्रतिपादं विंशत्यधिकं शतसप्तकं सदृशासदृशप्रस्तारं विकल्पाः समुत्पद्यन्ते। तथा ह्युद्ध्वोर्द्ध्वक्रमेणैकादीनेकोत्तरया वृद्ध्या षड् यावद् विन्यस्योत्तरोत्तरे पूर्वपूर्वेण गुण्यमाने षट्सु गुणितेष्वेतावन्त एवोत्पद्यन्ते।

१. छन्दःप्रस्तारस्तस्य च बाहुल्यं विसदृशस्यात इदमुक्तम्।

एकैकवृद्ध एकादौ गुणिते चोत्तरोत्तरे ।
पदद्वयमुखानां स्यात् प्रस्तारः सक्रमाक्रमः ॥

पदद्वयेति पदद्वयप्रमुखानां पदद्वयत्रयचतुष्कपञ्चकषट्कादीनामित्यर्थः । अथवोभयमुखे राशिद्वये परिस्थापितेऽधस्तनराशावादौ यः षट्कस्तेन हते पञ्चके त्रिंशत् त्रिंशता च हते चतुष्के विंशत्युत्तरं शतं एवं त्रिके षष्ट्यधिकं शतत्रयं द्विके एकके च विंशत्यधिकं शतसप्तकं विंशत्यधिकं शतसप्तकमित्युपरितनराश्यङ्कसंयोगाः समुत्पद्यन्त इति पदषट्कयोगे विकल्पानां तावत्येव सङ्ख्या ।

राश्योरुभयमुखयोर्हतेऽधश्चोत्तरोत्तरे ।
एककद्विकादियोगा जायन्ते सक्रमाक्रमाः ॥

प्रस्तारश्चात्र विंशत्यधिकेषु सप्तसु शतेषु षड्भिः पदैर्विभक्तेषु लब्धे विंशत्युत्तरे शते तावद्वारमेवाऽधोऽधःक्रमेण प्रथममेककास्ततो द्विका अनन्तरं त्रिकाः पश्चाच्चतुष्कास्तदनु पञ्चकाः पृष्ठतः षट्का इत्येका दीर्घा पङ्क्तिः प्रस्तार्यते । ततः पञ्चभिः शेषैः पदैर्विभक्ते विंशत्युत्तरे शते विंशत्युत्तरे शते लब्धायां चतुर्विंशतौ तावद्वारमेव तथैव द्विकादय एककस्य एककत्रिकादयो द्विकस्य एककद्विकचतुष्कपञ्चकषट्कास्त्रिकस्य । एककद्विकत्रिकपञ्चकषट्काश्चतुष्कस्य एककद्विकत्रिकचतुष्कषट्काः पञ्चकस्य एककद्विकत्रिकचतुष्कपञ्चकाः षट्कस्य च दक्षिणत इति द्वितीया पङ्क्तिः । अनन्तरं चतुर्भिः पदैर्विभक्तायां चतुर्विंशतौ लब्धेषु षट्सु तावद्वारमेव तथैव त्रिकादयो द्विकस्य द्विकचतुष्कपञ्चकषट्कास्त्रिकस्य द्विकत्रिकपञ्चकषट्काश्चतुष्कस्य द्विकत्रिकचतुष्कषट्काः पञ्चकस्य । द्विकत्रिकचतुष्कपञ्चकाः षट्कस्य त्रिकादय एककस्य एककचतुष्कपञ्चकषट्कास्त्रिकस्य एककत्रिकपञ्चकषट्काश्चतुष्कस्य एककत्रिकचतुष्कषट्काः पञ्चकस्य एककत्रिकचतुष्कपञ्चकाः षट्कस्य द्विकचतुष्कपञ्चकषट्का एककस्य चेत्येवं स्थितस्थितानामङ्कानां क्रमेणैव विन्यासे तृतीया पङ्क्तिः । एवं च त्रिभिः पदैर्विभक्तेषु षट्सु लब्धे द्वये तावद्वारमेव चतुष्कपञ्चकषट्कास्त्रिकस्य त्रिकपञ्चकषट्काश्चतुष्कस्य त्रिकचतुष्कषट्काः पञ्चकस्य त्रिकचतुष्कपञ्चकाः षट्कस्य चतुष्कादयो द्विकस्य चेत्येवं चतुर्थी पङ्क्तिः । पदद्वयेन विभक्ते द्वये लब्धे चैकके एकवारमेव पञ्चकषट्कौ चतुष्कस्य चतुष्कषट्कौ पञ्चकस्य चतुष्कपञ्चकौ षट्कस्य पञ्चकषट्कौ त्रिकस्येवेत्येवं पञ्चमी पङ्क्तिः । एकेन च पदेन विभक्ते एकके लब्धे चैकके एकवारमेव षट्कः पञ्चकस्य पञ्चकः षट्कस्य षट्कश्चतुष्कस्य चतुष्कः षट्कस्य पञ्चकश्चतुष्कस्य चतुष्कः पञ्चकस्य चेत्येवं षष्ठी पङ्क्तिः । यदि वा तिर्यक्पङ्क्त्या लिखिते राशौ षट्कस्याऽधस्तादधोऽधःक्रमेण विंशत्युत्तरशतमेव प्रथमं षट्कास्तदनु पञ्चकाः पश्चाच्चतुष्का अनन्तरं त्रिकास्ततो द्विकाः पृष्ठत एकका

इत्येका दीर्घा पङ्क्तिः प्रस्तार्यते ततश्च राशौ लिखितस्य षट्कस्य वामतो यः पञ्चकस्तत्सूचितैः पञ्चभिः शेषैः पदैर्विभक्ते विंशत्युत्तरे शते लब्धायां चतुर्विंशतौ तावद्वारमेव तथैव पञ्चकादयः षट्कस्य पञ्चकचतुष्कत्रिकद्विकैककवर्जं षट्कादयः पञ्चकचतुष्कत्रिकद्विकैककानां च वामत इति द्वितीया पङ्क्तिः। राशौ पञ्चकस्य वामतो यश्चतुष्कस्तत्सूचितैश्चतुर्भिः पदैः विभक्तायां चतुर्विंशतौ लब्धेषु षट्सु तावद्वारमेव तथैव चतुष्कादयः पञ्चकस्य पञ्चकत्रिकद्विकैकका- श्चतुष्कस्य पञ्चकचतुष्कद्विकैककास्त्रिकस्य पञ्चकचतुष्कत्रिकैकका द्विकस्य पञ्चकचतुष्कत्रिक- द्विका एककस्य चतुष्कादयः षट्कस्य षट्कत्रिकद्विकैककाश्चतुष्कस्य षट्कचतुष्कद्विकैक- कास्त्रिकस्य षट्कचतुष्कत्रिकैकका द्विकस्य षट्कचतुष्कत्रिकद्विका एककस्य चेत्येवं परिशिष्ट- परिशिष्टानामङ्कानां पश्चानुपूर्व्या विन्यासे वामतस्तृतीया पङ्क्तिः। एवं च त्रिकेण सूचितै- स्त्रिभिः पदैर्विभक्तेषु षट्सु लब्धे द्वये तावद्वारमेव त्रिकद्विकैककाश्चतुष्कस्य चतुष्कद्विकैक- कास्त्रिकस्य चतुष्कत्रिकैकका द्विकस्य। चतुष्कत्रिकद्विका एककस्य त्रिकद्विकैककाः पञ्चकस्य पञ्चकद्विकककास्त्रिकस्य चेत्येवं चतुर्थी पङ्क्तिः। द्विकसूचितेन पदद्वयेन विभक्ते द्वये लब्धे चैकक एकवारमेव द्विकैककौ त्रिकस्य त्रिकैककौ द्विकस्य त्रिकद्विकावेककस्य द्विकैककौ चतुष्कस्य चतुष्कैककौ द्विकस्य चतुष्कद्विकावेककस्य चेत्येवं पञ्चमी पङ्क्तिः। एकेन च पदेन विभक्ते एकके लब्धे चैकके एकवारमेव एकको द्विकस्य द्विक एककस्य एककस्त्रिकस्य त्रिक एककस्य द्विकस्त्रिकस्य त्रिको द्विकस्य चेत्येवं षष्ठी पङ्क्तिः।

प्रस्ताराङ्के पदैर्भक्ते लब्धा एकादयः क्रमात्।
न्यस्याऽधोऽधः पुनर्भाज्याः पदैः शेषैस्ततः परम्॥

लब्धास्तत्र पुनर्न्यास्या भाज्या न्यास्याः पुनः पुनः।
यावदन्त्यं पदं प्रोक्तः प्रस्तारः सक्रमाक्रमः॥

यदि वेति पक्षे एकादय इत्यस्य स्थाने[1] षट्कादय इत्युच्चारणीयम्। यदा च षड्भ्यः पदेभ्यः पञ्चकयोगः प्रस्तीर्यते तदाऽन्त्यं पदमित्यन्त्यं पदद्वयं प्रतिपत्तव्यम्। तेन हि यो लब्ध एककस्तस्य शेषेणै[2]केन पदेन भागो न हर्तव्यो न च तल्लब्धस्य न्यासः पञ्चकयोगस्याऽ- भीप्सितत्वात्। चतुर्योगादौ त्वन्त्यं, पदत्रयाद्यवसेयं, तेन हि प्राग्लब्धेष्वेककेषु शिष्यमाणैः पदद्वयादिभिर्भागप्राप्तिरेव नास्तीति। एवमन्यत्राऽपि। ततश्च पदविच्छेदिनीत्यत्र छन्दो- भेदादित्युक्तत्वाद्विंशत्यधिकसप्तशतेभ्यो निर्द्धार्यमाणास्त्रिंशद्विसदृशाः प्रस्ताराः षड्विंशत्य- क्षरायामुत्कृति जातौ समुत्पद्यन्ते। १२३४५६। १२३५४६। १२३५६४। १२४३५६। १४२३५६। २१३४५६। २१३५४६। २१३५६४। २१४३५६।

---

१. स्थान-ग.॥ २. द्विकेन॥

२३१४५६ । २३१५४६ । २३१५६४ । २३४१५६ । २३४५१६ । २३४५६१ २३५१४६ । २३५१६४ । २३५४१६ । २३५४६१ । २३५६१४ । २३५६४१ २४१३५६ । २४३१५६ । २४३५१६ । २४३५६१ । ४१२३५६ । ४२१३५६ ४२३१५६ । ४२३५१६ । ४२३५६१ ।

त्रिंशता च प्रथमपादविकल्पैरुत्तरोत्तरपादविकल्पेष्वाहतेषु भूयांसस्तर्णकश्लोकाः सञ्जायन्ते । तर्णकश्लोकत्वं च समत्वाद् दुर्घटं धेनुश्लोकश्च न पृथग्भवतीति न तावदुचितः स षट्कयोगः । अत्र च यथासङ्ख्यानुरोधेन प्रथमेऽर्द्धे एव विकल्पाः परिकल्प्या इत्यादि यदुपादेयपदत्रययोगे विवेचयिष्यते तत्तथाविधस्योपयोगस्याऽसन्दर्शनान्न विवेचितं सुशिक्षितैस्तु स्वयमभ्यूह्यमेवमुत्तरत्राऽपि । पदपञ्चकयोगेऽपि तावद्वच एव प्रस्तारेभ्यो विवेच्यमानाः परस्परं परतश्च विसदृशप्रस्तारस्य द्वयस्य परस्परमेव सदृशप्रस्तारैस्त्रिभिर्योगे विंशतिः विसदृशप्रस्तारस्य चैकस्य सदृशप्रस्तारैश्चतुर्भिर्योगे पञ्चेति पञ्चविंशतिस्त्रयोविंशत्यक्षरायाम् । १२३४५ । १२३५४ । १२४३५ । १४२३५ । २१३४५ । २१३५४ । २१४३५ । २३१४५ । २३१५४ । २३४१५ । २३४५१ । २३५१४ । २३५४१ । २४१३५ । २४३१५ । २४३५१ । ४१२३५ । ४२१३५ । ४२३१५ । ४२३५१ । १२३५६ । २१३५६ । २३१५६ । २३५१६ । २३५६१ । द्वितीयस्य तु विसदृशप्रस्तारस्य सदृशप्रस्तारैश्चतुर्भिरेव योगे पञ्च । २३४५६ । २३५४६ । २३५६४ । २४३५६ । ४२३५६ । पञ्चदशाक्षरायां जातौ जायन्त इति त्रिंशत् । अत्राऽप्युत्तरोत्तरपादविकल्पेष्वाहतेषु त्रयोविंशत्यक्षरायां जातावनल्पाः पञ्चदशाक्षरायां तु स्वल्पाः सम्पद्यन्त इति न बहुमानः । पदचतुष्टययोगेऽपि षष्ट्यधिकेभ्यस्त्रिभ्यः शतेभ्यो विभेद्यमाना विसदृशप्रस्तारस्य द्वयस्य सदृक्प्रस्ताराभ्यां द्वाभ्यां योगे द्वादश विसदृशप्रस्तारस्य चैकस्य सदृशप्रस्तारैस्त्रिभिर्योगे चत्वार इति विंशत्यक्षरायां जातौ षोडश । १२३४ । १२४३ । १४२३ । २१३४ । २१४३ । २३१४ । २३४१ । २४१३ । २४३१ । ४१२३ । ४२१३ । ४२३१ । १२३५ । २१३५ । २३१५ । २३५१ । द्वादशाक्षरायां तु विसदृशप्रस्तारस्यैकस्य त्रिभिः सदृशप्रस्तारैर्योगे चत्वारः सदृशप्रस्तारचतुष्टययोगे चैक इति पञ्च । २३४५ । २३५४ । २४३५ । ४२३५ । २३५६ । प्राच्यैश्च सममेकविंशतिर्भवन्ति । अमुत्राऽपि पूर्ववदेव विंशत्यक्षरायां जातौ बहवो द्वादशाक्षरायां तु स्तोकाः प्रस्तीर्यन्त इत्यनादरः । पदद्वययोगेऽपि त्रिंशतः पृथक् क्रियमाणाश्चतुर्दशाक्षरायां जातौ चत्वारः १२ । १४ । २१ । ४१ । षडक्षरायां तु विसदृशप्रस्तारद्वययोगे द्वौ सदृशप्रस्तारद्वययोगे चैक इति त्रयः । २४ । ४२ । २३ । पूर्वैश्च सह

सप्त समुत्पद्यन्ते। अस्मिन्नपि कियन्तः कियन्त एंव च वितन्यन्ते, न च तेषु क्रियाकारक-योगस्तथाविध इति न गौरवं, ततश्च सामान्येन पदविच्छेदिनीत्युक्तेऽपि पारिशेष्यात् पद-त्रययोग एवोपादीयते। तत्रापि च विंशत्युत्तरादेकस्मात् शतादुच्चीयमाना न चाक्षरायां जातौ ये विसदृशप्रस्तारस्यैकस्य सदृक्प्रस्ताराभ्यां द्वाभ्यां योगे त्रयः सदृक्प्रस्ताराणां त्रयाणां योगे चैक इति चत्वारः सम्भवन्ति। २३४। २४३। ४२३। २३५। न ते उररी-कर्त्तव्यास्तैर्हि उत्तरोत्तरपादविकल्पेष्वाहतेषु केचिदेव निष्पद्यन्ते। ये तु सप्तदशाक्षरायां जातौ ते पुनरङ्गीकर्त्तव्याः। तत्र च सप्तदशाक्षरजातित्वं प्रस्ताराऽन्यत्वं चाऽन्यथा नोपपद्यत इत्याद्यस्य पदस्य सर्वत्र चतुर्थस्य यावत्सम्भवं, शेषाणां च सदृशमात्रत्वाद्यदृच्छया। तत्रापि च द्वितीयस्मिन् पादे उपादेयक्रियापदान्यथाऽनुपपत्त्या तृतीयपञ्चमयोरेकस्य सर्वत्र द्वितीय-षष्ठयोश्च स्वेच्छयैकस्य यथासम्भवं न्यासे सदृशप्रस्तारपरिहारे च विसदृशप्रस्तारपदत्रययोगे षट्, विसदृशप्रस्तारस्यैकस्य सदृशप्रस्ताराभ्यां योगे त्रय इति नव विकल्पाः समुत्पद्यन्ते। एतेषु चान्तलघुना चतुर्थेन पदेन पादान्तर्वर्तिना स्वत एव विसदृशप्रस्तारं विकल्पद्वयं यद्विद्यते तदन्यतमस्यैकस्य सदृशप्रस्तारं विकल्पमेकं स्थापयित्वा सहस्रं तर्णकश्लोकाः समुत्पाद्या इति विवक्षावशेन वान्ते वक्र इति न्यायाङ्गीकरणादन्तगुरुत्वेन प्रस्तारान्यत्वमुत्पाद्य विसदृशो दशमो विकल्पः परिकल्प्यः। तदितरस्य चैकस्य प्रसजन्नपि तद्विवक्षावशेनैव न न्यायोऽय-मङ्गीकर्त्तव्य इत्याद्ये पादे दशैव विकल्पाः।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १४५ | १५४ | ४१५ | ४५१ | ५१४ | ५४१ | १६५ | २५१ | ५१३ | ५१४ |
| ३ | ३ | ३ | ३ | ३ | ३ | २२ | ३२ | २ २ | ३ |
| | | | | | | ३३ | ५३ | ३ ५ | |
| | | | | | | ५६ | ६६ | ६ ६ | |

अत्राद्येषु षट्सु विकल्पेष्वन्त्ये च दशमे यः पञ्चमपदसूचकः पञ्चकस्तदधस्ताद्यस्त्रिक-स्तत्सूचितं तृतीयं पदं पञ्चमपदस्थाने यदि वोच्चारणीयम्। सप्तमे च षष्ठस्य पदस्य स्थाने यदि वा द्वितीयतृतीयपञ्चमानां पञ्चमस्य च द्वितीयतृतीयषष्ठानां सम्भवः केवलं षष्ठे स्थिते तत्स्थाने द्वितीयस्मिन् वाऽग्रतः पञ्चमं तृतीयं वा तृतीयस्मिन् पञ्चमद्वितीयषष्ठानि पञ्चमे च द्वितीयतृतीयषष्ठान्युच्चारणीयानि। एवमष्टमनवमयोरपि विकल्पयोरुन्नेयम्। एते च क्रियापदमवश्यमुपादातव्यमिति सर्वत्र पञ्चकसद्भावे द्वितीयस्मिन्नपि प्रभवन्ति, किन्तु यथा-सङ्ख्यविच्युतेर्भग्नप्रक्रमत्वं यथासम्भवमर्थाऽसङ्गतिश्च मा भवत्विति प्रथमपादविकल्पैर्द्वितीय-पादविकल्पानाहन्तुमभिमताः। ततश्च यथासङ्ख्येनैव प्रथमद्वितीयपादद्वयविकल्पेषु स्थापितेषु प्रथमेऽर्द्धे दशैव विकल्पाः। तृतीयस्मिन्नपि पादे तावन्तः।

---

१. हसिता इति ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १२४ | १४२ | २१४ | २४१ | ४१२ | ४२१ | १२३ | ५६१ | ६१५ | २१४ |
| ६ | | ६ | ६ | ६ | | २२ | २२ | २२ | ६ |
| | | | | | | ५५ | ३३ | ३३ | |
| | | | | | | ६६ | ६५ | ५६ | |

यच्च संयोगपरत्वेन पूर्वगुरुत्वेऽन्यदपि विकल्पद्वयं सम्भवति तत्र वाग्विलम्बत इति दुर्निवारः परिहारः। अत एव च द्वितीयषष्ठवर्जमाद्येषु चतुर्ष्वन्त्ये च दशमे द्वितीयपदस्थाने षष्ठं पदं यदि वोच्चारणीयं सप्तमे च द्वितीयस्य स्थाने तृतीयपञ्चमषष्ठानां तृतीयस्य च द्वितीयपञ्चमषष्ठानां प्रसक्तावपि द्वितीयस्मिन् स्थिते तत्स्थाने षष्ठे वाऽग्रतस्तृतीयं पञ्चमं वा तृतीयस्मिन् पञ्चमे वा द्वितीयं षष्ठं वोच्चारणीयम् एवमष्टमनवमयोरपि परिकल्पनीयम्। तुर्येऽपि च तावन्तः।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १३४ | १४३ | ३१४ | ३४१ | ४१३ | ४३१ | १५६ | ५१६ | ५६१ | ३१४ |
| २ | २ | २ | २ | २ | २ | २२ | २ २ | २२ | २ |
| ५ | ५ | ५ | ५ | ५ | ५ | ३३ | ३ ३ | ३३ | ५ |
| | | | | | | ६५ | ६ ५ | ६५ | |

अत्राद्येषु षट्स्वन्त्ये च दशमे तृतीयस्य स्थाने द्वितीयं पञ्चमं वोच्चारणीयम्। सप्तमे च पञ्चमस्य स्थाने द्वितीयतृतीयषष्ठानां षष्ठस्य च द्वितीयतृतीयपञ्चमानां प्राप्तावपि पञ्चमे स्थितेऽग्रतो द्वितीयतृतीयषष्ठानि, तत्स्थाने द्वितीयस्मिन् तृतीयं पञ्चमं वा तृतीयस्मिन् द्वितीयं पञ्चमं वा षष्ठे च पञ्चममेवोच्चारणीयानि। यदा हि पञ्चममुच्चार्यते तदा तृतीयपादविकल्पेषु द्वितीयं षष्ठं वा पदं यदुच्चारितं स्यात्तेन सह तत् सम्बन्धनीयम्। उपमानपदं च तत्पाद-वर्त्त्येव तृतीयं तृतीयपादवर्त्ति प्रथमं पञ्चमं वा यथासम्भवं योजनीयम्। एवमष्टमनवम-योरपि परामर्शनीयम्। ततश्चोत्तरोत्तरपादविकल्पेष्वाहतेषु सहस्रं तर्णकश्लोकाः समुत्पद्यन्ते। प्रस्तारादिपरिज्ञानार्थं च

विकल्पप्रमितानङ्कानेकाद्येकोत्तरान् न्यसेत्।
तेषां चैवान्त्यसंहारं शून्याद्यं परतोऽपि च॥

इत्युक्तेन नयेन प्रथमार्द्धविकल्पेषु दशसु दशस्वपि पङ्क्तिष्वधोऽधःक्रमेण तदग्र-तश्च तृतीयपादविकल्पेषु चतुर्थपादविकल्पेषु च तावत्सु तावत्सु तथैव विन्यस्तेषु प्रथमार्द्ध-विकल्पे प्रथमे एकं द्वितीये द्वौ एवं दशमे दश यावत्। तृतीयपादविकल्पे प्रथमे शून्यं द्वितीये पूर्वेषामन्त्यसंहारं दशकं तृतीये। दशोत्तरिकोपस्थितां विंशतिमेवं दशमे

१. प्रभेदे॥ २. दशोत्तरिकोपस्थितां इति स्थाने अनन्तराणामेव प्राचीनानामन्त्यसंहारं इति ग. पुस्तके॥

नवतिं यावत् । चतुर्थपादविकल्पे च प्रथमे शून्यं द्वितीये [1]प्रथमार्द्धान्त्यविकल्पतृतीयपादान्त्यविकल्पप्रमितानां संहारं शतमेकं [2]तृतीये शतोत्तरिकोपस्थिते द्वे शते । एवं दशमे नवशतानि यावत् पुरः पुरो [3]पुरो विन्यस्येत् । ततश्चैकादिषु क्रमेग शून्ययोश्च लोष्ठे दत्ते दश पुनरेकादिषु तृतीयपादद्वितीयविकल्पपुरोवर्त्तिनि दशके शून्ये च विंशतिः पुनः पुनरेकादिषु विंशत्यादौ शून्ये चैकविंशतेरारभ्य शतं पुनः पुनश्चैकादिषु तृतीयपादविकल्पानां पुरोवर्त्तिनि शून्यादौ शते च शतद्वयं शतद्वये च शतत्रयमेवं शतनवके सहस्रं प्रस्तीर्यते ।

एकादिषु क्रमेणैव खयोः [4]पङ्क्त्यादिशून्ययोः ।
शून्यादौ च शतादौ च लोष्ठं सञ्चारयेद् बुधः ॥

खेन शून्यं पङ्क्त्या च दश लक्ष्यन्ते । क आद्यः को द्वितीय इत्यादिक्रिया, पठित्वा स्वेच्छयेत्यादिक्रिया च कारिकया नष्टमुद्दिष्टं च निर्देश्यम् । केवलमधःशब्द उपलक्षणपरस्तेन पुरोवर्त्तिभिरप्यङ्कैर्न काचित् क्षतिः । सङ्ख्या चाधःपङ्क्तौ विन्यस्तानामङ्कानां मीलने परिकल्प्यते ।

यतीनां वा विकल्पानां वाऽधस्ताद्विनिवेशितैः ।
अङ्कैः प्रस्तारसङ्ख्यां हि सङ्ख्यावान्निर्दिशेत् पराम् ॥

अथवोपरि निर्दिष्टलोष्ठसञ्चारक्रमेण सङ्ख्या विनिर्देश्या । यदि वा–प्रथमार्द्धविकल्पान् दशतृतीयचतुर्थपादविकल्पान् दश दश च तिर्यक्पङ्क्त्या विन्यस्योपरि चैकैकं दत्त्वा स्थितेनागन्तुकं हन्यादिति न्यायोऽनुसर्त्तव्यः । अत्र हि प्रथमे दश स्थिता आहन्तव्यतया चोत्तरे दशागन्तुकाः । तैश्च यच्छतं तदप्युत्तरेषामाहन्तव्यानां दशानामपेक्षया स्थितमेव स्थितागन्तुकैश्च विकल्पैः क्रमेणैकैक एव श्लोक उत्पाद्य इत्युपरितन एकक ईप्सित एव । ततश्च दशभिराहतैर्दशभिः शतं शतं चैकेन विभक्तं शतमेव शतेन चाहतैर्दशभिः सहस्रं सहस्रमप्येकेन विभक्तं सहस्रमेवेति ॥

इह हि इत्यादि । ‘जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः’ । तत्र च सम्बोधनाग्रगेषु षट्स्वपि पदेषूपादीयमानेषु विंशत्युत्तरात् शतादुच्चीयमानैर्विसदृशप्रस्तारैर्द्वाविंशत्या । १२३४५६ । १२३४६५ । १२३५४६ । १२३५६४ । १२३६४५ । १२४३५६ । १२४६२५ । १२६३४५ । १२६३५४ । १२६४३५ । १३२४५६ । १३२४६५ । १३२५४६ । १३२५६४ । १३२६४५ । १३२६५४ । १३५२४६ । १३५२६४ । १३५६२४ । १३६२४५ । १३६२५४ । १६२३४५ । १२३४५६ ।

---

१. प्रथमा......संहारं इति ग. पुस्तके नास्ति ॥ २. तृतीये...... द्वे शते इति ग. पुस्तके नास्ति ॥ ३. ग. पुस्तके नास्ति ॥ ४. दशादि ॥

१२५४३६। १४३२५६। १४५२३६। विकल्पैः प्रतिपादं भवद्भिरुत्तरोत्तरपादविकल्पेष्वाहन्यमानेषु सप्तदशाक्षरायां जातौ भूयांसः। पृथ्वीच्छन्दस्येव वा सदृशप्रस्तारैश्चतुर्भिर्विकल्पैः— १२३४५६। १२५४३६। १४३२५६। १४५२३६। अल्पीयांसस्तर्णकश्लोकाः समुत्पद्यन्ते। तर्णकश्लोकत्वं च तुल्यत्वाद् दुरुपपादं धेनुश्लोकश्च पृथग् न भवति। सम्बोधनाग्रगे पदपञ्चकेऽपि तावद्भ्य एव प्रस्तारेभ्य एकोनविंशत्या। १२३४५। १२३४६। १२३५४। १२३५६। १२४३५। १२४६३। १२६३४। १२६३५। १२६४३। १३२४५। १३२४६। १३२५४। १३२५६। १३२६४। १३२६५। १३५२४। १३५२६। १३५६२। १३६२५। तथैव चतुर्दशाक्षरायां जातौ बहवः। पदत्रयेऽपि विंशतेः प्रस्तारेभ्यो विसदृशप्रस्तारैः पञ्चभिः १२३। १२४। १२६। १३२। १३५ विकल्पैरष्टाक्षरायामल्पतराः। पदद्वयेऽपि पञ्चभ्यः प्रस्तारेभ्यो विसदृशविकल्पद्वयेन १२। १३। पञ्चाक्षरायामल्पतमाश्च भवन्तीति षट्कपञ्चकत्रिकद्विकयोगा नाङ्गीकर्तुमुचिताः, पारिशेष्याच्च पदचतुष्टययोग एवोपादातुं न्याय्यः। तत्राऽपि च षष्टेरुच्चीयमानेष्वेकादशाक्षरायां जातौ विसदृशप्रस्तारेष्वेकादशसु 'रोनराविह रथोद्धता लगौ' इति रथोद्धतायां च सदृशप्रस्तारेष्वष्टसु सम्भवत्सु।

हरयुक्तोऽन्तरे वर्णे $x$ क $\asymp$ प क्क प्ला ( $x$ ख $\asymp$ फा )दिभिः क्वचित्।
लघुताऽशेषभाषासु निर्दिष्टा पूर्वसूरिभिः॥

इत्युक्तेन न्यायेन पूर्वस्मिन्नेकैत्रोत्तरस्मिन् द्वयोर्लघुतायां विधीयमानायां दशसु दशसु १२३४। १२३५। १२४३। १२६४। १२६५। १३२४। १३२५। १३५२। १३५६। १४२६। ३२५१। ३२६१। ३४५१। ३४६१। ५२३१। ५४३१। ६२३१। ६२५१। ६४३१। ६४५१। विकल्पेषु पादं पादं प्रतिकृतपदेषूत्तरोत्तरं चाहतेष्वयुतमयुतं तर्णकश्लोकाः समुत्पद्यन्ते। प्रस्तारादिपरिज्ञानार्थं च पूर्ववदेव विकल्पानामङ्कानां च विन्यासः। केवलं पूर्वत्र प्रथमार्द्धतृतीयचतुर्थपादविकल्पेषु येऽङ्कास्तानत्र प्रथमद्वितीयतृतीयपादविकल्पेषु चतुर्थपादविकल्पे च प्रथमे शून्यं द्वितीये सहस्रमेकमेवं दशमे नवसहस्राणि यावद्विन्यस्येत्। ततश्च प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च पूर्ववदेव विनिर्देश्या। यदत्र च चतुर्थं विकल्पजालं तत्तेनैव क्रमेण लोष्ठे दत्ते प्रस्तार्य स्थितेन च सहस्रेणाहन्तव्यमेकेन च विभाज्यमिति॥

अत्र हि इत्यादि। 'म्नौ म्नौ यौ यः प्रकृत्यां स्वरमुनितुरगैः कीर्तिता स्रग्धरेयम्'। तत्र च पदनवकादियोगेषु क्रमेण क्रमव्युत्क्रमाभ्यामङ्गीक्रियमाणेषु समुत्पद्यमानैः सदृशैरसदृ-

१. १३२६॥ २. ३२६१। ३४६१॥

शैर्वा प्रस्तारैः कैव वार्त्ता प्रतिष्ठादिष्वप्यक्षरजातिषु क्रमेण क्रमव्युत्क्रमाभ्यां च प्रस्तारसादृश्येन प्रस्ताराऽन्यत्वेन वा यगौ व्रीडेति व्रीडादिषु प्रस्तारसादृश्येनाजमुखे षोडशकलगं तैः स्यान्मात्रासमकं ल्नवमैः पादैरिति मात्रासमकादिषु च च्छन्दःसु प्रस्ताराऽन्यत्वसादृश्याभ्यां परिकल्प्यमानाः स्वल्पतमाः स्वल्पतराः स्वल्पा बहवो बहुतरा बहुतमाश्च विकल्पाः प्रतिपादमुत्पद्यन्त इति वैतालीयौपच्छन्दसका पातलिकास्तत्प्राच्यवृत्तयश्चैव मात्राछन्दांस्यादरणीयानि तत्रापि तुर्य एवामीषां सङ्करः साध्यं साधयतीत्याद्यपादत्रये प्रतिपादमेकैकेन छन्दसा विकल्पाः परिस्थाप्या इति व्यवस्थिते पदक्रमेण केचिदेवोत्पद्यन्त इति पदक्रमव्युत्क्रमपक्षे कक्षीक्रियमाणे पदचतुष्टयप्रस्ताराचतुर्विंशत्युत्तरत्रिंशच्छतपरिच्छिन्नात्पदपञ्चकप्रस्ताराच्च विंशत्यधिकशतसमन्वितपञ्चदशसहस्रपरिकलिताद्विवेच्यमाना आद्ये पादे आपातलिकाऽपि तथा स्यात् किन्त्वेतस्यां तंत्र भगौ ग इत्यापातलिकायां पदचतुष्टययोगे विकल्पाः पञ्चविंशतिः। १२४८। १२४९। १४८३। १९४२। १९४८। २१४८। २१४९। २४८३। २९४१। २९४८। ४५८३। ४६८३। ५३४१। ५३४२। ५३४८। ५३४९। ५६८३। ८३४१। ८३४२। ८३४९। ९१४२। ९१४८। ९२४१। ९२४८। ९४८३।

द्वितीयस्मिन् ल्र्नान्ता विषमे षडेव ला वैतालीयांह्रौ समेष्टते समयोस्तु न षड् निरन्तरा योज्यो नैव समः परेण लेति वैतालीये पदचतुष्टययोगे त्रयोविंशतिः पूर्वो यदि पञ्चमान्वितः प्राच्यवृत्तिरिह युग्मपादयोरिति प्राच्यवृत्त्यामेक इति यदि वा नवधोक्तानां ल्गास्पदे[1] यावौपच्छन्दसकं तदादीनामत्यौपच्छन्दसके पदपञ्चकयोगे एकान्नविंशतिप्राच्यवृत्त्यां पञ्चेति च चतुर्विंशतिः। १२७४। १२७६। १२८७। १९७४। १९७६। १९८७। २१७४। २१७६। २१८७। २९७४। २९७६। २९८७। ५३७४। ५३७६। ५३८७। प्रा ७३६४। ८३७४। ८३७६। ९१७४। ९१७६। ९१८७। ९२७४। ९२७६। ९२८७! यदि वा १४२६३। १४९६३। २४१६३। २४९६३। ४१२६३। ४१९६३। ४२१६३। ४२९६३ प्रा ४६५७३। ४८५७३। ४८६७३। ४९१६३। ४९२६३। ५६४७३। प्रा ५८१६३। प्रा ५८२६३। प्रा ५८४७३। ५८९६३। ८५१६३। ८५२६३। ८५९६३। ८६४७३। ९४१६३। ९४२६३।

तृतीयस्मिन् वैतालीय एव पदचतुष्टययोगे पञ्चविंशतिः। १२६४। १४७६। १४८७। १९६४। २१६४। २४७६। २४८७। २९६४। ४१७६। ४१८७।

---

१. लगास्पदे ॥

४२७६ । ४२८७ । ४९७६ । ४९८७ । ५३६४ । ५६७४ । ५६८७ । ८३६४ । ८५७४ । ८५७६ । ८६७४ । ९१६४ । ९२६४ । ९४७६ । ९४८७ ।

तुर्ये च श्लोकस्याऽन्यथाऽनुपपत्त्या क्रियाकारकादिपदयोगोऽवश्यमभ्युपगन्तव्य इत्यष्टमनवमपदयोः सर्वत्राऽवस्थितयोरापातलिकायां चतुर्णां पदानां योगेऽष्टभ्यश्चतुर्भिः पञ्चानां योगे पञ्चविंशतेर्दशभिः प्राच्यवृत्तिद्वये न चेति षोडशभिर्वैतालीये चतुर्ण्णां योगे द्वात्रिंशतश्चतुर्भिः पञ्चानां योगे त्रिभ्यः एकेन प्राच्यवृत्तित्रयाच्चैकेनेति षड्भिरौपच्छन्दसके पञ्चानां योगे दशभ्य एकेन पञ्चभ्यः प्राच्यवृत्तिभ्यश्चैकेनेति द्वाभ्यां च चतुर्विंशतिः समवतिष्ठन्ते । १९८३ । २९८३ । ९१८३ । ९२८३ । १८६४९ । २८६४९ । ५६९४८ । ८५२४९ । ८५९४२ । ८६१४९ । ८६२४९ । ८६९४२ । ९५६४८ । ९८६४२ । प्रा ५८२४९ । प्रा ५८९४२ । १९८७ । २९८७ । ९१८७ । ९२८७ । प्रा ५८९६४ । ८५९६४ । ८५९६३ । प्रा ५८९६३ । ये च तुर्य एवाऽऽपातलिका प्राच्यवृत्तौ पदचतुष्टययोगे सप्त । ५७८३ । ७३४१ । ७३४२ । ७३४८ । ७३४९ ७५८३ । ७६८३ । वैतालीयप्राच्यवृत्तावेकः । ७३६४ । औपच्छन्दसके नव चेति । १२७३ । १९७३ २१७३ । २९७३ । ४१७३ । ५१७३ । ८१७३ । ९१७३ । ९२७३ सप्तदश । तेष्वष्टमनवमपदयोगो न विद्यत इति न केचिदङ्गीकृताः ।

यस्तु पञ्चविंश औपच्छन्दसकप्राच्यवृत्तावादाववनिपदे परिस्थाप्यमाने विवक्षितश्च सन्धिर्भवतीति नयेन विकल्पः सम्भवति । ४८९६३ । स पञ्चसु काव्यप्रभेदेषु संहितां न करोमीति स्वेच्छा सकृदपि दोष इति दुष्टत्वाद्दूरापास्तः । ये तु प्रथमे आपातलिकोदीच्यवृत्तौ चतुर्णां पदानां योगे षट् । ५४८३ । ६३४१ । ६३४२ । ६३४८ । ६३४९ । ६५८३ । औपच्छन्दसकवैतालीययोश्चैकस्मिन्नुदीच्यवृत्तिद्वयेन सह षोडश । १२६३ । १४७३ । १९६३ । २१६३ । २४७३ । २९६३ । ४५७३ । ४६७३ । उ ५४७३ । ५६७३ । उ ६५७३ । ८५७३ । ८६७३ । ९१६३ । ९२६३ । ९४७३ । अपरस्मिन्नुदीच्यवृत्तिचतुष्टयेन समं षड्विंशतिः । १२६४ । १४७६ । १४८७ । १९६४ । २१६४ । २४७६ । २४८७ । २९६४ । ४५७६ । ४५८७ । ४६८७ । ५३६४ । उ ५४७६ । उ ५४८७ । ५६७४ । ५६८७ । उ ६५७४ । उ ६५८७ । ८३६४ । ८५७४ । ८५७६ । ८६७४ । ९१६४ । ९२६४ । ९४७६ । ९४८७ । द्वितीयस्मिन् वैतालीये एव पञ्चानां पदानां योगे पञ्चभिः प्राच्यवृत्तिभिः सह दश । प्रा ४६५८७ । ४८५७६ । ५६४८७ । प्रा ५८१६४ । प्रा ५८२६४ । प्रा ५८४७६ ।

प्रा ५८९६४ । ८५१६४ । ८५२६४ । ८५९६४ । औपच्छन्दसक एव चतुर्णां योगे षट् । १२७३ । १९७३ । २१७३ । २९७३ । ९१७३ । ९२७३ । आपातलिकायां च चतुर्णां योगे सप्तभिः प्राच्यवृत्तिभिः सह त्रयोदश । १२८३ । १९८३ । २१८३ । २९८३ । प्रा ५७८३ । प्रा ७३४१ । प्रा ७३४२ । प्रा ७३४८ । प्रा ७३४९ । प्रा ७५८३ । प्रा ७६८३ । ९१८३ । ९२८३ । पञ्चानां योगे सप्तभिः प्राच्यवृत्तिभिः सह चतुश्चत्वारिंशत् । १५६४२ । १५६४८ । १५६४९ । १८६४२ । १८६४९ । २५६४१ । २५६४८ । २५६४९ । २८६४१ । २८६४९ । प्रा ४६५८३ । ५६१४२ । ५६१४८ । ५६१४९ । ५६२४१ । ५६२४८ । ५६२४९ । ५६४८३ । ५६९४१ । ५६९४२ । ५६९४८ । प्रा ५८१४२ । प्रा ५८१४९ । प्रा ५८२४१ । प्रा ५८२४९ । प्रा ५८९४१ । प्रा ५८९४२ । ८५१४२ । ८५१४९ । ८५२४१ । ८५२४९ । ८५९४१ । ८५९४२ । ८६१४२ । ८६१४९ । ८६२४१ । ८६२४९ । ८६९४१ । ८६९४२ । ९५६४१ । ९५६४२ । ९५६४८ । ९८६४१ । ९८६४२ । तृतीयस्मिन् वैतालीयोदीच्यवृत्तौ चतुर्णां योगे द्वौ । ६५७४ । ६५८७ । औपच्छन्दसके एकयोदीच्यवृत्त्या सह षोडश । १२६३ । १४७३ । १९६३ । २१६३ । २४७३ । २९६३ । ४१७३ । ४२७३ । ४९७३ । ५६७३ । उ ६५७३ । ८५७३ । ८६७३ । ९१६३ । ९२६३ । ९४७३ । आपातलिकायामुदीच्यवृत्तिपञ्चकेन साकमेकत्रिंशत् सम्भवन्ति । १२४८ । १२४९ । १४८३ । १९४२ । १९४८ । २१४८ । २१४९ । २४८३ । २९४१ । २९४८ । ४१८३ । ४२८३ । ४९८३ । ५३४१ । ५३४२ । ५३४८ । ५३४९ । ५६८३ । उ ६३४१ । उ ६३४२ । उ ६३४८ । उ ६३४९ । उ ६५८३ । ८३४१ । ८३४२ । ८३४९ । ९१४२ । ९१४८ । ९२४१ । ९२४८ । ९४८३ । ते परिगणनमभिमतं विहन्युरिति नेष्टाः ।

[1]अयुजि चाष्टमात्राणां [2]युजि च षण्मात्राणामसम्भव इति तद्विकल्पकल्पनैवायासकरीति समवस्थितेषु प्रतिपादविकल्पेषूत्तरोत्तरमाहतेषु लक्षत्रयं षष्टिसहस्रसमन्वितं श्लोकतर्णकाः समुत्पद्यन्ते । प्रस्तारादिपरिज्ञानार्थं च पूर्ववदेव प्रतिपादविकल्पेष्वधोऽधःक्रमेणाग्रतोऽग्रतश्च पङ्क्तिभिर्विन्यस्तेषु प्रथमपादविकल्पे प्रथमे एकं द्वितीये द्वावेवं पञ्चविंशे पञ्चविंशतिं यावत् । द्वितीयपादविकल्पे प्रथमे शून्यं द्वितीये पञ्चविंशतिं तृतीये पञ्चाशतमेवं चतुर्विंशे पञ्चसप्तत्यधिकानि पञ्च शतानि यावत् । तृतीयपादविकल्पे प्रथमे शून्यं द्वितीये षट् शतानि तृतीये द्वादशशतान्येवं पञ्चविंशशतचतुष्टयाधिकानि चतुर्दश सहस्राणि यावत् । चतुर्थपादविकल्पे

१. विषमे ॥ २. समे ॥

प्रथमे शून्यं द्वितीये पञ्चदश सहस्राणि तृतीये त्रिंशत् सहस्राण्येवं चतुर्विंशे पञ्चचत्वारिंशत् सहस्राधिकं लक्षत्रयं यावदङ्कान् विन्यस्येत्। ततश्च प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च पूर्ववदेव विनिर्देश्या ॥

**तथाहि** इत्यादि। अमुत्राऽपि पूर्ववदेव वैतालीयौपच्छन्दसकापातलिका तत्प्राच्यवृत्तय उदीच्यवृत्तौ द्वितीयलोऽग्र्येण युतो विषमांह्रियुग्मक इति तदुदीच्यवृत्तयश्च परिग्रहीतव्याः। तत्राऽपि त्रिषु पादेषु चतुरुत्तरपञ्चशतपरिगणितात् पदत्रयप्रस्तारात् पूर्वं विनिर्दिष्टात् पदचतुष्टयपञ्चतयप्रस्तारद्वयाच्चतुर्थे चत्वारिंशदधिकसहस्रपञ्चकपरिकलितात् पदचतुष्टयप्रस्ताराच्चत्वारिंशदुत्तरशतद्वयसमधिकत्रिंशत्सहस्रपरिच्छिन्नात् पदपञ्चतयप्रस्ताराच्च विवेच्यमानाः प्रथमे पादे औपच्छन्दसके पदत्रययोगे चत्वारः पदचतुष्टययोगे षोडशेति विंशतिः। ११६३। २२६३। ५५७३। ९९६३। ८४६६३। १४८८२। १४८८९। २४८८१। २४८८९। ४५८८१। ४५८८२। ४५८८९। ४६८८१। ४६८८२। ४६८८९। ५६८८१। ५६८८२। ५६८८९। ९४८८१। ९४८८२। यदि वापातलिकायां पदत्रययोगे दश वैतालीये तत्रैव[1] पञ्चदशेत्यौपच्छन्दसके पदत्रययोगे चत्वार उदीच्यवृत्तौ द्वौ वैतालीये तत्रैव पञ्चदशोदीच्यवृत्त्यां चत्वार इति च पञ्चविंशतिः। ११४२। ११४८। ११४९। २२४१। २२४८। २२४९। ५५८३। ९९४१। ९९४२। ९९४८। ११६४। २२६४। ५५७४। ५५७६। ५५८७। ९९६४। १२६६। १९६६। २१६६। २९६६। ४३६६। ५३६६। ८३६६। ९१६६। ९२६६। यदि वा ११६३। २२६३। ५५७३। ९९६३। उ ४४७३। उ ६६७३। ११६४। २२६४। ५५७४। ५५७६। ५५८७। ९९६४। १२६६। १९६६। २१६६। २९६६। ४३६६। ५३६६। ८३६६। ९१६६। ९२६६। उ ४४७६। उ ४४८७। उ ६६७४। उ ६६८७। द्वितीयस्मिन्नौपच्छन्दसके पदत्रययोगे त्रयः प्राच्यवृत्तौ द्वौ पदपञ्चकयोगे त्रयः प्राच्यवृत्त्यां त्रयो वैतालीये पदत्रययोगे नव प्राच्यवृत्त्यां च पञ्चेति पञ्चविंशतिः। ११७३। २२७३। ९९७३। प्रा ५७७३। प्रा ८७७३। ५६४८८१। ५६४८८२। ५६४८८९। प्रा ४६५८८१। ४६५८८२। ४६५८८९। ११७४। ११७६। ११८७। २२७४। २२७६। २२८७। ९९७४। ९९७६। ९९८७। प्रा ७३६६। प्रा ५७७४। प्रा ५७७६। प्रा ८७७४। प्रा ८७७६। यदि वौपच्छन्दसके पदपञ्चकयोगे तथैव[2] षट् वैतालीये तथैव चतुर्दशेति विंशतिः। ५६४८८१। ५६४८८२। ५६४८८९। प्रा ४६५८८१।

---

१. पदत्रययोगे। २. प्राच्यवृत्तिभिः।

प्रा ४६५८८२ । प्रा ४६५८८९ । ११७४ । ११७६ । ११८७ । २२७४ । २२७६ । २२८७ । ९९७४ । ९९७६ । ९९८७ । प्रा ७३६६ । प्रा ५७७४ । प्रा ५७७६ । प्रा ८७७४ । प्रा ८७७६ । तृतीयस्मिन्नौपच्छन्दसके तिसृभिरुदीच्यवृत्तिभिः सह पदचतुष्कयोगे पञ्चविंशतिः । ४४१६३ । ४४२६३ । ४४९६३ । ४५६६३ । ४८६६३ । ५४६६३ । ८४६६३ । १४८८२ । १४८८९ । २४८८१ । २४८८९ । ९४८८१ । ९४८८२ । ४१८८२ । ४१८८९ । ४२८८१ । ४२८८९ । ४९८८१ । ४९८८२ । ५६८८१ । ५६८८२ । ५६८८९ । उ ६५८८१ । उ ६५८८२ । उ ६५८८९ ।

चतुर्थे च क्रियापदं कर्मपदं चावश्यमुपादातव्यमित्यष्टमस्य सर्वत्र द्वितीयया षष्ठ्या च सम्भवति दशमे पदे नवमदशमयोस्तदितरस्य वा यथासम्भवं प्रयोगेऽवस्थिते आपातलिकायामेकस्य पदस्य द्विरुक्त्या पदचतुष्टययोगे दश प्राच्यवृत्तावेकः पदपञ्चकयोगे चत्वारिंशत् प्राच्यवृत्त्यामष्टावित्येकान्नषष्टिः त्रिरुक्त्या पदचतुष्टययोगे षट् प्राच्यवृत्तौ द्वौ पदपञ्चकयोगे द्वाविति दशपदद्वयस्य द्विरुक्त्या पदचतुष्टययोगे एकः प्राच्यवृत्त्यां त्रयः पदपञ्चकयोगे त्रयः प्राच्यवृत्तावेकः इत्यष्टौ पदत्रयस्य तथैव पदचतुष्टययोगे प्राच्यवृत्तावेक एकस्य पदस्य द्विरुक्त्याऽपरस्य च त्रिरुक्त्या पदचतुष्टययोगे द्वाविंशत्यशीतिः समुत्पद्यन्ते । ११८६९ ११८६१० । २२८६९ । २२८६१० । ९११४८ । ९२२४८ । ९९१८३ । ९९२८३ । १९९८३ । २९९८३ । प्रा ९६६८३ । ९९१८६१० । ९९११०४८ । ९९१०१४८ । ९९२१०४८ । ९९२८६१० । ९९४१०८३ । ९९१०४८३ । ९९५६४८ । ९९८६४२ । ९९१०२४८ । १९९१०४८ । १९९८६१० । २९९१०४८ । २९९८६१० । ४९९१०८३ । १८६४९९ । २८६४९९ । ८११०४९९ । ८३१०४९९ । ८५२४९९ । ८६१४९९ । ८६२४९९ । ४९१०१०८३ । ९४१०१०८३ । ९१०१०४८३ । १९१०१०४८ । २९१०१०४८ । ९१०१०१४८ । ९११०१०४८ । ९२१०१०४८ । ९१०१०२४८ । ८५१०१०४२ । ८६१०१०४२ । १८६४१०१० । २८६४१०१० । ८५२४१०१० । ८६१४१०१० । ८६२४१०१० । ९८१४१०१० । ९८३४१०१० । प्रा ९६६१०४८ । प्रा ८८२४१०९ । प्रा ५८२४९९ । प्रा ८७१०४९९ । ८१०३४९९ । प्रा ५८१०१०४२ । प्रा ५८२४१०१० । प्रा ८९३४१०१० । ९९९१४८ । ९९९२४८ । ९९९४८३ । ९९९१०८३ । ४९९९८३ । ९१०१०१०८३ । प्रा ४४४८६९ । प्रा

४४४८६१० । ९९९४८६१० । ४९९९८६१० । ९९१०१०८३ । प्रा ८८२४९९ । प्रा ८८२४१०१० । प्रा ८८१०१०४२ । ८५१०१०४९९ । ९९८६४१०१० । ८६१०१०४९९ । प्रा ५८१०१०४९९ । प्रा ८८१०१०४९९ । ९९१०१०१०४८ । ९९९१०१०४८ । ये च प्रथमे आपातलिकोदीच्यवृत्तौ पदत्रययोगे द्वौ । ४४८३६६८३ । औपच्छन्दसकोदीच्यवृत्तौ पदचतुष्क[1]योगे षट् ५४८८१ । ५४८८२ । ५४८८९ । ६५८८१ । ६५८८२ । ६५८८९ । द्वितीयस्मिन्नापातलिकायां पदत्रययोगे त्रयः, पदचतुष्टययोगे सप्तभिः प्राच्यवृत्तिभिः समं त्रयोदशेति षोडश । ११८३ । २२८३ । ९९८३ । ४४१८३ । ४४२८३ । ४४९८३ । १४४८३ । २४४८३ । ९४४८३ । प्रा ४६६८३ । प्रा ८८१४२ । प्रा ८८१४९ । प्रा ८८२४१ । प्रा ८८२४९ । प्रा ८८९४१ । प्रा ८८९४२ । औपच्छन्दसके पदचतुष्टययोगे पञ्चदशभिः पञ्चदशभिः प्राच्यवृत्तिभिः सममेकोनचत्वारिंशत् । ४११६३ । ४२२६३ । ४४१७३ । ४४२७३ । ४४९८३ । १४४७३ । २४४७३ । ९४४७३ । प्रा ४६६७३ । १५६६३ । ३५६६३ । ९५६६३ । १८६६३ । २८६६३ । ९८६६३ । प्रा ७४६६३ । प्रा ८८१६३ । प्रा ८८२६३ । प्रा ८८९६३ । प्रा ८८४७३ । १२८८९ । २१८८९ । ९१८८२ । ९२८८१ । १९८८२ । २९८८१ । २३८८१ । ५३८८२ । ५३८८९ । प्रा ५७८८१ । प्रा ५७८८२ । प्रा ५७८८९ । प्रा ७५८८१ । प्रा ७५८८२ । प्रा ७५८८९ । ४९९६३ । प्रा ७६८८१ । प्रा ७६८८२ । प्रा ७६८८९ । वैताळीये पदचतुष्टययोगे अष्टभिः प्राच्यवृत्तिभिः सह त्रिचत्वारिंशत् । ४४१७६ । ४४२७६ । ४४९७६ । ४४१८७ । ४४२८७ । ४४९८७ । १४४७६ । २४४७६ । ९४४७६ । १४४८७ । २४४८७ । ९४४८७ । प्रा ४६६८७ । १५६६४ । २५६६४ । ९५६६४ । १८६६४ । २८६६४ । ९८६६४ । १४२६६ । १४९६६ । २४१६६ । २४९६६ । ९४१६६ । ९४२६६ । ४१२६६ । ४२१६६ । ४१९६६ । ४२९६६ । ४९१६६ । ४९२६६ । प्रा ५८१६६ । प्रा ५८२६६ । प्रा ५८९६६ । ४८३६६ । ८४३६६ । ८५१६६ । ८५२६६ । ७५९६६ । प्रा ८८१६४ । प्रा ८८२६४ । प्रा ८८९६४ । प्रा ८८४७६ । तृतीयस्मिन्नापातलिकायां पदत्रययोगे एकयोदीच्यवृत्त्या साकमेकादश । ११४२ । ११४८ । ११४९ । २२४१ । २२४८ । २२४९ । ५५८३ । उ ६६८३ । ९९४१ । ९९४२ । ९९४८ । वैताळीये तत्रैवोदीच्यवृत्तिद्वयेन सह षोडश । ११६४ । २२६४ । ५५७४ । ५५७६ ।

---

१. पञ्चक–ग. ॥

उ ६६७४ । उ ६६८७ । ५५८७ । १२६६ । १९६६ । २१६६ । २९६६ । ९१६६ । ९२६६ । ५३६६ । ८३६६ । ९९६४ । औपच्छन्दसके तत्रैवैकयोदीच्यवृत्त्या सह पञ्च । ११६३ । २२६३ । ५५७३ । उ ६६७३ । ९९६३ । सम्भवन्ति ते पूर्वस्मिन्निव नेष्टाः । ये तु त्रिष्वपि पादेषु सर्वच्छन्दः स्वकपदत्रिरुक्त्यादिना चतुर्थे वैतालीयौपच्छन्दसकयोरेकपदद्विरुक्त्यादिना च क्रियापदाद्यवश्यंभावे सम्भवन्ति तेऽपि तथैव नेष्टाः । अपरे चतुर्थे पादे आदौ सम्बोधनादग्रतश्च दशमपदसद्भावेन क्रियापदादिविरहितत्वेन च ये विलक्षणास्तद्विकल्पकल्पनाऽप्यायासकरीति समुत्पन्नेषु प्रतिपादविकल्पेषूत्तरोत्तरमाहतेषु प्रयुतं श्लोकतर्ण्णकाः समुत्पद्यन्ते। प्रस्तारादिपरिज्ञानार्थं च पूर्ववदेव प्रतिपादविकल्पेष्वधोऽधःक्रमेणाऽग्रतोऽग्रतश्च पङ्क्तिभिर्विन्यस्तेषु प्रथमपादविकल्पे प्रथमे एकं द्वितीये द्वावेवं विंशे विंशतिं पञ्चविंशे वा पञ्चविंशतिं यावत्। द्वितीयपादविकल्पे प्रथमे शून्यं द्वितीये विंशतिं पञ्चविंशतिं वा तृतीये चत्वारिंशतं पञ्चाशतं वा एवं पञ्चविंशे अशीत्यधिकानि चत्वारि शतानि विंशे वा पञ्चसप्तत्यधिकानि तान्येव यावत् । तृतीयपादविकल्पे प्रथमे शून्यं द्वितीये पञ्चशतानि तृतीये सहस्रमेवं पञ्चविंशे द्वादशसहस्राणि यावत् । चतुर्थे प्रथमे शून्यं द्वितीये पञ्चशताऽधिकानि द्वादशसहस्राणि तृतीये पञ्चविंशतिसहस्राण्येवमशीतितमे पञ्चशतसमन्वितसप्ताशीतिसहस्राधिकं लक्षनवकं यावदङ्कान् विन्यस्येत् । ततश्च प्रस्तारो नष्टमुदिष्टं सङ्ख्या न पूर्ववदेव विनिर्देश्या ॥

**अत्र हि** इत्यादि । 'उत्कृत्यां मौ नौनौ ः स्लौगिति वसुहरहयविरतं भुजङ्गविजृम्भितम्' तत्र च समग्रेषु पदयोगेषु समस्तासु जातिषु शिष्टेषु वर्णच्छन्दःसु सर्वेषु मात्राछन्दःसु च परिकल्प्यमानाः स्वल्पा एव वा अनल्पा एव वा विकल्पाः प्रतिपादं समुत्तिष्ठन्त इति जगतीजातिगतानि चन्द्रवर्त्मप्रभृतीन्यष्टौ वर्णच्छन्दांसि परिग्रहीतव्यानि । तत्राऽप्ययुजि कतिपयैर्युजि च पादे समग्रैरप्यमीभिर्विकल्पाः समुत्थाप्या इति प्रतिष्ठिते पदपञ्चकप्रस्ताराच्चत्वारिंशदधिकशतचतुष्टयसमन्वितपञ्चपञ्चाशत्सहस्रपरिच्छिन्नात् पदषट्कप्रस्ताराच्च चत्वारिंशदुत्तरशतषट्कपरिकलितद्वाविंशत्सहस्रसमन्वितलक्षत्रयलक्षिताद्विवेच्यमानाः प्रथमे प्रमिताक्षरा सजससैस्तु गणैरिति प्रमिताक्षरायां पदपञ्चकयोगे द्वाभ्यां ननभरकलितागदितोज्ज्वलेत्युज्ज्वलायां तस्मिन्नेवाऽष्टभिः वेदाङ्कैः स्याज्जलधरमाला, उभाविति जलधरमालायां पदषट्कयोगे षट्त्रिंशता, 'अथ नवमालिनी यदि न जौभ्यौ' इति नवमालिन्यां पदपञ्चकयोगे चतुर्विंशत्या च विकल्पाः सप्ततिः । ५१११०९८ । १०११५९८ । ५६९१०११ । ५७९१०११ । ६५९१०११ । ६१०९५११ । ७५९१०११ । ७१०९५११ । १०६९५११ । १०७९५११ । १२५१०३४ । १२५१०४३ । १२१०५३४ ।

१२१०५४३ । १३५१०२४ । १३५१०४२ । १३१०५२४ । १३१०५४२ । १४५१०२३ । १४५१०३२ । १४१०५२३ । १४१०५३३ । २१५१०३४ । २१५१०४३ । २११०५३४ । २११०५४३ । २३५१०४१ । २३१०५४१ । २४५१०३१ । २४१०५३१ । ३१५१०२४ । ३१५१०४२ । ३११०५२४ । ३११०५४२ । ३२५१०४१ । ३२१०५४१ । ३४५१०२१ । ३४१०५२१ । ४१५१०२३ । ४१५१०३२ । ४११०५२३ । ४११०५३२ । ४२५१०३१ । ४२१०५३१ । ४३५१०२१ । ४३१०५२१ । ५८९६२ । ५८९६३ । ५८९६४ । ५८९७२ । ५८९७३ । ५८९७४ । ५१०११६२ । ५१०११६३ । ५१०११६४ । ५१०११७२ । ५१०११७३ । ५१०११७४ । १०५११६२ । १०५११६३ । १०५११६४ । १०५११७२ । १०५११७३ । १०५११७४ । १०८९६२ । १०८९६३ । १०८९६४ । १०८९७२ । १०८९७३ ! १०८९७४ ।

द्वितीयस्मिन् तथैव सप्तत्या ‘चन्द्रवर्त्मनि भवन्ति रनभसाः’ इति चन्द्रवर्त्मनि, द्वाभ्यां ‘द्रुतविलम्बितमस्ति नभौ भरौ’ इति द्रुतविलम्बिते, द्वाभ्यां ‘स्कन्दास्यविरामात्यौ त्यौ मणिमाला’ इति मणिमालायां, चतुर्विंशत्या ‘ननररकलिता प्रभाश्चेन्द्रियैः’ इति प्रभायां द्वाभ्यां च शतम् । ११५९१०८ । १११०९५८ । ५९८१०११ । १०९८५११ । १५२३१०४ । १५२४१०३ । ११०२३५४ । ११०२४५३ । १५३२१०४ । १५३४१०२ । ११०३२५४ । ११०३४५२ । १५४२१०३ । १५४३१०२ । ११०४२५३ । ११०४३५२ । २५३११०४ । २५४११०३ । २१०३१५४ । २१०४१५३ । ३५२११०४ । ३५४११०२ । ३१०२१५४ । ३१०४१५२ । ४५२११०३ । ४५३११०२ । ४१०२१५३ । ४१०३१५२ । ५१०८९११ । १०५८९११ ।

तृतीयस्मिंश्चतुर्थे पादे संयुक्तप्रथम[1]वर्णगत्वे जलधरमालायां त्रुटत्सु द्वादशसु नव । मालिन्यामष्टसु च प्रथमपादच्छन्दःस्वेव द्वाभ्यामष्टभिश्चतुर्विंशत्या षोडशभिश्च पञ्चाशत् । चतुर्थे च पादे द्वितीयपादवत् शतमेव समुत्पद्यन्ते । ये च चन्द्रवर्त्मनि द्वौ द्वौ, द्रुतविलम्बिते द्वौ द्वौ, मणिमालायां चतुर्विंशतिरष्टौ च प्रभायां द्वौ द्वाविति प्रथमे पादे त्रिंशत् तृतीये च चतुर्दश सम्भवन्ति, ते परिगणनमभिमतं विहन्युरिति नेष्टाः । अत एव तच्छन्दःपरिग्रहोऽप्यनयोर्न कृतः । ये तु चन्द्रवर्त्मनि लध्वन्तैरष्टभिः । ११५९६१० । ११५९७१० । ११५९१०६ । ११५९१०७ । १११०९५६ । १११०९५७ । १११०९६५ । १११०९७५ । प्रमिताक्षरायां चतुर्भिः । ५१११०९६ । ५१११०९७ । १०११५९६ ।

---

१. -वर्णत्वेन पूर्वगुरुत्वे ग. ॥

१०११५९७ । उज्ज्वलायामष्टभिश्च । ५६९८१० । ५७९८१० । ६५९८१० । ७५९८१० । १०६९८५ । १०७९८५ । ६१०९८५ । ७१०९८५ । वान्तेग्वक्रतिन्यायेन चत्वारौ द्वौ चत्वार इति दश चतुर्ष्वपि पादेषु सम्भवन्ति तेऽन्यथाऽपिं साध्यसिद्धेरगतिकत्वस्याऽसम्भवादेवंविधन्यायानुसरणानुपपत्तेरनुत्थानोपहता इति दूरापास्ताः । ततश्च समुत्पन्नेषु विकल्पेषूत्तरोत्तरमाहतेषु सार्द्धास्तिस्रः कोटयस्तण्णकश्लोकाः समुत्पद्यन्ते । प्रस्तारादिपरिज्ञानार्थं च पूर्ववदेव प्रतिपादविकल्पानधोऽधःक्रमेणाऽग्रतोऽग्रतश्च पङ्क्तिभिर्लिखित्वा प्रथमपादविकल्पे प्रथमे एकं द्वितीये द्वावेवं सप्ततितमे सप्ततिं यावत्, द्वितीयपादविकल्पे प्रथमे शून्यं द्वितीये सप्ततिं तृतीये चत्वारिंशदधिकं शतं चतुर्थे दशोत्तरं शतद्वयमेवं शततमे त्रिंशदुत्तरनवशतोपेतानि षट् सहस्राणि यावत्, तृतीयपादविकल्पे प्रथमे शून्यं द्वितीये सप्त सहस्राणि तृतीये चतुर्दश सहस्राणि चतुर्थे एकविंशतिसहस्राण्येवं पञ्चाशे त्रिचत्वारिंशत्सहस्रसमधिकानि त्रीणि लक्षाणि यावत्, चतुर्थपादविकल्पे प्रथमे शून्यं द्वितीये पञ्चाशत्सहस्रसमधिकानि त्रीणि लक्षाणि तृतीये सप्त लक्षाणि चतुर्थे पञ्चाशत्सहस्राधिकानि दश लक्षाण्येवं शततमे पञ्चाशत्सहस्राधिकषट्चत्वारिंशल्लक्षोपेतास्तिस्रः कोटीर्यावदङ्कान् विन्यस्येत् । ततश्च प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च पूर्ववदेव विनिर्देश्या ।

**तथाहि** इत्यादि । अत्रापि पूर्ववदेव जगत्यां जातौ मणिमालाप्रभृतीनि षड् वर्णच्छन्दांस्येव स्वीकर्त्तव्यानि । तत्रापि त्रिषु द्वाभ्यामेकेस्मिन् समग्रैरप्यमीभिर्विकल्पाः समुत्थाप्या इति व्यवस्थिते नवत्यधिकनवशतपरिमितात् पदत्रयप्रस्ताराद्विंशत्यधिकैकान्नाशीतिशतपरिच्छिन्नात् पदचतुष्टयप्रस्तारात् पूर्वं विनिर्दिष्टात् पदपञ्चतयप्रस्ताराच्च विवेच्यमानाः प्रथमद्वितीयचतुर्थेषु पादेषु प्रत्येकं जलधरमालायां पदचतुष्कयोगे पदद्वयस्य द्विरुक्त्या नवत्या प्रभायां तस्मिन्नेवैकस्य पदस्य विभक्त्या दशभिश्च शतम् । ११५१०२२ । ११५१०३३ । ११५१०४४ । ११५५२३ । ११५५२४ । ११५५३२ । ११५५३४ । ११५५४२ । ११५५४३ । १११०१०२३ । १११०१०२४ । १११०१०३२ । १११०१०३४ । १११०१०४२ । १११०१०४३ । २२५१०३३ । २२५१०४४ । २२१०५३३ । २२१०५४४ । २२५५३१ । २२५५३४ । २२५५४१ । २२५५४३ । १३५५२२ । १४५५२२ । ३१५५२२ । ३४५५२२ । ४१५५२२ । ४३५५२२ । २२१०१०३१ । २२१०१०३४ । २२१०१०४१ । २२१०१०४३ । १३१०१०२२ । १४१०१०२२ । ३११०१०२२ । ३४१०१०२२ । ३४१०१०२२ । ३११०१०२२ । ३४१०१०२२ । ४११०१०२२ । ४३१०१०२२ । ३३५१०२२ । ३३५१०४४ । ३३१०५२२ । ३३१०५४४ । ३३५५२१ ।

१. तृतीये ॥

३३५५२४ । ३३५५४१ । ३३५५४२ । १२५५३३ । १४५५३३ । २१५५३३ । २४५५३३ । ४१५५३३ । ४२५५३३ । ३३१०१०२१ । ३३१०१०२४ । ३३१०१०४१ । ३३१०१०४२ । १२१०१०३३ । १४१०१०३३ । २११०१०३३ । २४१०१०३३ । ४११०१०३३ । ४२१०१०३३ । ४४५१०२२ । ४४५१०३३ । ४४१०५२२ । ४४१०५३३ । ४४५५२१ । ४४५५२३ । ४४५५३१ । ४४५५३२ । १२५५४४ । १३५५४४ । २१५५४४ । २३५५४४ । ३१५५४४ । ३२५५४४ । ४४१०१०२१ । ४४१०१०२३ । ४४१०१०३१ । ४४१०१०३२ । १२१०१०४४ । १३१०१०४४ । २११०१०४४ । २३१०१०४४ । ३११०१०४४ । ३२१०१०४४ । ५५८९११ । ५६९९११ । ५७९९११ । ६५९९११ । ६१०९९११ । ७५९९११ । ७१०९९११ । १०६९९११ । १०७९९११ । १०१०८९११ ।

तृतीयस्मिन् चतुर्थे पादसंयुक्तप्रथमवर्णतया पूर्वगुरुतायां त्रुटच्त्यां विंशतिजलधरमालायां षष्ट्या प्रभायां तावद्भिरेव मणिमालायां पदपञ्चकयोगे एकस्य पदस्य द्विरुक्त्याऽष्टभिरुज्ज्वलायां पदचतुष्कयोगे तथैव चतुर्भिः पदत्रिकयोगे द्वयोर्द्विरुक्त्या द्वाभ्यां नवमालिन्यां पदचतुष्कयोगे एकस्य द्विरुक्त्या द्वादशभिर्भवति हि तामरसं तु न जज्यैरिति तामरसे तथैव चतुर्भिश्च विकल्पाः शतमुत्पद्यन्ते । १५२२१०३ । १५३३१०२ । ११०२२५३ । ११०३३५२ । ४५२२१०३ । ४५३३१०२ । ४१०२२५३ । ४१०३३५२ । ५५८१०११ । ५१०८८९ । १०५८८९ । १०१०८५११ । ५५८८९ । १०१०८८९ । ५५११६२ । ५५११६३ । ५५११७२ । ५५११७३ । १०१०११६२ । १०१०११६३ । १०१०११७२ । १०१०११७३ । ६९९७२ । ६९९७३ । ७९९६२ । ७९९६३ । ५८८१०२ । ५८८१०३ । १०८८५२ । १०८८५३ । ये च त्रिषु पादेषु जलधरमालायामेकस्य पदस्य द्विरुक्त्या अष्टोत्तरं शतम् । ११५१०२३ । ११५१०२४ । ११५१०३२ । ११५१०३४ । ११५१०४२ । ११५१०४३ । १११०५२३ । १११०५२४ । १०१०५३२ । १११०५३४ । १११०५४२ । १११०५४३ । २२५१०३१ । २२५१०३४ । २२५१०४१ । २२५१०४३ । २२१०५३१ । २२१०५३४ । २२१०५४१ । २२१०५४३ । १३५१०२२ । १४५१०२२ । ३१५१०२२ । ३४५१०२२ । ४१५१०२२ । ४३५१०२२ । १३१०५२२ । १४१०५२२ । ३११०५२२ । ३४१०५२२ । ४११०५२२ । ४३१०५२८ । ३३५१०२१ । ३३५१०२४ । ३३५१०४१ । ३३५१०४२ । ३३१०५२१ । ३३१०५२४ । ३३१०५४१ । ४३१०५४२ ।

१२५१०३३ । १४५१०३३ । २१५१०३३ । २४५१०३३ । ४१५१०३३ । ४२५१०३३ । १२१०५३३ । १४१०५३३ । २११०५३३ । २४१०५३३ । ४११०५३३ । ४२१०५३३ । ४४५१०२१ । ४४५१०२३ । ४४५१०३१ । ४४५१०३२ । ४४१०५२१ । ४४१०५२३ । ४४१०५३१ । ४४१०५३२ । १२५१०४४ । १३५१०४४ । २१५१०४४ । २३५१०४४ । ३१५१०४४ । ३२५१०४४ । १२१०५४४ । १३१०५४४ । २११०५४४ । २३१०५४४ । ३११०५४४ । ३२१०५४४ । १२५५३४ । १२५५४३ । १३५५२४ । १३५५४२ । १४५५२३ । १४५५३२ । २१५५३४ । २१५५४३ । २३५५४१ । २४५५३१ । ३१५५२४ । ३१५५४२ । ३२५५४१ । ३४५५२१ । ४१५५२३ । ४१५५३२ । ४२५५३१ । ४३५६२१ । १२१०१०३४ । १२१०१०४३ । १३१०१०२४ । १३१०१०४२ । १४१०१०२३ । १४१०१०३२ । २११०१०३४ । २११०१०४३ । २३१०१०४१ । २४१०१०३१ । ३११०१०२४ । ३११०१०४२ । ३२१०१०४१ । ३४१०१०२१ । ४११०१०२३ । ४११०१०३२ । ४२१०१०३१ । ४३१०१०२१ । त्रयाणां द्विरुक्त्याऽष्टादश । ११५५२२ । ११५५३३ । ११५५४४ । २२५५३३ । २२५५४४ । ३३५५२२ । ३३५५४४ । ४४५५२२ । ४४५५३३ । ११११०१०२२ । ११११०१०३३ । १११०१०४४ । २२१०१०३३ । २२१०१०४४ । ३३१०१०२२ । ३३१०१०४४ । ४४१०१०२२ । ४४१०१०३३ । मणिमालायां च चतुर्विंशतिः । १५२२१०३ । १५२२१०४ । १५३३१०२ । १५३३१०४ । १५४४१०२ । १५४४१०३ । ११०२२५३ । ११०२२५४ । ११०३३५२ । ११०३३५४ । ११०४४५२ । ११०४४५३ । २५३३१०४ । २५४४१०३ । ३५२२१०४ । ३५४४१०२ । ४५२२१०३ । ४५३३१०२ । २१०३३५४ । २१०४४५३ । ३१०२२५४ । ३१०४४५२ । ४१०२२५३ । ४१०३३५२ । उज्ज्वलायां चत्वारो द्वौ च । ५५८१०११ । ५१०८८९ । १०५८८९ । १०१०८५११ । ५५८८९ । १०१०८८९ । नवमालिन्यामष्टादश । ५५११६२ । ५५११५३ । ५५११६४ । ५५११७२ । ५५११७३ । ५५११७४ । ६९९७२ । ६९९७३ । ६९९७४ । ७९९६२ । ७९९६३ । ७९९६४ । १०१०११६२ । १०१०११६३ । १०१०११६४ । १०१०११७२ । १०१०११७३ । १०१०११७४ । तामरसे षट् । ५८८१०२ । ५८८१०३ । ५८८१०४ । १०८८५२ । १०८८५३ । १०८८५४ ।

तृतीये च पादे जलधरमालायां त्रुटत्यां षट्त्रिंशति षट्सु च द्विसप्ततिर्द्वादश च सम्भवन्ति। ते पूर्ववन्नेष्टाः। उज्ज्वलायां चतुर्ष्वपि पादेषु लघ्वन्ताभ्यां द्वाभ्याम्। ५५८८१०। १०१०८८५। वान्तेग्वक्र इति न्यायेन यो विकल्पः सम्भवति स पूर्ववदेव दूरापास्त इति समुत्पन्नेषु विकल्पेषूत्तरोत्तरमाहतेषु दशकोटयस्तण्र्णकाः श्लोकाः समुत्पद्यन्ते। प्रस्तारादिपरिज्ञानार्थं च पूर्ववदेव विकल्पानधोधःक्रमेणाग्रतोऽग्रतश्च पङ्क्तिभिर्लिखित्वा प्रथमपादविकल्पे प्रथमे एकं द्वितीये द्वावेवं शततमे शतं यावत्, द्वितीयपादविकल्पे प्रथमे शून्यं द्वितीये शतं तृतीये शतद्वयं चतुर्थे शतत्रयमेवं शततमे [1]नवतिशतानि यावत्, तृतीयपादविकल्पे प्रथमे शून्यं द्वितीये दशसहस्राणि तृतीये विंशतिसहस्राणि चतुर्थे त्रिंशत्सहस्राण्येवं शततमे नवति सहस्राधिकानि नवलक्षाणि यावत्, चतुर्थपादविकल्पे प्रथमे शून्यं द्वितीये दशलक्षाणि तृतीये विंशतिलक्षाणि चतुर्थे त्रिंशल्लक्षाण्येवं शततमे नवतिलक्षाधिका नवकोटीर्यावदङ्कान् विन्यस्येत्। ततश्च प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च पूर्ववदेव विनिर्देश्या॥

**तथाहि** इत्यादि। अत्र ह्यतिशक्वर्यां जातौ प्रथमप्रस्तारभेदे प्रतिपादं पञ्चदशभ्यः पदेभ्यः क्रमयोजनायां विधीयमानायां द्विकत्रिकादियोगविकल्पा ये जायन्ते ये चैककविकल्पास्तैरुत्तरोत्तरपादविकल्पेष्वाहन्यमानेषु प्रतिजातिसर्वजातिषु वा कियन्त एव तण्र्णकश्लोकाः समुत्पद्यन्ते। समग्रेऽपि श्लोके षष्टेः पदेभ्यः पदचतुष्कपदाष्टकादिक्रमयोगविकल्पैः प्रतिजाति सर्वजातिषु वा स्वल्पा एव ते सम्भवन्ति। ततश्च पदक्रमव्युत्क्रमयोगपक्ष एव कक्षीकर्तुमुचितः। अत एव चाह—**पदग्रहाद्यथाकामम्** इति। तत्राप्यनुष्टुब्जातिं यावत् प्रतिपादविकल्पा ये समुत्तिष्ठन्ते ते उत्तरोत्तरमाहन्यमानाः प्रतिजाति स्तोका एव समुत्पद्यन्ते। बृहतीजातेरारभ्य पुनर्जातौ जातौ प्रतिपादं विकल्पा ये समुद्भवन्ति ते उत्तरोत्तरमाहन्यमानाः परिगणनमनुगुणं साधयेयुः। तथाहि बृहतीजातौ नवानां पदानां क्रमेण व्युत्क्रमेण च योजनायामङ्गीक्रियमाणायामब्जमेकमर्बुदान्यष्टौ कोटिरेका प्रयुतानि षट् लक्षे द्वे [2]अयुतमेकं सहस्राणि चत्वारि शतानां च चतुष्टयमिति विकल्पेषु। १८१६२१४४००। प्रतिपादमुत्तिष्ठमानेषु प्रथमपादविकल्पैर्द्वितीयपादविकल्पेष्वाहतेषु परार्द्धानि द्वात्रिंशन्मध्यानि नवान्त्यान्यष्टौ सरित्पतयः षट् शङ्कवस्त्रयो महासरोजानि चत्वारि निखर्वाणि सप्त खर्वाणि चत्वार्यब्जानि षडर्बुदानि सप्त कोटयः षट् प्रयुतानि सप्त लक्षाणि त्रीण्ययुतानि षट्। ३२९८६३४७४६७६७३६०००० । एतैश्चाहतेषु तृतीयपादविकल्पेषु परार्द्धानां खर्वाणि पञ्चाब्जानि नवार्बुदानि नव कोटिरेका लक्षे द्वे अयुतानि सप्त सहस्राणि नव शते द्वे

---

१. नबनवति ग. ॥ २. एकं दशशतमस्मात् सहस्रमयुतं ततः परं लक्षम्। प्रयुतं कोटिमथार्बुदमब्जं खर्वं निखर्वं च ॥ तस्मान्महासरोजं शङ्कुं सरितां पतिं ततस्त्वन्त्यम्। मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः॥

पराद्धानि चतुःसप्ततिर्मध्यमेकमन्त्यानि नव सरित्पती द्वौ शङ्कवस्त्रयो महासरोजे द्वे निखर्वाणि षट् खर्वाण्यष्टावब्जमेकमर्बुदानि नव कोटयोऽष्टौ प्रयुतानि च चत्वारि। ५९९१०२७९२७४१९२३२६८१९८४०००००० । एतैरप्याहतेषु चतुर्थपादविकल्पेषु परार्द्धपरार्द्धानां सहस्रमेकं परार्द्धपरार्द्धान्यष्टाशीतिः परार्द्धानामन्त्यानि नव सरित्पतयस्तावन्तः शङ्कुरेको महासरोजमेकं निखर्वाणि नव खर्वे द्वे अब्जानि पञ्चार्बुदान्यष्टौ प्रयुतानि नव लक्षाणि षट् अयुतानि पञ्च सहस्रे द्वे शतानि त्रीणि परार्द्धान्येकान्नचत्वारिंशन्मध्यानि षट् अन्त्यानि नव सरित्पतयस्तावन्तः शङ्कवः षट् महासरोजमेकं निखर्वाणि त्रीणि खर्वाणि षट् अब्जानि नवार्बुदानि च षट्। १०८८०९९११९२५८०९६५२३३९६९९६१३६९६०००००००००। तर्णकश्लोकाः समुत्पद्यन्ते। एवं च पङ्क्त्यादिजातावपि सुधीभिः स्वयमभ्यूहच्यम् यावत् शक्वरी जातिः। तत्र हि महासरोजमेकं निखर्वाणि त्रीण्यब्जानि सप्तार्बुदानि षट् कोटयः सप्त प्रयुतानि चत्वारि लक्षाणि त्रीण्ययुतानि षट्सहस्राणि चाष्टाविति विकल्पेषु। १३०७६७४३६८००० । प्रतिपादं प्रभवत्सु प्रथमपादविकल्पैराहतेषु द्वितीयपादविकल्पेषु परार्द्धानां कोटिरेका प्रयुतानि सप्त लक्षमेकं शतमेकं परार्द्धानि द्वाविंशतिर्मध्यानि पञ्चान्त्ये द्वे सरित्पतयः सप्त शङ्कू द्वौ महासरोजानि चत्वारि निखर्वमेकं खर्वाणि नवाब्जानि तावन्त्यर्बुदानि चत्वारि कोटी द्वे प्रयुतानि च चत्वारि। १७१००१२२५२७२४१९९४२४०००००० । एतैश्चाहतेषु तृतीयपादविकल्पेषु परार्द्धपरार्द्धानां शते द्वे परार्द्धपरार्द्धानि त्रयोविंशतिः परार्द्धानां मध्यानि षडन्त्यमेकं सरित्पतयस्त्रयः शङ्कवो नव महासरोजमेकं निखर्वाणि नव खर्वमेकमब्जान्यष्टावर्बुदानि पञ्च कोटयस्तिस्रः प्रयुतानि त्रीणि लक्षाणि सप्तायुतानि त्रीणि सहस्राणि सप्त शतानि षट् मध्यान्यष्टावन्त्यानि पञ्च सरित्पतिरेकः शङ्कवः षट् महासरोजानि चत्वारि खर्वाणि त्रीणि अब्जे च द्वे। २२३६१३९१९१८५३३७३७६००८५१६४०३२०००००००००। एतैरप्याहतेषु चतुर्थपादविकल्पेषु परार्द्धपरार्द्धानां सरित्पती द्वौ शङ्कवो नव महासरोजे द्वे निखर्वाणि चत्वारि खर्वमेकमब्जानि चत्वार्यर्बुदमेकं कोटयो नव लक्षाणि चत्वार्ययुतानि तावन्ति सहस्राणि षट् शतानि षट् परार्द्धपरार्द्धानि नवाशीतिः परार्द्धानां मध्यमेकमन्त्ये द्वे सरित्पतयोऽष्टौ महासरोजानि त्रीणि निखर्वाणि[1] सप्ताब्जमेकमर्बुदानि पञ्च प्रयुतानि पञ्चायुतमेकं सहस्राणि सप्त शते द्वे परार्द्धान्येकान्नविंशतिर्मध्यानि त्रीण्यन्त्यमेकं सरित्पतयः सप्त शङ्कवस्तावन्तो महासरोजानि च षट्। २९२४१४१९०४४६६८९१२८०३८७१५०५०१७२१९३१७७६०००००००००००० । इति तर्णकश्लोकानामुत्पत्तिः। अतिशक्वर्यामपि च

---

१. निखर्वाण्यष्टौ खर्वाणि ग. ।।

तावतामुत्पादः सम्भवति, किन्तु तर्णकश्लोकत्वं तत्र तुल्यत्वाद्दुरुपपादं, धेनुश्लोकश्च न पृथग् भवतीति परिहृतेयमिति। समग्रेऽपि श्लोके षष्टिपदेभ्यः पदचतुष्टयपदाष्टकादियोगे उक्तात्युक्ता मध्या प्रतिष्ठासु प्रतिष्ठासु पञ्चसु जातिषु प्रत्येकं विकल्पाः स्वल्पा एव सम्पद्यन्ते। गायत्रीजातेरारभ्य पुनः प्रतिजाति ये विकल्पाः सम्भवन्ति तैः परार्द्धानां परार्द्धानीति परिगणनं सिध्यत्येव। तथाहि षष्टिपदेभ्यश्चतुर्विंशतिपदयोगे गायत्रीजातौ परार्द्धपरार्द्धानां प्रयुते द्वे लक्षे द्वे अयुतानि त्रीणि सहस्राणि षट् शतान्यष्टौ परार्द्धपरार्द्धानि[1] चतुःषष्टिः परार्द्धानां मध्यानि षट् अन्त्यमेकं सरित्पतयो नव शङ्कुरेको महासरोजानि नव निखर्वाण्यष्टौ खर्वमेकमब्जानि त्रीण्यर्बुदे द्वे कोटयो नव प्रयुतानि चत्वारि लक्षाण्यष्टावयुते द्वे सहस्राणि पञ्च शतानि षट् मध्यमेकमन्त्यानि पञ्च सरित्पतयो नव महासरोजमेकं निखर्वाण्यष्टौ खर्वाणि पञ्चाब्जमेकमर्बुदानि षट् कोटयश्चतस्रः प्रयुतानि चाष्टौ। २२३६८६४६१९१-९८१३२९४८२५६००१५९०१८५१६४८०००००० तर्णकश्लोकाः समुत्पद्यन्ते। एवं च पूर्ववदेवोष्णिग्जातिप्रभृतावपि सुमतिभिः स्वयमुन्नेयम् यावत् शक्करीजातिः। इह च षट्पञ्चाशत्तमं मेति यत् पदं तस्य प्रतिपदमर्थत्रयप्रदर्शनसमये त्रिधाऽप्यपरशब्दावयवत्वं वक्ष्यते। तथा च चतुर्विंशत्यादिपदसंयोगकल्पनासु सङ्गतार्था न भवेदिति मातीति मेत्येवंरूपः कश्चिदर्थः प्रदर्शनीयः। प्रस्तारादिपरिज्ञानार्थं च प्रथमे प्रकारजाते पूर्ववदेवाङ्कानां शून्यानां च विन्यासो विधेयः। तेन च प्रस्तारो नष्टमुद्दिष्टं सङ्ख्या च पूर्ववदेव विनिर्देश्या॥

अपरत्र[2] प्रकारजाते समग्रमपि श्लोकमेकाक्षरपदविच्छेदेन तिर्यक्पङ्क्त्या लिखित्वा चतुर्विंशतितमादिपदैश्चतुर्विंशतिपदं[3] संयोगा[4] ये समुत्थाप्यन्ते तदङ्काश्चतुर्विंशात् पदादारभ्य षष्टितमं पदं यावत् प्रतिपदमधोऽधः प्रथमं तावद्विन्यास्याः। तथा हि– चतुर्विंशेन पदेन त्रयोविंशतेः पदानां मिलितेन चतुर्विंशतिपदसंयोगा जायन्त इति तदङ्काश्चतुर्विंशस्य पदस्याऽधः षट्कद्विकशून्यचतुष्कद्वयाष्टकचतुष्कशून्यैककसप्तकत्रिकद्वयद्विकत्रिकनवकचतुष्कत्रिकनवकत्रिकषट्काः शून्यचतुष्टयसहिता लिखनीयाः। ६२०४४८४०१७३३२३-९४३९३६००००। ततश्चैते पञ्चविंशतिपदसमुत्पन्नचतुर्विंशतिपदसंयोगेष्वपि सन्तीत्येतान् पातयित्वा शेषाः पञ्चविंशतिपदसमुत्पन्नचतुर्विंशतिपदसंयोगाङ्का एककचतुष्काष्टकनवकशून्यसप्तषट्कैककषट्कचतुष्कैककपञ्चकनवकसप्तकद्वयचतुष्कषट्कपञ्चकचतुष्कद्वयषट्कचतुष्काः शून्यचतुष्टयसमन्विताः पञ्चविंशस्य पदस्याऽधो लिखनीयाः। १४८९०७६१-६४१५९७७४६५४४६४००००। एतावन्त एव च पञ्चविंशतितमेन पदेन सम्भवन्ति। अत एव चैषु सर्वेषु। पञ्चविंशतितमं पदं विद्यते न च पूर्वेषु एवमेतेषु पुर्वेषु च पतत्सु

---

१. परार्धपरार्धानीति क ख. ॥ २. अपरत्र च ग. ॥ ३. चतुर्विंशतितमपञ्चविंशतितमादि– ग. ॥ ४ –पदसंयोगा ग ॥

षड्विंशतिपदसमुत्पन्नचतुर्विंशतिपदसंयोगाङ्का एककाष्टकषट्कैककत्रिकचतुष्कपञ्चकद्विकशून्यपञ्चकैककनवकद्वयसप्तकैककाष्टकत्रिकैककाष्टकशून्याष्टकाः षट्स्वन्यसमुपेताः षड्विंशस्य पदस्याधो लिखनीयाः । १८६१३४५२०५१९९७१८३१८०८०००००० । एष्वेव षड्विंशतितमं पदमस्ति न चोभयेष्वपि पूर्वेषु एवमेव चोत्तरत्र प्रतिपदं तावदङ्का विन्यसनीयाः यावदेकान्नषष्टितमं पदम् । तच्च पदं यावदधोऽधोलिखितानामङ्कानां मीलने यावन्तोऽङ्काः सम्भवन्ति तावन्त एकान्नषष्टिपदेभ्योऽपि चतुर्विंशतिपदसंयोगाङ्काः समुत्पद्यन्ते । ततश्चैकान्नषष्टिपदसमुत्पन्नचतुर्विंशतिपदसंयोगकल्पनया वाऽधोऽधोऽङ्कमीलनया वा येऽङ्का भवन्ति । एककत्रिकचतुष्कद्विकैककद्वयाऽष्टकसप्तकद्वयैककपञ्चकैककाऽष्टकद्वयसप्तकनवकसप्तकषट्काष्टकनवकपञ्चकत्रिकषट्कशून्यद्वयनवकपञ्चकचतुष्कैककत्रयशून्यनवकाऽष्टकाऽष्टकाऽष्टकाः पञ्चशून्यसमन्विताः । १३४२११८७७१५१८८७९७६८९५३६००९५४१११०९८८००००० । तेषु पतत्सु षष्टिपदसमुत्पन्नचतुर्विंशतिपदसंयोगाङ्का अष्टकनवकचतुष्कसप्तकचतुष्कपञ्चकाष्टकचतुष्कसप्तकषट्कसप्तकनवकद्विकपञ्चकत्रिकैककसप्तकनवकत्रिकशून्यद्विकचतुष्कशून्यद्वयषट्कत्रिकषट्कशून्यसप्तकचतुष्कशून्यषट्कपञ्चकनवकद्विकाः पञ्चशून्यसमन्विताः षष्टितमस्य पदस्याधस्ताल्लिखनीयाः । ८९४७४५८४७६७९२५३१७९३०२४००६३६०७४०६५९२००००० । ततश्चाष्टाविंशतितमैकोनत्रिंशत्तमादिपदैरुत्पद्यमाना अष्टाविंशतिपदसंयोगाङ्का अष्टाविंशात् पदादारभ्य षष्टितमं पदं यावत् प्रतिपदमधोऽधस्तथैव विन्यास्याः एवं द्वात्रिंशत् षट्त्रिंशच्चत्वारिंशच्चतुश्चत्वारिंशदष्टचत्वारिंशद् द्विपञ्चाशत् षट्पञ्चाशत् पदसंयोगाङ्का अपि द्वात्रिंशादेः षट्त्रिंशादेश्चत्वारिंशादेश्चतुश्चत्वारिंशादेरष्टचत्वारिंशादेर्द्विपञ्चाशादेः षट्पञ्चाशादेः पदादारभ्य षष्टितमं पदं यावत् प्रतिपदमधोऽधो विन्यास्याः । एभिश्चाङ्कविन्यासैर्गायत्रीजातेरारभ्य प्रतिजाति परार्द्धानां परार्द्धानि ये तर्गकश्लोकास्तेषां प्रस्तारादि विनिर्देश्यम् । तत्र च प्रस्ताराङ्के पदैर्भक्त इत्युक्तन्यायेन प्रस्तारस्तावत्सुनिर्देशः । नष्टमप्यनेनैव न्यायेन विनिर्देश्यम् । तथाहि क आद्यः को द्वितीय इत्यादौ पृष्टे राश्योरुभयमुखयोरित्यादिना पूर्वमुक्तेन नयेन प्रस्ताराङ्कं परिज्ञाय तस्मात् पदैर्भागे हृते यावल्लभ्यते तदनुमानेन प्रथमपङ्क्तौ विन्यसनीयान्प्रथमादिपदसूचकानेककादीनङ्कान् विभाव्य पृष्टसङ्ख्यानुसारेण तेभ्यः प्रथमोऽङ्को विनिर्देश्यः । ततश्च पूर्वं यावल्लब्धं तावतः शिष्टपदैर्भागे हृते यावल्लभ्यते तावद्वारमेव द्वितीयपङ्क्तौ क्रमेण विन्यसनीयान् शिष्टान् अङ्कान् विमृश्य तथैव द्वितीयोऽङ्कः समुपदेश्यः । एवमेव च लब्धादङ्कान् शिष्टशिष्टैः पदैर्भागे हृते यावद्यावल्लभ्यते तावत्तावद्वारमेव तृतीयादिपङ्क्तौ क्रमेण विन्यसनीयान् शिष्टशिष्टानङ्कान् विचिन्त्य तृतीयाद्यङ्काः प्रतिपाद्याः । अमुकः कतमो भवेदित्थमुद्दिष्टस्याप्युद्घुष्टपदसमुदयसूचकानङ्कान् प्राक्तनेनैव न्यायेन क्रमेण विन्य-

सितुमागतान् विभाव्य परिसङ्ख्यानं निर्देश्यम् । सङ्ख्या च प्रतिपदमधोऽधोविन्यस्ताना-मङ्कानां मीलनेन पूर्ववदेव विनिर्देश्या । तत्र च प्रस्तारः सङ्ख्या च सङ्ख्यावतां पूर्व-स्मिन्नभ्यासपराणां स्वत एव सुनिर्देश्या । नष्टोद्दिष्टे अपि सुखेन यथाऽवबुध्येते । तदर्थ-मुदाहरणं यथा—अष्टभ्यः पदेभ्यश्चतुर्योगेऽङ्गीक्रियमाणेऽशीत्यधिकपदशतोपेतसहस्रपरिकलिते प्रस्तारे कः पञ्चोत्तरशततमः प्रस्तार इति पृष्टे प्रस्ताराङ्कादष्टभिः पदैर्भागे हृते प्रतिपदं दशोत्तरं शतद्वयं यल्लब्धं तन्मध्यात् प्रथमपदभागवर्ती पञ्चोत्तरशततमो य एककोऽङ्कः प्रथमपादसूचकः प्रथमं विनिर्देश्यः । ततश्च शेषैः सप्तभिः पदैः प्राग्लब्धाद्भागे हृते प्रतिपदं लब्धायां त्रिंशतिपदत्रयसम्बन्धे त्रिंशत्त्रयानन्तरं चतुर्थ्यां त्रिंशति यः पञ्चदशः पञ्चकोऽङ्कः स विनिर्देश्यः । अनन्तरं षट्पदैस्त्रिंशतः प्रतिपदं पञ्चके लब्धे तस्यामेव त्रिंशतिपदद्वयसम्ब-न्धिपञ्चकद्वयसम्बन्धिपञ्चकद्वयस्याग्रतो ये पञ्चचतुष्कास्तेभ्यो यः पञ्चमश्चतुष्कः स विनि-र्देश्यः । पश्चाच्च पञ्चभिः पदैः प्रतिपदं पञ्चकाल्लब्धे एकके तस्मिन्नेव पञ्चके पदचतुष्टय-सम्बन्धे द्विकत्रिकषट्कसप्तकानन्तरवर्ती योऽष्टकः स विनिर्देश्यः । एवं च पञ्चोत्तरशततमः प्रथमपञ्चमचतुर्थाष्टमपदप्रस्तारो विनिर्देश्यः । तथैकः पञ्च चत्वारोऽष्टावित्येष कतम इति पृष्टे, अये एककः प्रथममत्र विद्यते ततो द्विकादीनां सप्तानामङ्कानां भागेषु सप्तत्यधिकानि चतुर्दश शतानि यानि समायातान्यासते तानि परिहार्याण्येव प्रथमे हि दशोत्तरशतद्वये एव प्रस्तारः परिज्ञेयः । ततोऽपि चतुर्थ्यामेव त्रिंशति पञ्चकः सम्भवतीति द्विकत्रिकचतुष्क-षट्कसप्तकाऽष्टकसम्बन्धि त्रिंशत्षट्कं परित्यज्य नवतेरुपरि विंशत्युत्तरस्य शतस्य मध्ये एव प्रस्तारो विनिर्णेयः । तत्राऽपि तृतीय एव पञ्चके चतुष्कः कृतपदो भवतीति द्विकत्रिक-षट्कसप्तकाऽष्टकानां पञ्चपञ्चकान् विमुच्य शतस्योर्द्ध्वं पञ्चोत्तरशतस्यान्तरेष प्रस्तार उपदेश्यः । तत्रापि चाष्टकः पञ्चम एव प्रभवतीति द्विकत्रिकषट्कसप्तकांश्चतुरोऽङ्कानवधीर्य एष प्रस्तारः पञ्चोत्तरशततमो विनिर्देश्यः । इत्थं च परार्द्धानां परार्द्धेष्वपि नष्टोद्दिष्टे सुधीभिः स्वयमभ्यूह्ये । यच्च षष्टिपदानामर्थवाचित्वं पूर्वापरशब्दावयवत्वप्रदर्शनादिनाऽपि प्रपञ्चितं तत्राऽयमभिसन्धिः शास्त्रकर्तुः सम्भाव्यते—अर्थभेदेन हि शब्दा भिद्यन्त इत्य-शीत्यधिकपदशतादल्पानामपि पदानां संयोगे परार्द्धानां परार्द्धानि । बहूनां तु संयोगे परार्द्धानां यानि परार्द्धानि तेषामपि परार्द्धानां परार्द्धानि तेषामपि च परार्द्धानां परार्द्धा-न्येवमपरिमितास्तर्णकश्लोकाः समुत्पद्यन्ताम् । अथवाऽशीत्यधिकपदशतात् कियद्भिः कियद्भिरेव च पदैः क्रमेणाऽपि योज्यमानैः कियतीष्वपि जातिषु प्रत्येकमेव च तर्णकश्लोकानां परिगणनमभिमतं सिध्यत्विति । अस्मिन्नेव च पक्षे 'स्थितेनाऽऽगन्तुकं हन्याद्' इत्ययं न्यायो न्याय्यतर इति विद्वज्जनमनांस्यावर्जयितुमलं तदत्रापि पूर्ववदेव सर्वमुन्नेयमिति ।

---

१. द्वितीयपक्षापेक्षया ॥

**एकाक्षरादि** इति। एकाक्षरच्छन्दसा तथाविधं न किञ्चिद्वैचित्र्यमिति द्व्यक्षर-प्रभृतिभिरेव छन्दोभिश्चित्राण्युदाह्रियन्ते। आदिशब्दस्तूपलक्षणपरो व्याख्येयः। तत्रोक्तानि यथा।

या या मा मा। मा भूः सा सूः॥ चतुर्व्यञ्जनः।

माया मेधा यामा धामा।
मेमा याया मेमा माधीः॥ त्रिव्यञ्जनः।

मा मेधा धामामूर्धामेमा मामेधूः॥ द्विव्यञ्जनः।

मेमा मामूः। मामे मामाः॥ एकव्यञ्जनः।

यामा माया ज्ञस्तूर्भामा स्त्रीसामेना।
मा र्भार्मेयुम्मूर्भूर्मामासूस्ते मेनौः॥ छन्दोक्षरव्यञ्जनः।

मूः पूर्धूर्वी रुग्वामागौः।
मेनामेधा सागीर्मेनौः॥ षड्जादिस्वराक्षरव्यञ्जनः।

शी श्रीर्धीर्भीष्पूर्जूर्मूस्रू स्मृस्त्री।
धूर्भूसृद्विद्युत् चिद्वित् धुर्मृन्मुत्॥ निष्कण्ठ्यः।

मूस्रूः सूधूः पूर्भूः स्रक् भुक् रुक् तुट् कुन्मुगृदृग्।
धा मामृत्कृद्धामाद्धार्गौः सामानामात्वं नौः॥ निस्तालव्यः।

याशीर्गीः श्रीर्ह्रीर्भीर्सूः पूर्भूः श्रुक् युग् भुग् रुक् श्रग्मुगृक्।
युज्जिज्जूर्नार्भामा कामा गौर्मायामा मे मे मामे॥ निर्दन्त्यः।

याशीर्गीः श्रीर्धीः स्त्री ह्रीः स्रक्द्वित्।
दिक् झक् दृक् कृत्कासाधायानाते॥ निरोष्ठ्यः।

यागीः शीस्रूः सूः शुक् युक् भुक् युन्मूश्चिद्विन्मुक् दिक् वामाभामामुत् धूः।
कामा वा गौः सामायामा मेधा वेधा मेना मा ते धीस्त्वं मे नौः॥ निर्मूर्द्धन्यः।

याशीर्गीः श्रीः। काह्रीर्झग् या॥ निरोष्ठ्यदन्त्यः।

यागीः शीः का दिग्वित्। माधायानाधीस्ते॥ निरोष्ठ्यमूर्द्धन्यः।

का का सा सा। धो धा नाना॥ दन्त्यकण्ठ्यवर्ण्णः।

श्रुक् युक् भुक् रुक्। शुक् युन् मुग् मुत्॥ ह्रस्वैकस्वरः।

या वा मा भामा कामा वा।
सामा यामा धाधा नामा॥ दीर्घैकस्वरः।

द्विट् चित् वित् दिक् । तृट् रु[ऋ]क् दक् कृत् ॥ ह्रस्वद्विस्वरः ।
गीः श्रीर्धीः स्त्री ह्रीर्भीः । नूः सूर्धूः पूर्भूर्धूः ॥ दीर्घद्विस्वरः ।
द्विट् चिद्वित् दिक् स्रुक् युक् भुक् रुक् । शुक् युत् मुक् मुत् तृट् ऋक् दक् कृत् ॥
ह्रस्वत्रिस्वरः ।
या वा मा भामा गीः श्रीर्ह्रीर्धीः स्त्री । सूर्वूः पूर्भूः द्युर्मे वे मे ते मे ॥ दीर्घचतुःस्वरः ।
शीस्त्रीरुक्ते मेनौः शीर्वा माभा—कामाधूर्माया ।
धावेमुन्मेनाविच्छक्ते पूर्वा धूर्मा धानौः सामा ॥ प्रतिव्यञ्जनविन्यस्तस्वरः ।
सस्रुरक्तमनः शर्वमभजः कमधर्मय ।
धव मन्मनवच्छक्तपर्वधर्मधनः सम ॥ सएवापास्तसमस्तस्वरः ।

कं सुखहेतुं शर्वमीश्वरमर्थात्त्वमभजः । अस्य विष्णोर्यो धर्मस्तं याति यस्तस्य सम्बोधनम् । धवः भर्त्ता पृथिव्या इत्यर्थः । मन्मनं मनोज्ञं वदतीति विचि मन्मनवत् । नरिति नर ।

माभा सा शीर्ह्रीः स्त्रीधामा माधास्त्री गीर्वेया वामा ।
मावाया त्वं श्रीः का नामा माना कानौर्मे सा भामा ॥ अष्टदलं पद्मम् ।

इत्थं वा

वामा भामा कामा सामा यामा धामा नामा धामा ।
वामे भामे कामे सामे यामे धामे नामे धामे ॥

एवम्

वामा याते यामाधामे धामाका श्रीः कामासा धीः ।
सामा नास्त्री नामावे भीर्वेमा मे त्वं मे मा मे नौ र्मे [नौर्] ॥
मा भाजूर्मूस्रूः का धामा माधा वेधीर्भीः स्त्रीवामा ।
मावा श्रीर्ह्रीर्गीर्या नामा माना त्वं मे नौः सा भामा ॥ चतुर्दलं पद्मम् ।
शीर्मा गीर्मा श्रीर्मा धीर्मा द्यौर्मा ह्रीर्मा भीर्मा जूर्मा ।
तूर्मा सूर्मा पूर्मा भूर्मा मूर्मा यूर्मा नौर्मा – – ॥ षोडशदलं पद्मम् ।
माया माशीर्गीर्वेमेनायायानामे श्रीर्द्रीस्त्वं धाभामा ।
माभाधा शीर्गीर्वा वेधाकाका काधा वे श्रीर्धीर्मे मेधा मा ।
माधामे स्त्री ह्रीर्भीर्द्राष्पूः सूस्सूः सूः पूर्द्धार्युन्मुग्मासा वामा
मावासा स्त्री ह्रीर्मे मामे ते ते ते मे मा युग्मुद्गाऽयामा ॥ अष्टदलं पद्मम् ।
या शीर्गीः श्री धीर्भामा स्त्री ह्रीर्भीर्जूर्मूर्सूर्द्रासूर्धूः पूर्भूर्वा मा स्रुक् स्रक् युग् भुग् रुक् ।
शुक् सा नृट् द्विट् युत्कुत्कामा चिद्विन्मुग्दिक्ते मे मेनाया वेधा त्वं साघौः सूर्नौः शुक् ॥
वामे चक्रम् ।

मा वासा काभा मा या या या यामा भा कासा वामा ।
माना धा वेधामेना मे मेना मेधा वेधा नामा ॥ पादगतप्रत्यागते ।

मावासा कामा भामा यामा नाधावेधा मेना मे ।
मेनामेधा वेधा नामा यामा भामा कासा वामा ॥ अर्द्धगतप्रत्यागतम् ।

या मा माकामा भामा वाया वा ।
या माया भाया नामा साया सा ॥

अत एव प्रातिलोम्येनापरः प्राकृतश्लोकः ।

साया सामा नाया भाया माया ।
वाया वामा भामा कामा माया ॥

सुखहेतुः श्यामा ज्ञाता भाता माता वाग्रूपा मनोज्ञा सत्यभामावत्कामो मनोरथो यस्याः । माया रूपा सा देवीत्यर्थः ।

भाना याया भूर्धाया नासा वा कासा माधीर्नौ ह्रीः ।
गौर्या पूर्मा मेमा मे त्वं ते श्रीः स्त्री माते गीः श्रीयां ॥ तुरङ्गपदागतम् ।

भाःका भूर्नौर्यामामार्या यामा या त्वं गीर्मा श्रीः सा ।
पूते वा यामे श्री ह्रींर्धामेनाधीते सा ना गौः स्त्री ॥ आर्येति नाम । पूते अधीते इति च संबोधने ।

वेधामामे मे माधावेधानामायाया मानाधा ।
मो मा भामाऽमाभामा मा मेया मा त्वं त्वं माया मे ॥ सर्वतोभद्रम् ।

शीर्वामा धीर्मा कामात्वं सामायामा मे मेधा नौः ।
शीर्यामा ह्रीर्मा भामागीः सा तेया स्त्री मे वेधाश्रीः ॥ द्विचतुष्कचक्रबन्धः ।

मा स्त्री याशीर्भाधीः का ह्रीर्द्रा श्रीर्ना वामा जूर्मेया ।
तूः स्वर्भाधूः पूः कावे मूर्द्धात्वं नूर्ना नौर्मेना ॥ द्विशृङ्गाटकबन्धः ।

माभा साधावायाकाना भास्त्री सा वा वेया नामा ।
मा जूर्धूः स्त्री धीस्त्वं धातुर्मे वेशीर्गीः का नौ र्मेमा विरिड् ॥ इति चक्रबन्धः ।
याशीर्वेधा भामा सामे श्रीः स्त्रीकामा नौ स्तेनात्वम् ।
धीः शीर्मेधा वामा वामे ह्रीः स्त्रीयामाद्यूस्ते मेत्वम् ॥ शरयन्त्रबन्धोऽयम् ।
या शीर्गीः श्री धी स्त्री ह्रीर्भीः पूर्भूः स्रक् सुक् भुक् रुक् तृट् युक् सुक् द्यूर्या ।
–ग्वामृन्मा मुद्गामानौ द्यौर्मासा मा मेधा मेना ते द्वार्झक् ।

जूः शीर्मूः श्री स्रूः स्त्री सूर्भीर्धूर्भूः शुक् श्रुक् युग् भुक् द्विट् युद्दिक् धूर्ज्जूर्दग्वा कृन्मा क्षुद्राकानो धूर्माया मा वेधा माना मे द्वार्दक् ॥ व्योमबन्धः ।

या वामा सा धामा मेना मेवा माते त्वमामेका ।
कामे मात्वं भामा धाधीः स्त्रीमेमासा धामा धानौः ॥ मुरजबन्धः ।

शेषा अप्युक्तचित्रप्रकाराः स्वयमभ्यूह्याः । अनुक्तानि यथा

माया शीर्गीः श्री धीः स्त्री ह्री भीं र्जू र्मू स्रूः सूर्धूः पूः सा ।
सा भूः स्रुक् स्रक् युक् भुक् रुक् शुक् तृट् द्विट् युत् कुत् चित् वित् भामा ॥
मा मुक् दिक् धूर्झक् दृग् द्वार्मा मृत् कृत् मुत् क्षुत्कामा वामा ।
मा द्यौर्गौ स्त्वं मा याते मेवा वेधा मेना मा मे नौः ॥ खड्गः ।

एवमन्यान्यपि ।

प्रमाणमम्भसां पत्युर्यथा पृष्टो वगिग्जनः ।
भुल्लकोऽर्गल इत्यूचे तथेदं कथितं मया ॥ १ ॥

नोपदेशः कुतोऽप्यस्ति वृत्तिदीपश्च नाग्रभूः ।
तथाऽपि विवरेऽमुष्मिन् विशामि स्म निरङ्कुशः ॥ २ ॥

विमृश्यं सुधियामीशैः शश्वद्गगितकोविदैः ।
कीदृगेष खिलग्रन्थः कथमुद्भेदितः स्फुटम् ॥ ३ ॥

यस्मै च रोचते नेदं नमस्तस्मै मनीषिणे ।
अपि भास्वान्न शक्नोति भेत्तुमन्तर्गुहं तमः ॥ ४ ॥

अस्ति शक्तिर्निजा काचित् कस्यचिच्चेद्विपश्चितः ।
अन्यं प्रकारमादर्श्य सोऽपि स्याद्धेतुभेदकः ॥ ५ ॥ इति ।

**तद्बिन्दुच्युतकादावपि** इति । बिन्दुव्यञ्जनवर्णादिमुक्तमपि स्थानम् अकारेण पूरणीयं स्यात् । ततश्च सरस्येत्याद्यनिष्टमापद्येतेत्यर्थः । **कृपणेति** इति । द्विमात्रस्याकारस्यैका मात्रा च्युतेत्यर्थः । **वृद्धादि** इति । आदिग्रहणाद्धनदविधिसिध्यतेशब्दाः । **किमु तुच्छरूपम्** इति । का गणना त्वदीयेत्यर्थः । **बाधा खड्गकृता** इति । न च त्वया सम्मुखेन भूत्वा केनाऽपि सह युद्धमित्यर्थः । **ननु तथारूढम्** इति । रूढिर्हि सुरा देवाः सौरे देवसम्बन्धिनीत्यर्थः । **गिरिपदस्य** इति । प्रथमान्तस्येत्यर्थः । **अर्कजशब्दपर्यायेण** इति । कर्णलक्षणेन प्रतिपादमित्यादि । प्रतिपादमाद्याष्टमयोर्वर्णयोर्द्वयोर्द्वयोर्ग्रहणेन । एवं प्रतिपादं सप्तमद्वितीययोर्वर्णयोर्द्वयोर्द्वयोर्ग्रहणेनेत्येवं योजना कार्या । न त्वेकैकस्मिन् पादे

आद्याष्टमयोः सप्तमद्वितीययोरित्यादिरूपेत्यर्थः। **उपरि** इति। उपरि छाययेत्यर्थः। **तिंगिछीति** किञ्जल्कम्। **नवसंगमभीर्विति**। पुनः सङ्गमाशङ्किनीत्यर्थः। **अरुणनायक**—इति। अरुणः सारथिर्नेता यत्र लोहितो मध्यमगिर्यत्र च। **वाराह्या** इति। वाराही—सम्बन्धिना। **इति** इति पूर्वार्द्धोक्तेन नर्मणेति। हेतौ तृतीया। अस्मिन् हि क्षणे वाराहीमुखदर्शनादाविभवदनस्य तत्कृतमेव नर्मनिमित्तमित्यर्थः। **मदनजनकद्वेषिणोः** इति हरिशङ्करयोः। **तिष्ठद्द्वारि** इति द्वारि तिष्ठति। अङ्गणे भवति सद्मनो बहिर्व्रजतीत्येवं तव मार्गमवलोकयतीत्यर्थः। एवमुत्तरत्राप्यनुप्रयोगानुसारेण व्याख्येयम्। **ज्योतिर्भ्यस्तदिदं तमः** इति। अत्र हि प्रियाद्विप्रियं न तावदञ्जसा सम्भाव्यते दृश्यते च कुतश्चिन्निमित्तादिति प्रतिषेधो विधिश्च वस्तु वृत्यालोके सुप्रतीतः। अथ च तत्र विदर्शनालङ्कारच्छायया या सा वाश्चर्यभणितिरुपनिबद्धा ज्योतिर्भ्यस्तदिदं तमः समुदितमित्यादि सा शाब्द्या वृत्त्या विधिरूपा, [1]असम्भाव्यमानश्चायमर्थ इत्याश्चर्यरूपत्वादेवास्यार्थस्य प्रतीयमानप्रतिषेधस्वभावा चेत्यर्थः। **दृश्यं दृशाम्** इति। अत्रापि सुभ्रुवो वयोऽवलोकनादिसमीहा तदप्राप्तिश्च बहिः प्रतीतैवेति विधौ निषेधे च सद्भूते दृश्यमित्यादिः कल्पना भणितिर्विधिरूपा दृक्सहस्रैरेव तच्च यो दृश्यं न तु दृग्द्वयेनेत्यादिकल्पनादेव प्रतीयमाननिषेधरूपा चेति उत्तरार्द्धस्येति सम्भावितैकदेशेनेत्यादेः। अस्य च पूर्वमर्द्धम् अनेकार्थाभियुक्तेन सर्वत्र व्यपलापिनेति स्मृतिषु हि पठ्यते [2]बध्वेति तृतीयान्तं क्त्वान्तं च। **पोत**मिति अपत्यं प्रवहणं च। **पादार्द्ध**—इति पादश्चार्द्धं च पादार्द्धं चेत्येकशेषः। **गुणत्वेन** इति। अप्रधानत्वेन अप्राकरणिकत्वेनेत्यर्थः। **लभ्यन्ते यदि वाञ्छितानि** इति कुतश्चिदपमानाद्यमुनाभागीरथीसङ्गमगतस्य छिन्तपस्य क्लिोक्तिरियम्। भवद्वर्त्तव्यतालक्षणैव मे वाञ्छा सा चेन्मरणेन तदपि हि स्वत एव सिद्धमस्तीति भावः[3]। **राहोश्चन्द्रकलामिव** इति। अत्र पूर्वार्द्धे राहुचन्द्रकलाकृपाणादीनामनुकृतिराहार्योऽभिनयः। **मे इति अस्य** इति प्रेयस्या हठाकर्षणमित्यादीनामनुकारश्चाङ्गिकोऽभिनयः। समग्रपूर्वार्द्धवचसामनुकृतिर्वाचिकोऽभिनयः। उत्तरार्द्धे तु स्तम्भप्रलयकम्पवैवर्ण्यरोमाञ्चानां व्यक्तमेव सात्त्विकभावानामभिनयः।

इति कल्पपल्लवशेषे कल्पलताविवेके शब्दालङ्कारदर्शनो नाम तृतीयः परिच्छेदः।

---

१. सम्भाव्यमान-ग.॥ २. क. ख. पुस्तकयोर्नास्ति॥ ३. भावः आक्षिप्तिकेति ध्रुवेति राहोश्चन्द्रकलामिवेति ग.॥

## [ अथ अर्थालङ्कारनिर्णयो नाम चतुर्थः परिच्छेदः ]

**चतुः** इति। समस्तविषयस्यैकदेशवर्तिनश्च प्रत्येकं द्वैविध्याच्चतुर्द्धेत्यर्थः। **वास्तवम्** इति। यद्वस्तुस्वरूपस्य कथनं क्रियते तद्वास्तवमिति ज्ञेयम्। वस्तुन इदं वास्तवम्। इतिरर्थनिर्देशे। वास्तवशब्दवाच्यः सोऽर्थ इत्यर्थः। वस्तुकथनमित्येतावतैव स्वरूपार्थे लब्धे **स्वरूप**ग्रहणं [1]विशेषणप्रतिपत्त्यर्थमित्याहुः। तेन

सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः।
[2]सुकुमारक मा रोदीस्तव ह्येष स्य[3]मन्तकः॥

इत्यस्य वास्तवत्वं न भवति तदसत्। वक्ष्यमाणानां वास्तवप्रभेदानां कुत्रचिद्विशेषणायोगात्। न ह्युत्तरत्र सर्वत्रैव सविशेषणं वस्तु कथितम्। सिंह इत्यादौ पुष्टार्थत्वादप्रसङ्गः। तस्माद्यदेव सामर्थ्यलभ्यं स्वरूपं तद्धि स्पष्टार्थं निर्दिश्यते। **पुष्टार्थ**ग्रहणम् अपुष्टार्थनिवृत्त्यर्थम्। तेन

गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम्॥

इत्यस्याऽहृदयावर्जकत्वाद्वास्तवत्वं न भवति। **[4]अविपरीत**ग्रहणमविवक्षितस्यार्थस्वरूपस्य वास्तवत्वनिवृत्त्यर्थम्। यथा

दन्तान्निर्दलयद्रसां च जडयत्तालु द्विधा स्फोटयत्
जाड्यात् सङ्कटयद्दलं गलबिलादन्त्राणि सङ्कोचयत्।
इत्थं निर्मलकर्करीस्थमसहप्रालेयवाताहतं
नाधन्याः प्रचुरं पिबन्त्यनुदिनं प्रोन्मुक्तधारं पयः॥

अत्र हि पयसः शीतलत्वमाह्लादकत्वं च विवक्षितं, वर्णितं च मारकत्वम्। **निरुपमादि**ग्रहणमनुवादमात्रं, न तूपमातिशयश्लेषाणां वास्तवत्वनिवृत्तये, पृथगुपादानादेव तेषामन्यत्वसिद्धेः। **सम्यक् प्रतिपादयितुम्** इति। यत्र प्राकरणिकं वस्तु स्वरूपतः स्वरूपविशेषेण सम्यगनन्यथा प्रतिपादयितुं वस्त्वन्तरमप्राकरणिकं वस्तु वक्ताऽभिदध्यात्तदौपम्यं नामालङ्कारः। वस्त्वन्तरोक्त्या कथं वस्तु स्वरूपविशेषतः प्रतिपाद्यत इत्याह—**तत्समानमिति** इति। **इतिर्हेतौ**। यतो वस्त्वन्तरं प्रकृतवस्तुसदृशमतस्तेन तत् सम्यक् प्रतिपाद्यतेऽत एव च तदभिधानमित्यर्थः। अथ **सम्यग्**ग्रहणं किमर्थं, यावता वस्तुनोऽन्यथात्वमसम्यक्त्वं तच्च प्रागेव निषिद्धं, सर्वः स्वं स्वं रूपमित्यादिना। सत्यमेतत्। किन्तु

---

१. वैशिष्ट्य॥ २ प्रसेनपुत्रः॥ ३. येन सीमन्तो भूष्यते स मणिरेवंनामा॥ ४. विपरीत–ग.॥

वस्तुनः सामान्यविशेषरूपभेदेन द्विविधं सम्यक्त्वम्। यथा रम्यं तव मुखमिन्दुरिव, रम्यं तव मुखमिति च। तत्र पूर्वं यत्सम्यक्त्वं तदन्यथात्वं पुरा निषिद्धम्। विशिष्टसम्यक्त्वान्यथाभावस्त्वनेन निषिध्यत इत्याहुः। तेन विशिष्टतरं वस्त्वभिधातुमिति सम्यक्शब्दार्थः। अभिदध्यादिति कर्तृपदेनैव वक्त्रर्थे लब्धे **वक्तृ**ग्रहणं तद्विशेषप्रतिपत्त्यर्थम्। रक्तविरक्तमध्यस्था हि त्रयो वक्तारः। तेन यादृग्वक्ता येन रूपेण वस्तु प्रतिपिपादयिषति तादृशमेव यत्र वस्त्वन्तरमभिदध्यात्तदौपम्यमित्यर्थः। एकमेव हि वस्तु रक्तो वक्ता स्तुवन्नुपमयति।

यथा

अमृतस्येव कुण्डानि सुखानामिव राशयः।
रतेरिव निधानानि निर्मिताः केन योषितः॥

विरक्तो निन्दन् यथा

मांसासृक्श्लेष्ममेदोऽस्थि–विष्ठापूयादिसङ्कुले।
सकृमौ नरकाकारे पिण्डे स्त्रीनाम्नि का रतिः॥

मध्यस्थस्तु स्वरूपमात्रं वक्ति। यथा

दर्शनादेव नटवद्धरन्ति हृदयं स्त्रियः।
विश्वस्ते चाऽप्यविश्वस्ता भवन्ति च चरा इव॥

यत्रोपमानोपमेयभावः श्रौतः प्रातीतिको वा सामान्यमपि वा तदौपम्यमिति तात्पर्यार्थोऽत्र, तेन संशयादयोऽप्येतद्भेदा एव। **यत्रार्थधर्मनियमः** इति। सोऽतिशयो नामालङ्कार इत्यनेन प्रकारेण स्यात्। यत्रार्थधर्मनियमो विपर्ययं याति–अर्थस्याग्न्यादेर्यो धर्म औष्ण्यादिकस्तस्य यो नियमोऽवश्यंभावः स विपर्ययसद्भावं याति। नियमश्चेत् कथं विपर्यय इत्याह–**प्रसिद्धिबाधाद्** इति। उष्णं दहतीत्यादिका या प्रसिद्धिः ख्यातिः सा बाध्यते। तद्बाधनाच्च विपर्यस्तो यत्रार्थधर्मनियमः सोऽतिशयः। यथा

वह्निं शीतयितुं स्थलं जलयितुं वातं निरोद्धुं रयात्
मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम्।
उद्धर्तुं कुलभूभृतः स्थलयितुं सिन्धुं च सम्भाव्यते
शक्तिर्यस्य नृपैः स एव नृपतिः शेषाः पुनः पार्थिवाः॥

यथा च

यां ज्वलन्न ददाहाग्निः साप्यत्यन्तपतिव्रता।
सीता स्पृष्टाऽपवादेन कः खलानामगोचरः॥

---

१. साधारणो धर्म एवमेव॥

यद्येवं तदत्र नास्त्येव नियम इत्याह—**कश्चित् क्वचिद्** इति । यदि हि सर्वोऽर्थः सर्वत्र च विपर्ययं यायात्तत् स्यादेवम् । न चैतत् । अपि तु कश्चिदेवार्थधर्मनियमो विपर्ययं यातः । कथं विपर्ययं यातीत्याह—**अतिलोकम्** इति । लोकानामतिक्रमो यत्र तदतिलोकं यानम् । अत एव चातिशयत्वं यदतीत्य सर्वलोकं कश्चित् क्वचिद्विपर्ययं याति, लोकानतिगतोऽतिलोको वा विपर्ययः । **तस्येत्युत्तरार्यया** सम्बध्यते । **यत्रैकमनेकार्थैः** इति । यत्र वाक्यमनेकस्मिन्नर्थे निश्चयं कुरुते सोऽर्थश्लेषो बोद्धव्यः । **अर्थ**ग्रहणं शब्दार्थविषयत्वेन श्लेषस्योभयरूपत्वस्मरणार्थम् । कदाचित्तद्वाक्यमनेकं स्यात्तदवश्यमनेकार्थप्रतिपादकं भवेदित्याह—**एकम्** इति । एकं चेत् कथमनेकार्थनिश्चयकारीत्याह—**अनेकार्थैः पदै रचितम्** इति । **एक**ग्रहणं शब्दश्लेषादस्य विशेषख्यापनार्थम् । तत्र हि युगपदनेकं विधीयते वाक्यम् । किञ्च तत्र शब्दानां श्लेषोऽत्र त्वर्थानाम् । **शुद्धस्य**[1] इति । शुद्धस्यैव सतोऽस्य दश भेदाः । अलङ्कारान्तरसंस्पर्शे[2] त्वनन्ता इत्यर्थः । **ततः कुमुदनाथेन** इति । अत्र यद्यपि कामिनीकपोलः उपमानत्वेन निर्दिष्टस्तथाऽपि मुखावयवरूपत्वादस्य मुखमेवोपमानतया द्रष्टव्यम् । अत एव वक्ष्यति—**चन्द्रमुखादीनाम्** इत्यादि । **येन**[3] इति स्वसादृश्यपरिप्रापकतया येन करणभूतेनेत्यर्थः । **तेन** इति करणभूतेन । **अप्रसिद्धम्** इति । सौन्दर्यादिगुणयोगित्वेन न प्रसिद्धमित्यर्थः । **व्याख्येयः** इति । प्राकरणिकं प्रधानमेवाप्राकरणिकं त्वप्रधानमेवेत्याशयः । **परभृताया इव** इति । परभृताया वचनमिवास्या वचनं मनोहरम् । **शब्दो ह्यम्बरगुणः** इति । गुणोऽत्र प्रवृत्तिनिमित्तम् । **विषाणित्वम्** इति । विषाणसमवाय इव दंष्ट्रासमवायो हिंस्रः । **गुणस्य**[4] इति । गुणः शब्दप्रवृत्तिनिमित्तं द्रव्यगतो धर्मः, गुणो भावो धर्म इत्यनर्थान्तरम् । द्रव्ये यत् संसृष्टं तद्धर्मत्वेन प्रसिद्धं वस्तु जात्यादि । संसर्गित्वादेव तस्य द्रव्यस्य द्रव्यान्तरेभ्यो भेदकम् । अत एव भेदकरणात् सव्यापारं निवर्त्तनाख्येन व्यापारेण योगात् । तस्याऽस्य वस्तुनः परं प्रति भेदकत्वेनोपात्तस्य तेन परेण परतन्त्रत्वात् पाणिनीये शास्त्रे गुणत्वमुदाहृतम् । यदुक्तम्

संसर्गि भेदकं यद्यत् सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ॥

**भावात्** सद्भावात् । **द्रव्य** इति वस्तूपलक्षणत्वेन प्रसिद्धमिदम् । **तद्** इति सर्वनाम । यत्र क्वचित् प्रयुज्यते जातौ गुणे क्रियायां वा, जातिरियमयं गुणः क्रियेयमिति । स

१. शुद्धस्यैवेति ग १ ॥ २. संपर्के क. ग. ॥ ३. येन इति......त्वप्रधानमेवेत्याशयः । नास्ति पाठोऽयं ग. १ पुस्तके ॥ ४. गुणस्येति ...... जातिसद्भावे इति—पाठोऽयं ग १ पुस्तके न दृश्यते ॥ ५. दर्शकत्वेन ॥

सर्व एवार्थो व्याकरणे भेद्यत्वेनेदमित्यादिभिः पुरोवर्त्तित्वादिधर्मैर्विशेष्यत्वेन विवक्षितो द्रव्यमित्यनुपचारेणैवोच्यते । भेद्यत्वस्य द्रव्यलक्षणत्वात् । यदाह

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

तत्र गोशुक्लक्रियाशब्दानां गवि शुक्लगुणे क्रियायां च भेद्यत्वेन द्रव्यशब्दाभिधेये वर्त्तमानानां गवादिजातिः प्रवृत्तिनिमित्तमिति जातौ वाच्यायां भावप्रत्ययः, गोत्वं गोजातिः शुक्लत्वं शुक्लगुणजातिः क्रियात्वं क्रियाजातिः । यदा तु शुक्लशब्दः सोऽयमित्यभेदान्मतुब्लोपाद्वा पटद्रव्ये वर्त्तते तदा तस्मिन्नेव गुणे भावप्रत्ययः इति । शुक्लस्य पटस्य भावः शुक्लत्वं शुक्लगुणः । समासकृत्तद्धितेषु सम्बन्धे वाच्ये भावप्रत्ययः । राजपुरुषत्वं पाचकत्वम् औपगवत्वम् । एषु स्वस्वामिक्रियाकारकाऽपत्यापत्यवत्सम्बन्धाः । स्वार्थिकास्तु गुणवचना एवेति गुणे एव विशिष्टे प्रत्ययः शुक्लतरत्वम् । ये तु कृत्तद्धितान्ता अपि रूढाः कस्याञ्चिज्जातौ[1] कुम्भकारः क्षत्रिय इत्यादयः, ये च प्रत्यये ऽपि कृते प्रकृतेरभिन्नरूपाः शुक्लादयो मतुपो लुकि रूपस्याभेदात्, तेषु सम्बन्धस्य प्रवृत्तिनिमित्तत्वं परमार्थतो नास्ति । जातिवचनः कृत्तद्धितान्तो रूढ्या गुणवचनश्च तद्धितान्त इति जातावेव गुण एव च तत्र भावप्रत्ययः । कुम्भकारत्वं क्षत्रियत्वं शुक्लोऽस्यास्तीति शुक्लः पटस्तस्य भावः शुक्लत्वम् । यश्च स न विद्यमान इत्यादिरव्यभिचरितः सम्बन्धः पदार्थमात्रे सदित्यादि कृदन्तस्य तस्य[2] वृत्तेस्तत्रापि जातावेव रूढत्वात् । तत्रैव[3] प्रत्ययो न सम्बन्धे । सत्त्वं विद्यमानत्वम् । डित्थादेस्तु यदृच्छाशब्दादन्यस्य प्रवृत्तिनिमित्तस्यासम्भवात्तस्मिन्नेव स्वरूपे डित्थशब्दवाच्यतयाऽध्यवसिताभेदे अव्यतिरिक्तेऽपि व्यतिरिक्त इव शब्दप्रत्ययबलाद् बुद्ध्यावगृहीते धर्मे भावप्रत्ययः । डित्थस्य भावः स्वरूपं डित्थत्वम् । द्वन्द्वे तु समासे स्वप्रधानत्वात्तदवयवानां सम्बन्धस्य प्रवृत्तिनिमित्तत्वं नास्तीति स एव जात्यादिसङ्घातो जात्यादिशब्दानां प्रवृत्तिनिमित्तं भावप्रत्ययेनोच्यते । धवखदिरत्वं रूपरसत्वं पटस्य शुक्लकृष्णत्वे इति । तदाहुः

जातिगुणाज्जातिर्[4]गुणे समासकृत्तद्धिताच्च सम्बन्धे ।
डित्थादेः स्व[स्वे]रूपे धवखदिराज्जातिसङ्घाते ॥ इति

**सुषुप्ते इव** इति । सुषुप्ते सुखदुःखाद्यभाव इव मोक्षे सुखदुःखाद्यभाव इत्यर्थः । **उपमानतया** इति । उपमानविशेषणा इत्यस्य व्याख्येयम् । **तथैव** इति । यथेवादिसद्भावप्रकारेणैव श्रौतीत्यर्थः । **तेन** इति । चन्द्रेण तुल्यं मुखम् । **तद्** इति चन्द्रबिम्बं तुल्यं मुखस्य ।

१. आकृतिग्रहणेत्याडित्थायाम् । ख पुस्तके एव ॥ २. शब्दस्य ख. पुस्तके एव ॥ ३. जातौ ख. ॥ ४. त्वतलौ स्तो जातिगुणे वाच्ये, एवमग्रेऽपि ॥

**इदं च** इति। मुखं च चन्द्रबिम्बं च तुल्यम्। **तद्वद्** इति तुल्यादिशब्दोपादाने इवार्थीत्यर्थः। **ध्वनि**–इति। स्फुटं चेत् प्रतीयमानं ततो ध्वनिव्यवहारः। अस्फुटं चेत्तदा गुणीभूतव्यङ्ग्यव्यवहार इत्याशयः। **तद्** इति। रसादिरूपं व्यङ्ग्यमर्थमलङ्कारान्तरं च। **तद्रहितत्वेन** इति। ताभ्यां रसाद्यलङ्कारान्तराभ्याम्। **अव्यभिचारितयैव** इति विद्यमानमिति शेषः। **करणीयम्** इति कर्त्तव्यं कायव्यापारः। **सत्यम्** इति अवितथम्। त्रितयमपि तथाऽध्यायकं वर्त्तत इत्यर्थः। **यदि** इति यदि वेत्सीति सम्बन्धः। **वचनवृत्त्या** इति सामानाधिकरण्यरूपया। **विषम्** इति। मन इति सम्बध्यते। **अर्थो भवति** इति विशेषरूपतया द्विरुपादानम्। **निरन्तरः** इति व्यावहारिको भवतीति सम्बध्यते। **तेन** इति। यत उपमा बलीयसी। **द्वयम्** इति शब्दार्थश्च गुणाश्चेति। **प्रत्ययम्** इति कल्पपम्। **यथा गौर्वाहीकः** इति। सामानाधिकरण्यसाधर्म्यमात्रेण दृष्टान्तोऽयम्। यथा परिहृतस्वार्थः स्वार्थगतगुणमात्रप्रत्यायको गोशब्दः सदृशगुणवति वाहीके वर्त्तत इति भवति तत्र सामानाधिकरण्यं, गौर्वाहीक इति गोगुणसदृशगुणो वाहीक इत्यर्थः। एवं गुणविहीनविषजातीयवाची विषकल्पशब्दः सदृशजातौ मनसि वर्त्तिष्यत इति भविष्यत्यत्र सामानाधिकरण्यमिति। **विषकल्पं मनः** इति विषजातीयसदृशजाति मन इत्यर्थः **तेन** इति गुणहीनेन। **विषेण** विषजातीयेनेत्यर्थः। **सहस्रायुधीयति** इति। सहस्रायुधमिवात्मानमाचरतीत्यर्थः। [2]**समास** इति। समासेन सहैव यो नियोगो विधिस्तेन उष्ट्र[3] एव मुखमस्येति रूपकसमासे भूयसी प्रसिद्धिरस्येति उपमानत्वेन निर्दिष्टम्।

[4]नन्वायःशूलिक इत्यादिषु भविष्यत्यस्याः स्थानमित्याशङ्क्याह–**क्रूरस्य** इति। **क्रूराचारोपमेय** इति। तथाह्यत्रायःशूलमुपमानम् अर्थान्वेषणोपायः कश्चिदुपमेयः तीक्ष्णत्वादिः साधारणो धर्म उपमेयभावश्चेति चतुष्टयमवगम्यते। तन्मध्याच्च शब्दस्पृष्टमुपमानमयःशूलेनेति, शिष्टस्य तु त्रितयस्यार्थसामर्थ्यादवगतिः इति। **जीवनक्रियाकरणम्**[6] इति। दण्डाजिनेनार्थानन्विच्छति दम्भेन जीवतीत्यर्थः। पार्श्वेना[7]र्थानन्विच्छति अनृजूपायेन जीवतीत्यर्थः। **करणक्रिया** इति। करणक्रियां प्रति विशेषणत्वं कर्मत्वं चेत्यर्थः। शीतं यथा[8] करोतीत्यर्थः। एवमुष्णक इत्यत्राऽपि। **अवच्छा[9]दित** इति अवच्छादितं निगीर्ण्णम-

१. सामानाधिकरण्य ...... सहस्रायुधमिवात्मानमाचरतीत्यर्थः। अयं पाठो ग पुस्तके नास्ति॥ २. समास इति...... विधिस्तेन अयं पाठः ग १ पुस्तके नास्ति॥ ३. अस्मात्प्राक् उष्ट्रमुखवद् इति अधिकः पाठः ग. १॥ ४. नन्वायःशूलिक...... **क्रूरस्य** इति अयं पाठः ग १ पुस्तके नास्ति॥ ५. उपमानोपमेय– क. ग.॥ ६. **–करणत्वम्** इति क. ग. १॥ ७. पार्श्वेनान्विच्छति क. ख.॥ ८. यथा भवति तथा क ग १॥ ९. अवच्छादित इति...... द्रष्टव्याः। अयं पाठः ग. पुस्तके नास्ति॥

भेदेनाध्यवसितमिति यावत् । **कथंचिद्** इति । केनचिन्मृगनयने इव नयने अस्या इत्येवंलक्षणेन । **अत्राऽपि** इति आयःशूलिकप्रभृतिष्वपि । **तथैव** इति । अतिशयोक्तित्वमन्यमते उपमाभेदत्वं च । **आनुगुण्यस्य** इति । एकान्तशीलत्वलोष्ठविघटनत्वादेः । **उपसंक्रामति** इति । कूलं कर्तृ । **चूर्णिकारस्य** इति महाभाष्यकारस्य । **न तिङन्तेन** इति आख्यातं नोपमानं भवतीत्यर्थः । **आगच्छामि** इति **आगच्छन्तम्** इति च वर्त्तमानभाविभ्यां लट्शतृभ्याम् , आगममिति आगत इति च वेति विकल्पपक्षे भूतप्रत्ययावेव । एवमुत्तरत्र । **घटपटादिषु** इति । आदिग्रहणात् कमलमिव मुखमित्यन्वयिरूपवाक्यार्थतामनापन्नाः पदार्थमात्रस्वभावा मुखकमलादयोऽपि द्रष्टव्याः । **परस्परपरिहारस्थितिलक्षणस्य वा** इति । यद्यपि परस्परपरिहारस्थितिलक्षणो विरोधो मुखकमलादिषु परस्पररूपाननुप्रवेशाद्विद्यते तथाऽप्युपमानोपमेयसाम्यस्वभावेयमुपमा । सा चोपमानोपमेययोः परस्परपरिहारस्थितिमवधीर्यान्वयिरूपपुरस्कारेण प्रवर्त्तते इत्यभिप्रायः ।

**मुखकमलादिषु** इति । [1]कमलमिव मुखमित्यादावन्वयिरूपप्रयोगे इत्यर्थः । आदिग्रहणाच्च पट इव घटोऽत्यन्तशुषिरतया जलच्यवनशील इत्यन्वयिरूपवाक्यार्थस्वभावा घटपटादयोऽपि लभ्यन्ते । **शब्दप्रवृत्तिनिमित्तम्** इति । [2]पदार्थस्वभावं नन्वन्वयिवाक्यार्थरूपम् । तथा हि मा भूदन्वयिनि रूपे परस्परपरिहारस्थित्यात्मा विरोधः, ययोस्तु तदन्वयिरूपमुपमानोपमेययोस्तयोः सम्भवति परस्परपरिहारेणावस्थितिरित्याशयेनेदमुक्तम् । न वयं [3]तात्पर्यार्थापेक्षया उपमानोपमेययोर्विरोधं ब्रूमः, तात्पर्यार्थस्य साम्यस्वभावत्वात्, साम्ये च विरोधासम्भवात् । यस्य तु उपमानोपमेयशब्दप्रवृत्तिनिमित्तस्य साम्यरूपायामुपमायां तात्पर्यं तस्य परस्परपरिहारस्थित्यात्मा विरोधोऽभिधीयत इत्यर्थः । एवं च निमित्तभूतपदार्थापेक्षयाऽत्र परस्परपरिहारस्थितिलक्षणो विरोधोऽङ्गीकृतः । साम्यस्य तु वाक्यार्थीभूतस्य नैमित्तिकत्वात्तदपेक्षया निर्विरोधत्वमेव[4] ।

[5]**नोपमा** इति । अपि त्वनन्वय एव । **कर्म** इति शूरत्वपूरयितृत्वादि । **नाप्यत्यन्त**—इति । साम्याविवक्षायाम् इति गम्यम् । पुत्रेणेति वाक्ये आर्थं साम्यम् । **वाक्यार्थे** इति । [6]यथा पुत्रः स्थूलस्तथा पितापीति वाक्यार्थस्य पुत्रे स्थूलत्वानुगममन्तरेणाऽसङ्गतेः ।

१. "कमलमिव मुखमित्यादा...... शब्दप्रवृत्तिनिमित्तमिति । ......तथाहि' अस्य स्थाने "कमलमिव मुखमित्यादौ प्रयोगे इत्यर्थः । शब्दप्रवृत्तिनिमित्तमङ्गीकृत्येति" ग. १ पुस्तके एतावानेव पाठः ॥ २. जातिमात्रम् इति अधिकम् ख. पुस्तके एव ॥ ३. वाक्यार्थतात्पर्यार्थापेक्षया ख. पुस्तके एव ॥ ४. अत्र वाक्यार्थासङ्गतेरिति इत्यधिकः पाठः । ग. १ ॥ ५. नोपमेति इत्यारभ्य वाक्यार्थेति इत्यन्तः पाठो ग. १ पुस्तके नास्ति ॥ ६. तथा ग २ ॥

**दूर्वाकाण्डमिव** इति समासे श्रौतम् । **तन्वी श्यामा** इति वाक्ये श्रौतम् । **अत्रा[1]ऽपि** इति । न केवलं पुत्रेण सदृशः स्थूल इत्यादौ सदृशादिपदप्रयोगे पुत्रादीनां स्थूलत्वादिभिरन्वयो दुर्घटो यावताऽत्रापि इवशब्दप्रयोगेऽपीत्यर्थः । **वस्तुमात्र**–इति श्यामगुणयुक्ततन्वीमात्रवर्णने । **उपात्तम्** इति कर्तृ । **अन्यार्थ**–इति तन्वी निमित्तम् । **संस्पर्शाद्** इति आर्थ्या वृत्त्या सम्बन्धो न तु मुख्ययेति संस्पर्शार्थः । **तस्य** इति दूर्वाकाण्डस्य । **सामानाधिकरण्यम्** इति यथा दूर्वाकाण्डं श्याममित्येवंरूपम् । **अन्यरूपे** इति तन्वीलिङ्गिनि ।

**तादृशीम्** इति । श्रवणसमनन्तरमेव व्यवधानशून्या यत्रार्थप्रतिपत्तिस्तदेव काव्यं चमत्कारकारि । अत्र च यथा दूर्वाकाण्डं श्याममिति विभक्तिविपरिणामात्[2] द्वितीयवाक्यकल्पनेन विघ्निताऽर्थप्रतीतिः काव्यस्य यादृशी न चमत्कारावहा तादृशीमित्यर्थः । **पूर्वस्मिन्** इति इवोदाहरणवाक्ये । **उत्तरस्मिन्** इति यथोदाहरणवाक्ये । **एवमेव** इति अप्रयोजकत्वेऽपि पुरोडाशादेः करणम् । **तन्त्रे** इति । प्रयोजकाप्रयोजकोभयसाधारणलक्षणस्य तन्त्रस्य समनन्तरमेव दर्शयिष्यमाणत्वात् । सर्वप्रयोजकसाधारणलक्षणे इत्यर्थः । **त्रिकम्** इति योगत्रितयम् । **शेषितया** इति । अङ्गितया प्रधानतयेति यावत् । **प्रतिस्वम्** इति प्रत्यात्मं प्रत्येकमिति यावत् । **बहुच्छात्र**–इति । बहवः छात्राः प्रयोजका हेतव इति बहुषु दीपेषु प्रयोक्तव्येषु साधारण्येनैक एव प्रयुज्यते स्मेत्यर्थः । **अप्रयोजकत्वेऽपि** इति अपरस्याऽप्रयोजकत्वेऽपीत्यर्थः । पूर्वत्र सर्वेषां प्रयोजकत्वमिह त्वेकस्येति विशेषः ।

**वा जिन** इति अप्रयोजकस्य वा जिनस्य । **आचमन**- इति आचमनमाचामोऽवश्रावणमिति यावत् । विध्यन्तो यागः । [3]अप्रयोजकत्वेऽपि पुरोडाशस्य तदर्थता विध्यन्तस्य प्रसङ्गात् सम्पन्ना । अथ च पुरोडाशार्थस्य विध्यन्तस्य स्वको[4]ऽपि विधिरस्ति । ननु वा जनस्येत्यप्रयोजकादस्य भेदः । **जन[5]स्य** इति । अप्रयोजकत्वं विधिश्च स्वको जनस्याऽपि विद्यत इत्याशयः । एवमुत्तरत्राऽपि । **एवमन्यदपि** इति । उदाहृतवाक्यगतश्रौतव्यतिरेकद्वारकार्थसमासगतश्रौततद्धितगतार्थसाम्यस्थित्या समासगतार्थतद्धितगतश्रौतसाम्यमपि । **साम्य**–इति । साम्यं साधारणो धर्मः । **पुनः साम्य**–इति । साम्यं सादृश्यमुपमेति यावत् । **कमल**–इति । अत्र सामानाधिकरण्येन समासे रूपकत्वापत्तेः

---

१. अत्रापीति इत्यारभ्य आचमनमाचामोऽवश्रावणमिति यावत् । इत्यन्तस्य स्थाने अत्रापीति इवशब्दप्रयोगेऽपीत्यर्थः । शेषितयेति । प्रधानतयेत्यर्थः । अप्रयोजकत्वेऽपीति अपरस्याप्रयोजकत्वेऽपीत्यर्थः । पूर्वत्र सर्वेषां प्रयोजकत्वमिह त्वेकस्येति विशेषः । इति पाठः ग १ पुस्तके ॥ २ विरुद्ध ॥ ३. अत्र प्रयोजकत्वे ग. १ ॥ ४. श्रुतिविहितत्वम् ॥ ५. इतः प्रागधिकपाठस्य चिह्नं ग. १ पुस्तके वर्तते । पाठस्तु न मिलति ॥

सप्तम्युपमानेत्यादिनोपमानपूर्वस्य समासः। उत्तरपदलोपश्च कचिन्न भवतीति न कृतः। **शशाङ्क**–इति। अत्राऽपि पूर्ववत् समासः। केवलं तदानीमुपमानं च तत् पूर्वं चेति सूत्रे विग्रहः। ननूपमेयमात्रोक्तौ कथमिदमुदाह्रियते, यावताऽत्रापि वाक्यकाले उपमानादीनां प्रतीतिरस्तीत्याशङ्क्याह–**अश्वमुखी** इति। **स्फुट एव** इति। यौगिके हि शब्देऽवयवार्थपुरःसरा समुदायार्थप्रतीतिः। योगरूढौ त्ववयवार्थतिरस्कारेणाऽपि सत्येकत्रोपमानोपमेययोरुभयोः श्रौती प्रतीतिरपरत्र तूपमेयस्यैवेति स्फुट एव भेदः। **विद्युच्छब्देन** इति। उपमानवाचिना। **उपमा** इति साम्यम्। **तदन्वित**–इति। कृदव्ययो हि भावे अभिधानादिति साम्यान्वितो भावो धात्वर्थो णमुलर्थ इत्यर्थः। **भ्रान्तिः** इति मोहः। **अन्योऽपि** इति। वाक्यसमाससुब्धातुगतचतुस्त्र्येकप्रकारलक्षणोऽपि। **अङ्गतया** इति। उपमानं ह्युपमेयार्थमुपादीयत इत्युपमानगतत्वेन रसस्योपमेयं प्रत्यङ्गतायां न विरोधः। **सामान्य**–इति। सत्त्वज्ञेयत्वप्रमेयत्वादिवत्। **ज्यायान्** इति प्रशस्यः। **निर्दिष्टः** इति गुणलेशेनेत्यनेन। **शृङ्खला** इति। रशना[1]धर्मवाचकस्य विवृतौ वाक्यसमासतद्धितेष्वेव सम्भवी। तत्राऽपि तद्धितः साक्षादुपादास्यत इति वाक्ये समासे चैषा निबध्यत इत्यर्थः **समासे** इति। साम्योपमानेत्यत आरभ्य सेति यावत् समासे इत्येतत् सम्बध्यते।

**तथा** इति। तथेत्यनेन तद्वाचिविरहेणेत्येतत् पदं तद्धिते कचिदेकस्याऽप्यलोपात् कचिद् धर्मस्यैवैकस्य लोपात्तद्वाच्या सेत्यन्तं यावत् सम्बध्यते। केवलं कचित् कचिदुपमेयस्याऽपि क्विपि धर्मस्याऽपि सामर्थ्याल्लोपः परिगृह्यत इति। [2]अथवा तथा–शब्द इत्थं व्याख्यायते। संक्षेपाभिहिता यथा वाक्ये समासे च निबध्यते तथा सुब्धातौ कृति तद्धिते च निबध्यत इत्युत्तरेण सम्बन्धः। केवलं संक्षेपाभिहिता प्रकारतद्धितोपदर्शनप्रसङ्गेन पूर्णा प्रकारतद्धितोऽप्युपदर्शयिष्यत इति स यथायोगमेव सम्भन्त्स्यते। **पूर्णा लुप्ता च**–इति। संक्षेपाभिहिताऽप्येषेत्यपि शब्दादसंक्षेपाऽभिहिताऽपि हि समुच्चीयत इति। **वाक्यसमास** इति। यथेवसदृशादिप्रदयोगो वाक्यसमासयोरेव सम्भवतीत्यर्थात्तयोरुपलम्भः। संक्षेपाभिहिता प्रकारतद्धितोपदर्शनप्रसङ्गेन तदर्थवति, तद्धितस्तु साक्षादुपदर्शितः। **भूयः** इति। **पुनः अनवस्थितम्** इति। क्षणं–भूयः–शब्दयोस्तात्पर्यार्थोऽयम्। **सामानाधिकरण्येन** इति उपमेयेनोपमानेन वा सह। **अत्र** इति एतयोः। **लुप्तविभक्तिकत्वेन** इति अव्ययत्वेनेत्यर्थः। **उपमितिक्रिया** इति। उपमितिक्रियालक्षणो विषयो ययोः। **कर्मकरण**–इति। उपमेयोपमानभावात्मकम्॥

---

१. रशनासाम्यवाचकेति केवलस्य धर्मवाचकस्य विवृतौ इति पाठः क. ग २ पुस्तकयोः॥ २. अथवा तथा–शब्द इत्थं व्याख्यायते। ......स यथायोगमेव सम्भन्त्स्यते। अयम् पाठः ग. २. पुस्तके नास्ति॥ ३. इवार्थस्तुल्यार्थश्च।

**प्रबोधाद्धवलम्** इति। अत्र वाक्यसमासाश्रयप्रकारद्वये पूर्णत्वं चतुष्टयसद्भावात्। तथा हि— कुमुदकाननं विकसितं किञ्जल्कालीनषट्पदत्वविशिष्टमुपमेयम्। अखण्ड इन्दुः पूर्णेन्दुबिम्बमिति वोपमानम्। धवलत्वं साधारणो धर्मः। तुल्यशब्दः प्रतिमशब्दो वा उपमानोपमेयभावावगतिहेतुरिति। **तद्गत** इति। उपमानगतं यत् सादृश्यं प्रतीयते तत्परामर्शेनेत्यर्थः। **तत्सम्बन्धित्व**–इति। तच्छब्देन तुल्यपदपरामर्शः। **अर्थाद्** इति। साधारणधर्मपर्यालोचनासामर्थ्यादुपमेयोपमानगतं यत्सादृश्यसम्बन्धित्वं तेन हेतुनोपमेयोपमानयोर्विषययोः प्रतिमशब्दस्यावगतिरिति। **लुप्तापि** इति। धवलत्वधर्मापेक्षयैव पूर्णेयमित्यर्थः। **यद्यपि** इति। नेत्रादिसदृशोत्पलादिकरणके भाने सामान्यरूपे उक्ते सामान्ये सर्वविशेषाणामन्तर्भावादित्युक्तनयेन भानविशेषणभूताः करणगतदीर्घत्वादयो धर्मविशेषा उक्ता एवेति पूर्णोपमेयं वतिना चेति। अनेन तदभिधेयेऽत्यन्तं सूत्रमुट्टङ्कितं "तथैवेति धर्मवाचकविच्युतौ श्रौतत्वार्थत्वभेदेन"। **साम्योपमान**–इति। साम्यं साधारणो धर्मः। सूत्रे तद्वाचिनामिति तच्छब्दस्य प्रक्रान्तोपमापरामर्शित्वादुपमावाचिनामित्युक्तं–**यदा** इति। तदैवैतान्युदाहरणानीत्यर्थः। **अनेकमन्य**–इति। सप्तम्युपमानेति विशेषोक्तस्य विधेरुपलक्षणमेतत्। **उदाहार्यम्** इति। सूत्रसूचितेऽपि प्रभेदे सूत्रकृता कथञ्चिन्नोदाहरणं प्रदर्शितमित्यस्माभिरूनं पूरणीयमित्युपदेशोऽयमवसरे प्रदत्त इति लक्ष्यव्युत्क्रमो न चोद्यः। **अन्ये तु** इति। वाक्यसमासगतप्रकारद्वयद्वयलक्षणाः।

**उपमाने** इति। एकत्रेत्यर्थः। **प्रतीतम्** इति सिद्धम्। **लावण्यादि** इति लावण्यगुणादि। **उपमेये** इति अन्यत्रार्थे। **दिने दिने** इति। ज्योत्स्नागर्भान् कलाविशेषानिव लावण्यमयान् विशेषान् पुपोषेति सम्बन्धः। **प्रातीतिकम्** इति अवास्तवम्। **उक्तम्** इति आक्षिप्तम्। **उपसर्जनोपमानः समासः** इति। नवविकसितकमले इव करौ यस्या इत्येवंरूपो बहुव्रीहिरत्रेत्यर्थः। यद्यपि शाब्देन न्यायेन द्वयमप्यप्रधानमन्यपदार्थप्रधानत्वाद् बहुव्रीहेस्तथापि ये एव पदे अन्यस्य पदस्यार्थे समस्येते ते एवालङ्कारकल्पनाभूमिरिति तत्रैव प्रधानाप्रधानत्वचिन्तायां वस्तुवृत्त्या उपमानमप्रधानमुपकारकत्वादुपमेयं तु प्रधानमुपकार्यत्वादित्यलङ्काराश्रयाश्रयणेनोपमानस्यैवोपसर्जनभावादित्येवमुक्तम्। यदा तु कमलशब्दं स्वाभिधेयच्छायातिशये गुणमात्रे विवक्षित्वा नवविकसितकमले करौ यस्या इति बहुव्रीहिर्विधीयते तदा रूपकत्वं प्रसंजति। शाब्देनैव च नयेन कमलत्वरूपेणोदितः करार्थोऽप्रधानभूत एव प्रतीयते इत्यलङ्कारभूमिकाश्रयणेनोपमेयस्यैव तत्रोपसर्जनतेत्यस्याभिप्रायः।

परमार्थतस्तु एवंविधे विषये यत्रैकतरपरिग्रहे तदितरपरिहारे वा साधकबाधक-

प्रमाणाभावस्तत्र सन्देहसङ्करः, इतरत्र तूपमा रूपकं वा निर्णेष्यते। **नवविकसित**–इत्यादौ हि सकलशीतलभावमयी हि त्वं, तत्कथं दहसि इति विरोधच्छायया सप्रेमोपालम्भोक्तिः कमलादिष्वेवानुकूल्यं भजत इति रूपकस्य साधकतमतां प्रतिपद्यते। करादिषु तु न तथा प्रतिकूलेति नोपमां प्रति तस्या बाधकतेति[1] [2] साधकप्रमाणवशेन रूपकमेव सिध्यति कुत उपमा। एवं च रूपकेऽपि वचनमधुनयनमधुकरमित्यादावुदाहरिष्यमाणे विषये साधकबाधकप्रमाणाभावात् सन्देहसङ्करे एव बुद्धिर्धावतीति चिन्त्यमेवैतदित्यर्थः। यत्तु[3] प्रकरणवशादमुक एवालङ्कारोऽत्रेति कश्चिद्वक्ष्यते तन्निगमनिकामात्रमिति न किञ्चित्। **उपमानाद्** इति उपमित्यभिधानार्थम्। **साधारणधर्मविषयम्** इति। सामान्येऽर्थे वाच्ये प्रत्ययमुत्पाद्येत्यर्थः। **श्यामा लतेव** इति प्रियङ्गुलतेव। **निर्मला[4] हासे इति तु** इति अत्र हि तन्वी विशेष्या।

**अन्ये तु** इति। समासोपमाप्रत्ययोपमे सरोजिनी[5] चारुतनुः इति। अत्र चारुतनुत्वसामान्यवचनेन समासः। **उत्कृष्टगुणेन[6]** इति। उत्कृष्टगुणमुपमानम्, न्यूनगुणं तूपमेयमिति लोकप्रसिद्धेः। **सहृदयचमत्कारकारिणाम्** इति। अलङ्कारप्रकरणादित्यर्थः।

**ननु[7] सर्व[8] सर्विकया** इति। तेन गौरिव गौरित्यत्र नोपमा। **जातिदेश** इति गुणा धर्मा जात्यादयस्तेषां लेशेन केनचिद्धर्मेण जात्यादिनेत्यर्थः। यथा अश्वकर्ण इव अजकर्णो वृक्षजातिरित्यादावपि। यदि[9] वेति प्रथमे हि व्याख्याने सर्वसाम्यस्य व्यवच्छेदः। इह तु गुणबाहुल्यस्येति विशेषः। गुणलेशार्थस्तु स एव। **उत्कृष्टन्यूनगुणता चेति** चो हेत्वर्थे। तस्मादर्थस्त्वार्थः। यस्मा[10]दुपमानोपमेयहेतुरुत्कृष्टन्यूनगुणता पदार्थानां लोकप्रसिद्धेरवसीयते तस्मादित्यर्थः। **अभावाद्** इति। न ह्युत्कृष्टगुणः कामिनीगण्डो न्यूनगुणश्चन्द्र इति लोके प्रसिद्धिः। **एवमर्थम्** इति विपर्यासोपमा प्रकारसिद्ध्यै। ननु ततः कुमुदनाथेनेत्येतत्तत्र नोदाहरिष्यते, तत्कथमेषा कल्पितेत्याशङ्क्याह – **न ह्युद्भेत्यादेः** इति। अत्र यद्यप्यादिशब्दः कल्पनात्वमात्रसामान्यमाश्रित्योल्लिङ्गितश्लोकसमर्पणेन चरितार्थस्तथाऽपि विशेषदर्शनेन दुर्विदग्धाः सुखेनैव रज्यन्त इत्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन क्षममधरेत्यादिसमानन्यायोभयविपर्यासविशिष्टकल्पनश्लोकसमर्पको व्याख्येयः।

---

१. बाधकता ग. १ ॥ २. इति साधक...कुत उपमा। अयं पाठो नास्ति ग. १ पुस्तके ॥ ३. यत्तु प्रकरण...प्रत्ययमुत्पाद्येत्यर्थः। अयं पाठो नास्ति ग. १ पुस्तके ॥ ४. निर्मला हासे... विशेष्या। अयं पाठः ग. १ पुस्तके नास्ति ॥ ५ सरोजिनी...नोपमा। नास्ति ग १. पुस्तकेऽयं पाठः ॥ ६. वा उत्कृष्टगुणेन इति। ग. २ ॥ ७. तु ग. २. ॥ ८ –विति ग १. २. ॥ ९. यदि वेति...अपरत्र तु प्रथमायाः इति पाठो नास्ति ग १ पुस्तके ॥ १०. तस्मादुपमानोपमेय –ग. २. तस्मादुपमानोपमेयत्व–क ग. २ ॥

**यत्र तु** इति । पूर्वत्र न्यूनगुणमिति यल्लोके प्रसिद्धं तदुत्कृष्टगुणमिति विवक्षित्वोपमानं परिकल्पितम्, उत्कृष्टगुणं च न्यूनगुणमित्युपमेयम् । यत्र तु द्वयोरप्यास्तामेकस्योत्कृष्टन्यूनगुणरूपतया न प्रसिद्धिस्तत्र का वार्त्तेत्याशङ्कायामुक्तं स्तननिवेशहिमांशुबिम्बाद्योरेकस्य शुकचञ्चूपुटस्तिम्याबन्धयोर्द्वयोरपि हि न प्रसिद्धिविपर्यासेनोत्कृष्टन्यूनगुणत्वं बोद्धव्यमपि त्वप्राकरणिकप्राकरणिकरूपतयेत्यर्थः । **उत्कृष्टन्यूनगुणत्वम्** इति कविविवक्षितम् । **तत एव** इति । यतो लोकप्रसिद्धचवधीरणेन कविविवक्षावशत एवेयम् । **गुणबाहुल्येन**- इति अर्थादुत्कृष्टगुणबाहुल्यकल्पनेन । **कस्यचिद्** इति उपमेयरूपतयाऽप्रसिद्धस्य । **उपमानरूपतया** इति कविविवक्षितया । **उपमेयस्य** इति लोकप्रसिद्धचा । **प्रत्ययाभावाद्** इति एकत्र तृतीयाया अपरत्र तु प्रथमायाः । **चन्द्रेण** इति करणभूतेन । **उपमीयते** इति उपमितिक्रियासम्बन्धित्वेन परिच्छिद्यते कविना कर्त्रा । उप[1]मीयते इत्यस्य व्याख्यानान्तरमाह—

**चन्द्रस[2]मीपे वा** इति । चन्द्रेण करणभूतेन मुखं समीपे क्षिप्यतेऽर्थाच्चन्द्रस्यैव समीपे इति । **तत** इति । ततोऽत्रेवादिरिति सम्बन्धः । **भरणक्रिया** इति । पुरस्कृतकर्तृकर्मसद्भावा हि भरणक्रिया भर्तृभर्त्तव्यतालक्षणं सम्बन्धं जनयित्वा तिरोभवति । ततस्तत्सम्बन्धसद्भावादित्यर्थः । **उभयोपादानम्** इति सूत्रे । **साधारणधर्मप्रत्ययम्** इति शाब्दम् । **उपमा[3]नेन** इति लोके[4] प्रसिद्धेन । लोकप्रसिद्धस्य उपलक्षणत्वाच्च केनचित् कस्यचिदपि समत्वापादानमित्यर्थः । **उपमानोपमेयनियमस्तु** इति । समत्वकल्पने ह्युत्कृष्टन्यूनत्वयोरभावात् कथमुपमानोपमेयव्यवस्थेत्याशङ्कायामुक्तम् । न केवलं गुणबाहुल्यं कल्प्यते तदुत्कर्षापकर्षावपि कल्प्येते इत्यर्थः । **उपमानसमता** इति । लोकप्रसिद्धेन हिमांशुबिम्बादिनोपमानेनेत्यर्थः । **नारङ्गकम्** इति नारङ्गप्रतिकृतिर्वस्त्रम् । **सूत्र** इ[5]ति स्तिम्याबन्धात् । वलिरहितः इति अविषमः । **लक्षणया** इति मर्मरशब्दो बाधितशुष्कपत्रध्वनिलक्षणस्वार्थः स्वार्थगतमुच्चनीचत्वादिवैषम्यरहितत्वं कर्कशत्वं च लक्षयन् तत्सदृशसमत्वकर्कशत्वयुक्तं रोमभेदं लक्षयतीत्यर्थः ।

**उपमानाद्** इति उपमितेः । **व्यतिरेकम्** इति भेदं पृथग्भावम[6]सम्बन्धमिति यावत् । द्योत्यमानेन साम्यलक्षणेनार्थेन सम्बन्धमुभयत्राऽपि श्रुत्यैव प्रतिपादयन्तीत्यर्थः । ते[7]न तत्सद्भावे श्रौती । कमलमिव मुखमित्यादौ हि कमलादिसदृशं मुखादि प्रतीयत इति

१. उपमीयते...माह । अय पाठो नास्ति ग. १. पुस्तके ॥ २. –समीपे इति ग. १ ॥ ३. उपमानेनेत्यर्थः । ग. १ ॥ ४ लोक–क. ग. २ । लोके इत्यारभ्य उपमितेः इत्यन्तः पाठो नास्ति ग. १ पुस्तके ॥ ५. सूत्रं तन्तुः । तत इति । ग. २. ॥ ६. समं बंध–ग. २. ॥ ७. तेन तत्...न विरोधः । अयं पाठः ग. १. पुस्तके न दृश्यते । तेन तद्भावे श्रौती...ग. २ ॥

लोकप्रतीत्याश्रयणेनैषामुपमेय एव विश्रान्तिमभिमन्यमानान् प्रत्युभयत्राऽपि श्रौतमेव सम्बन्धं साधयति। **अन्ये** तु शास्त्रीयमुद्रयोपमानविशेषणा एवैत इत्युपमेयेऽपि तमेतेषां प्रतिपादयन्तीति न विरोधः। **व्यतिरेचयन्ति** इति। असम्बद्धं विदधति। देवदत्तेन तुल्य इत्यत्र हि उपमेय एव सदृशत्वलक्षणस्य स्वार्थस्य श्रुत्या वि[1]श्रान्तिस्तेन तत्सद्भावे आर्थी। **उत्तरपदभूता एव** इति वृत्तिस्था एवेत्यर्थः। यथा देवदत्तनिभो यज्ञदत्तः स्थूल इत्यादि। इयं तु समासे आर्थी वर्त्तते इति तेन न गुणशब्दस्याऽप्यत्र लोप इति शेषः। **सअल** इति। इयं वाक्ये, पाठविशेषे तु समासे च द्रष्टव्या। **अन्यद्** इति। वाक्ये तद्धितगतैकद्विसङ्ख्यं वाक्यसमासतद्धितसुब्धातुकृद्गतत्रित्र्येकचतुर्द्विगणनं च। **उभयत्र** इति पूर्णालुप्तालक्षणे।

**उक्तिमात्रेण** इति। वस्तुगतसाधर्म्यरहितेनेत्यर्थः। **तत्कारि** इति अनुकृतिकारि। **तदनुकृति**-इति। ततस्तन्मुखकर्तृकानुकृतिसम्पादकं भवत्वित्यर्थः। तत इत्यस्य तदित्यस्य च सामर्थ्याल्लाभः। **इति** इति। समग्रवाक्यार्थोल्लेखे[2]। **उत्प्रेक्षया** इति। अध्यासापेक्षयाऽत्र तृतीया। **असतोऽपि** इति। अनेनाऽतिशयो दर्शितः। वक्ष्यति हि– **उत्प्रेक्षा[3]तिशयान्वित**-इति। **उद्गते** इति। पदद्वयस्य समासार्थं संक्षिप्त[4]रुचित्वादेकमेव वाक्यं तन्त्रेण प्रयुक्तम्। **इन्दुमिति** इति। इतिशब्द एवमर्थोऽनुवावि क्रियाविशेषणम्। **संशयविशेषः** इति निश्चयगर्भः। पूर्वो ह्यनिश्चयगर्भः। **श्लेषप्रतिभोत्पत्ति**-इति। तेन श्लेषायोपमा न तु श्लेषेणेत्यर्थः। तदानीं ह्युपमाप्रतिभोत्पत्तिहेतुरयं श्लेषः स्यान्नोपमा। **उद्भटो** ह्युपमाप्रतिभोत्पत्तिहेतुं श्लेषमिमममभिमन्यते। तत्प्रातिकूल्यमनुसरता **काव्यप्रकाश**कृताऽपीयमित्थमभिहितेत्यस्माभिस्तथैव व्याख्याता। परमार्थतस्तु सङ्कर एवायमीदृश इति। **द्वाभ्याम्** इति शब्दाभ्याम्। **श्लेषप्रतिभोत्पत्तिहेतुः** इति। सभङ्गः शब्दश्लेषः सन्धानशब्दवाच्य इत्येवमेषा व्यपदिष्टा, तदत्रापि पूर्ववद् विचार्यम्। **अभेदविवक्षया** इति। नायिकानयनेन सह। **चक्षुषी** इति। अत्रैवशब्दोऽर्थादध्याहार्यः। **तत्त्वाख्यान**-इति। मुखमेवेदं चक्षुषी इमे इत्येवंरूपस्य असम्भवदोष इति **मेधावि**प्रभृतिभिरुक्तः। **उत्प्रेक्षा** इति। असम्भवन्नेवार्थ उत्प्रेक्षायामतिशयवत्तया निबध्यत इत्याशयः।

**आलक्ष्य** इति। आ ईषत्। **संसर्ग** इति। संसर्गो वाक्यार्थः। **सम्बन्धिभेद**-इति पदार्थविशेषोपक्रमेऽपि। **वस्तु** इति वाक्यार्थरूपम्। **सधर्माणः** इति। समान एको न तु दृष्टान्तत्वप्रसक्तेः सदृशो धर्मो यस्येत्यर्थः। केवलं कथितपदत्वस्य दुष्टतया-

---

१. 'विश्रान्तिस्तेन... उभयत्रेति पूर्णा लुप्ता लक्षणे' इत्यस्य स्थाने विश्रान्तः। उत्तरपदस्था एवेति वृत्तिस्था एवेत्यर्थः। उभयत्रेति पूर्णालुप्तालक्षणे इति पाठः ग. १, पुस्तके ॥ २. ख क. ॥ ३. -क्ष्या – ग. २ ॥ ४. –भवि– ग. २. ॥ ५ अयं पाठो नास्ति. क. पुस्तके ॥ ६. -त्पत्तीति सभङ्गः... इति पाठः ग २ पुस्तके ॥

ऽभिधानात् शब्दभेदेन स तत्रोपन्यसनीयः । **प्रतिबिम्ब** इति । धर्मः स एव निबन्धनीय इति, तं विमुच्य ॥

**काव्यलक्षणेषु** इति । लक्षणापरपर्यायस्य व्यापारस्य प्राधान्ये काव्यगीर्भवेदित्युक्तत्वात्तत्सद्भाव एव हि काव्यमित्येष शब्दः प्रवर्त्तते । **नायम्** इति अलङ्कार्यस्य काव्यत्वस्याभावात् । **लक्षणं तु** इति । इदमनेन शब्देनानयेतिकर्त्तव्यतयाऽमुनाशयेनैवम्भूतबुद्धिजननाय ब्रुवे इति कविः प्रवर्त्तते इति कविव्यापारो लक्षणशब्दवाच्य इति ह्युक्तचरं पल्लवे । **मुनिना हि** इति । यतो लक्षणानि मुनिना प्रणीतान्यतो बन्धशब्दस्तत्पर्यायतया व्याख्यातः । **सम्बध्यते** इति । विशेषणविशेष्यतयेत्यर्थः । **तेन** इति यत उपमितिरन्ययोर्न सम्भवति । **एकस्य** इति । अत्र षठ्चन्तान्युपमेयस्य तृतीयान्तान्युपमानस्य प्रतिपादकानि । **उपमान** इति उपमानत्वेनाऽभिमता इत्यर्थः । **उपमानता** इति । सम्पूर्णचन्द्रादीनामित्यर्थः । **सलोप इव** इति । क्वचिदिष्टः क्वचिन्नेष्टः इत्यर्थः । तेन चन्द्रदलपदयोर्न लोपः । अनयोर्हि धर्मो धर्मिण्यवयवी चावयवे उपचर्येत इति चन्द्रगतसम्पूर्णत्वनीलोत्पलयोरुपमानतायामुपमानपूर्वता न्यायसिद्धा । एवं मत्तमातङ्गत्वं तद्गतगमने उपचरणीयमथवा विशेषणविशिष्टमुपमानमिति तद्विशेषणावयवः सम्पूर्णत्वादिरप्युपचारादुपमानमिति । **मीलनम्** इति । अभेदाध्यवसानम् । **विवक्षित**— इति । अर्थात् प्रस्तुते वक्तुमभिप्रेतस्य । **मनोहारित्वातिशयवत्ता** इति । यत् प्रस्तुतगतत्वेन विवक्षितधर्मसम्बन्धि मनोहारित्वं तस्य सातिशयस्याप्रस्तुते सिद्धत्वादित्यर्थः । **विच्छित्त्या** इति वैदग्ध्यभङ्ग्या । तद्विरहेणाभिधाने हि [2]तद्विदाह्लादकत्वं न सम्भवति । **संवादकः** इति । यथा संवदतीत्यत्र क्रियायाः प्राधान्येऽपि संवादकार्थस्तथाऽत्र कारकशक्तेः प्राधान्येऽपि तदन्तर्लीनवृत्तिः संवद्यर्थो विद्यत एव, संवदतीति संवादक इति । **प्रतिपन्न**— इति । [3]उपमायाः साधारणधर्मस्य च प्रतीतिमात्रादेव वेत्यर्थः । **क्रियापद** इति । क्रियापदादिवाचकोक्त्यभावेन प्रतिवस्तूपमादयः साधारणधर्मोक्त्यभावेन च वाक्यसमासादिगताः धर्मलोपिन्य उपमाः संगृहीताः । **उपमान**— इति उपमानत्वानुपपत्तेः । **एककर्तृकयोः** इति । **लिम्पतीव तमोऽङ्गानि** इति । कुङ्कुममिव लिम्पति तमोङ्गानीति चोभयत्र व्यापनस्य लेपनरूपतयाऽध्यवसितत्वे समानेऽप्येकत्र तमःकर्तृकयोरवस्तुवस्तुरूपयोर्लिम्पतिव्याप्नोत्योः साम्यमुत्प्रेक्षैव । अपरत्र [4]तु भिन्नकर्तृकयोस्तयोः साम्ये सुबन्तस्योपमानतायामुपमैवेत्यर्थः ।

**समासादि** इति । आदिग्रहणात् वाक्यार्थपरिग्रहः । **पदार्थोपमाव्यपदेशः** इति ।

---

१. नास्ति अयं पाठः ग. २ पुस्तके ॥ २. काव्य ख. पुस्तके एव ॥ ३. क्रियापदे वादितात्पर्यपर्यायः ॥ ४. नास्ति ग. २ पुस्तके ॥

अत्र हि पदार्थसाम्यसमन्वयावसायपूर्विका वाक्यार्थप्रतिपत्तिर्न तु पदार्थावबोधसमनन्तरं समासप्रतिपत्तिः । समस्तैरसमस्तैर्वा पदार्थैर्वाक्यार्थप्रतिपत्तिस्ततः साम्यसमन्वयावसाय इति । **धर्मधर्मी** इति । धर्मधर्मिभावसम्बन्धनिबन्धनाऽपि मुख्यस्यार्थस्यामुख्येनार्थेन प्रत्यासत्तिरभेदोपचारेण धर्मधर्मिभावलक्षणेत्युक्ता । तेन धर्मधर्मिभावस्वरूपाया इत्यर्थः । **गुणमात्रे** इति । धर्ममात्रेऽस्याभिप्राय इति रूपकत्वमेतन्मते कथमत्र निवार्येतेति ताटस्थ्येनोक्तिः ।

**यान्त्या मुहुः** इति । अत्र आवृत्तवृत्तेत्यत्र निभशब्देन सह समास उपमाप्रतिपादकः । निभादयो हि शब्दाः समासस्था एवोपमावाचका इत्येवमुक्तम् । **माञ्जिष्ठीकृतेति** । अत्र छत्रायमाण इति क्यङ्प्रत्ययः । **इत्याकर्णितेति** । अत्र कुञ्जरवदिति वतिः । **रामेण** इति । अत्र मृणालभञ्जमिति णमुल् । **सामर्थ्य**[1] इति । वाक्यार्थवस्तुनोः सादृश्यसम्बन्धमन्तरेण वाक्यैकवाक्यता नोपपद्यत इत्यन्यथानुपपत्तिलक्षणस्य सामर्थ्यस्य तत्स्वरूपेति तच्छब्देनोपमेयोपमापरामर्शः । **मदिरामद** इति सुरामदेनाताम्रं वक्त्रम् । अम्भोजं तु सुरामदवदाताम्रम् । अत्र च पक्षे मदशब्दो मदविकारे रक्तत्वे ज्ञेयः । **अलङ्कारान्तरत्वस्य** इति उपमेयोपमात्वस्य । **न चोपमान** इति । अनयोः सदृशमन्यन्नास्तीति कृत्वा । **तात्पर्यान्तरम्** इति सादृश्यतात्पर्यादन्यत् । **अभिधाप्रकार** – इति । पर्यायेणैकस्यैवोपमानत्वोपमेयत्वलक्षणम् । **वाक्यान्तरेषु** इति । उपमोदाहरणत्वेन प्रसिद्धेषु । **वैचित्र्यान्तराणि** इति । चक्षुरिव पद्मं पद्ममिव चक्षुरित्येवं रूपवैचित्र्यादन्यानि, पद्मं च चक्षुश्च द्वे अपि परस्परतुलामधिरोहतामित्यादिरूपाणि दृश्यन्ते इति । न च तेष्वलङ्कारान्तरत्वप्रसिद्धिरित्यर्थः । **तद्वल्गुना** इति । यदि वैचित्र्यविशेषमात्रेण अलङ्कारान्तरकल्पना क्रियेत तदोपमेयोपमावदत्राऽप्युपमातोऽलङ्कारान्तरत्वं[2] वक्तव्यं स्यात् । पूर्वत्र हि वाक्यानेकत्वेन[3] परस्परसाम्यप्रतीतिः, इह तु वाक्यैकत्वेनेत्यभिप्रायः ।

[4]यथा **कल्पितोपमा** इति । यथा कल्पितोपमोपमाप्रकारत्वेन तत्र भवद्भिरभ्युपगम्यते एवमनन्वयोऽपि तथाऽभ्युपगम्यतामित्यर्थः । **तल्लक्षण** – इति । तच्छब्देन कल्पितोपमापरामर्शः । **उभौ यदि** इति । अत्र मुक्तालतावत्त्वस्य धर्मस्यादिग्रहणात् कुमुददलेत्यत्र स्तनावरणस्य वस्तुनश्च विवक्षितसातिशयत्वसम्पत्तये गङ्गाप्रवाहद्वयपतनं धर्मान्तरं च्युतदीधितित्वमुपमानं च परिकल्पितम् । **सौन्दर्याधारेति**[5] । प्राप्तोत्कर्षस्य धर्मस्य चेत्यर्थः ।

---

१. सामर्थ्येति...रित्यर्थः । अयम् पाठः ग. १. पुस्तके नास्ति ॥ २. तदात्राप्युपमेयोपमातोऽलङ्कारान्तरत्वम् । इति पाठः ग. १. पुस्तके । ग पुस्तके तु तदोपमेयोपमावदलङ्कारान्तरत्वम् इति पाठः वर्तते ॥ ३ वाक्यत्वे ग. १ ॥ ४ यथा कल्पितोपमेति इत्यारभ्य सदृशभावः इत्यवधिकः पाठो ग. १ पुस्तके न दृश्यते ॥ ५ –र्य–क. ॥

**पदार्थानाम्** इति । पुराणानां सद्भूतानां चेत्यर्थः । **तत्स्वरूपम्** इति वर्ण्यमानस्य स्वरूपम् । **तत्पूर्वानुभवे** इति ते शशाङ्कादयः पूर्वे[1] यस्य, स चासावनुभवश्चेति तस्मिन् । **उपमान्तरेण** इति । उपमाविशेषेण[2] कल्पितोपमालक्षणेन । **तद्** इति । उपमाविशेषत्वेनाऽभ्युपगतस्यानन्वयस्येत्यर्थः । **एवंविधम्** इति । कल्पितोपमायामसद्भूतस्य पदार्थस्याऽनन्वये तु तत्स्वरूपस्यैव समारोपितव्यतिरेकस्योपमानता परिकल्पनलक्षणम् ।

**प्रत्येकम्** इति तुल्यतया[3] वर्णनीयत्वे सति । **नियम** इति । इदमलङ्कार्यमेवास्य चेदमलङ्करणमेवेत्येवंरूपस्य नियमस्य । **रूपान्तर** इति वर्ण्यमानत्व[4]रूपादन्यस्य सादृश्यरूपस्य । **भूषणत्वम्** इति उपमालङ्कारत्वमित्यर्थः । **सादृश्यम्** इति सदृशभावः[5] । **वर्ण्यमानत्वाद्** इति । पदार्थानां वर्ण्यमानभावादित्यर्थः[6] । **उपमितिः** इति न तुल्ययोगितेत्यर्थः **समुच्चितोपमायाम्** इति । यथोपमाप्रकारत्वेन समुच्चितोपमा तत्र भवद्भिरप्यभ्युपगम्यते तथा तुल्ययोगिताप्यभ्युपगम्यतामित्यर्थः । **प्रस्तुतत्वाद्** इति । दयितदर्शनोपयोगिपत्रलेखाशेषनिर्वर्त्तननिमित्तदृष्टिदानविषयत्वेनेत्यर्थः । **दर[7] रइय[8]** इति । अत्र दृष्टिदानविषयत्ववर्णनीयतया यथा दिनकरः प्रस्तुतस्तथा दर्पणोऽपि प्रस्तुतः सन्नेव साम्यसमन्वयातिरेकादलङ्करणायोपमानत्वेनोपदर्शितः । **यत्काव्यार्थ**[9] इति । अत्र काव्यार्थनिरूपणादीनां साध्येनाश्वासनाभूमित्वेन तुल्यतया वर्णनीयत्वेऽपि सादृश्यमतिरिच्यत इत्युपमैवेत्यर्थः । एवमुत्तरत्र । **अलङ्करणम्** इति उपमेत्यर्थः । **पराङ्गत्वम्**[10] इति प्रस्तुतोपकारकत्वम् ।

**इह** इति तुल्ययोगितायाम् । **तद्** इति पराङ्गत्वमलङ्कारत्वमित्यर्थः[11] । **विचारितम्** इति । वर्णनीयत्वेऽपि सादृश्यमतिरिच्यत इति न काचित् क्षतिरित्यर्थः । **पूर्ववदेव** इति । इदं[12] हि तन्त्रेणोपात्तत्वादुपमित्यलङ्कृतिभवनेऽपि योजितम् । तुल्ययोगितायामिवेत्युपमानसामर्थ्यादेव च समुच्चितोपमावदित्येतदपि समाकृष्टम् । **सदयं बुभुजे** इति । समुच्चितोपमोदाहरणमिदमुपमानत्वेन निदर्शितम् । **अयं रणः** इति । अत्र महासिधाराणामुत्पलस्रजां च प्रवर्त्तमानानां निवर्त्तमानानां च नीलत्वदीर्घत्वादिना साम्यं प्रतीयत एव । तथा मङ्गलतूर्य-

१. मुखानुभवस्य ॥ २. -ष-ग. २. ॥ ३. -ता-ग. २ ॥ ४. ग. २ पुस्तके 'त्व' इति पाठो नास्ति ॥ ५. -शः ग. १ ॥ वर्ण्यमानभावादित्यर्थः... विषयत्वेनेत्यर्थः । अयं पाठः ग. १ पुस्तके नास्ति ॥ ७. दर रइय इति । अस्मात्प्राग् इति सम्बन्धः इति पाठो ग. १ पुस्तके वर्तते ॥ ८. रय क ॥ ९. 'यत्काव्यार्थेति' इत्यारभ्य 'एवमुत्तरत्र' इत्यन्तः पाठो ग. १ पुस्तके नास्ति ॥ १०. पराङ्गत्वम् इत्यारभ्य 'तुल्ययोगितायां' इत्यन्तः पाठो नास्ति ग. १ पुस्तके ॥ ११. -त्वमिति इत्यतः क्षतिरित्यर्थः इत्यवधिकः पाठो नास्ति ग पुस्तके ॥ ग १ पुस्तके तु -त्वमिति इत्यस्मात्प्राक् 'क' अधिकः पठितः ॥ १२ 'इदं हि...योजितम्' इत्यस्य स्थाने 'एक एव पूर्ववच्छब्दः काकाक्षिगोलकन्यायेनोभयत्र सम्बद्धः' इति पाठः ग. १. पुस्तके वर्तते । तुल्ययोगितायामिवे...समाकृष्टम् । इति पाठश्च तत्र नास्ति ॥

विशिष्ट उत्सवो निवर्त्तते रणश्च प्रवर्तते इति, शिरांसि निवर्त्तन्ते महासिधाराश्च प्रवर्त्तन्ते इति च परिवृत्ती स्तः, किन्तु न तयोस्तथा साम्यप्रतीतिरस्ति । एवमुत्तरत्राऽपि विचार्यम् । **खड्गप्रहारम्** इति । अत्र बहूनां भूभुजां स्वसम्बन्धि[1]धर्म्यवकाशे धर्म्यन्तरं परिवृत्तं पूर्वोक्तमिति उभयोर्वर्ण्यमानत्वात् परिवृत्तिर्नालङ्कारः । साम्यं चेदतिरिच्यते भवत्युपमितिरेवालङ्कृतिरिति । **एकस्मिन्** इति । परिवृत्तिलक्षणे । **वाक्यार्थोपमेयमिति** । अन्येषां प्रतिवस्तूपमेयम् । [2]**सिवेणे वि** इति । विदर्शनाप्रकारस्याऽस्य यद्यप्युप[3]मात्वमग्रे साधयिष्यते तथाऽपि पूर्वमेव बुद्धौ सिद्धत्वादत्रेदमुदाहृतम् । **उपमितिः एव** इति । अन्येषां तु वि[4]दर्शनाप्रकार एवायम् । अभवद्वस्तुसम्बन्धस्योपमापरिकल्पकस्य विद्यमानत्वात् ।

**अन्यत्र** इति । उत्प्रेक्षायामुपमायां च । **इ[5]वादीनामर्थस्य** इति । वस्त्वन्तरसादृश्यं वस्त्वन्तरत्वनिश्चयश्चेत्युभयरूपो ह्यर्थ इवादीनामुत्प्रेक्षायां सहृदयैः परिकल्प्यते । अत एव तदिवेति तदेवेति वा द्वाभ्यां प्रकाराभ्यां प्रस्तुतव्यतिरिक्ततात्पर्यान्तरयोजनमुत्प्रेक्षा वक्ष्यते तत एव साम्यादेरित्यत्रादिग्रहणेन द्विती[6]यार्थपरिग्रहः । उपमायां तु सादृश्यरूप एवैकोऽर्थः । तत्र च सम्भवद्वाच्यार्था या विदर्शना तस्या उत्प्रेक्षायामन्तर्भावः । असम्भवद्वाच्यार्थायां चोपमायामित्यर्थः । **बोधयन्** इति बोधयन्निव बोधयन्निव वेत्यर्थः । **प्रतिपादकम्** इति इवादि । **वाक्य** – इति । क्रियैव वाक्ये प्रधानमिति न पूर्वापरव्याघातः । **क्रियापद** इति पुल्ल अन्तीत्यस्य । **पूर्वोक्तम्** इति । य[7]थाऽत्रोत्प्रेक्षायाः प्रतीयमानत्वं तद्वदेव चायम् । **मन्दद्युतिरित्यत्र** इति । **विद्वद्भिः** इति **उद्भट**प्रभृतिभिः । क्रमेण **चार्द्धोदित** इति । अत्राचकर्षेति क्रियापदम् अन्यथानुपपद्यमानं मदप्रभेत्यत्रोपचारं प्रकल्पयदुपमायाः प्रतिपा[8]दकतां प्राप्नोतीत्यर्थः ॥

**पृ[9]थगष्टविधत्वेन** इति । काश्चिदभिधीयमाने धर्मे काश्चिच्च प्रतीयमाने इत्यर्थः । **लोपे सामान्यधर्मस्य** इति । सामान्यधर्मस्य द्योतकस्य चेति द्वयोर्लोपे इति संबन्धः । **वाक्यार्थे** इति । वाक्यार्थाभ्यां य एको वाक्यार्थस्तस्मिन् । **लुप्तपूर्ण** – इति । राजीवमिव ते वक्त्रमित्यादावुच्चरिते कीदृगित्याकाङ्क्षायां धर्मस्याश्रवणात् प्राक् लुप्तत्वमनन्तरं विमर्शप्रवृत्तौ चारुत्वादेः प्रतीयमानत्वात् पूर्णत्वमित्यर्थः । **तन्त्रेण** इति । येन ध्वस्तेत्यत्र यथोमाधवमाधवयोरभिधानं न तथाऽत्र, किन्तु मुखपुण्डरीकयोरितरेतरयोगेनोक्तयोः प्रतीयते यत् सादृश्यं तस्योपमाविवक्षेत्यर्थः । **पूर्णगलुप्तेति** । त्वन्मुखं पुण्डरीकं च फुल्ले इत्यादावुच्चरिते समनन्तरमेवोभयगतस्य सादृश्यस्य प्रतीयमानत्वात् पूर्णत्वं, पश्चाच्च तत्प्रतिपादक-

---

१. -सम्बन्धे धर्म्यें ग. २. ॥ २ सिविणे क. ग. २. ॥ ३. उपमानत्व- ग. २. ॥ ४. विदर्शिता- ग. २ ॥ ५ ए- ग. २. ॥ ६. तात्पर्यान्त इत्यर्थः । ख. पुस्तके एव ॥ ७. तथा ग. २. ॥ ८. प्रति प्रति- ग. २. ॥ ९. स पृथग- ग. २ ॥

मिवात्र न श्रूयत इति विमर्शात् लुप्तत्वमित्यर्थः । **अत्रयवान्तराणि** इति । पत्रचक्रवाकप्रभृतीनि ॥

## अथोपमादोषाः ।

**एषामिति** । अलङ्कारपृष्ठवर्त्ती श्लोकोऽयमित्येतच्छब्देनोक्तानामलङ्काराणां निर्देशः । **उत्कर्षु** इति दोषेषु । **अन्यरूपम्** इति उपमानरूपमुपमेयरूपं वा । चिन्तारत्नमिवेत्यत्र युष्मदर्थविश्रान्तत्वात् च्युतत्वलक्षणो धर्मो यथोपमेयरूपः पुल्लिङ्गत्वेनोपात्तः । सत्त्व इत्यत्र तु शुद्धत्वलक्षणो धर्मो बहुवचनान्तत्वेन प्रतीयमानेनापि धर्मेणेतिशब्देनानुपात्तेनोभयानुगमक्षमेण शब्दोपात्तच्युतत्वादिव्यतिरिक्तेन केनचिदित्यर्थः । **अनिर्वाहाद्** इति । सविशेषणत्वं निर्विशेषणत्वं वा यदुपमेये प्रक्रान्तमुपमाने तस्या निर्वाहादित्यर्थः । **अभ्यासलक्षणः** इति । पौनःपुन्यरूपः । **वाक्यभेदः** इति । द्वे वाक्ये स्यातामित्यर्थः । **स्वरूपभेदं नापद्यत** इति । यथा अनर्धैरित्यादि असदृश इत्यादि च गुणादिषूपमेयेषु पुल्लिङ्गेषु तद्वेष इत्यत्रैकवचनान्ते च रत्नादिषूपमानेषु नपुंसकलिङ्गेषु विभ्रमा इत्यत्र बहुवचनान्ते च सम्बध्यमानं स्वरूपं न जहात्येव ।

**ने[1] तथा** इति । न तद्विदां प्रसिद्धेन प्रकारेण । **अन्यस्य** इति निमन्त्रणादेः । **धर्मान्तरम्** इति । आप्त्यादिलक्षणात् कालादिभेदावभासका[2]द्धर्मादन्यस्तदनवभासको धर्मो धर्मान्तरम् । **प्रकृत** इति । प्रकृतो धर्मः कालादिभेदावभासक आप्त्येत्यादिकः । **सामान्यधर्मेण** इति कालादिभेदावभासकेन । **सत्यवादी** इति । सत्यवादित्वधर्मस्य प्रतीयमानस्योपादानेनोपमाप्रतिपत्तिर्भविष्यति ततः सत्यं वदतीत्येतदुपमेय एव योजयिष्यत इत्यर्थः । **आस्यादिव** इति । उत्प्रेक्षेयम् । **धनुर्मण्डल** इति । आस्यविशेषणमिदम् । **जाज्वल्यमाना इव** इति । जाज्वल्यमाना वारिधारा इव दीप्ताः शरा इति सम्बन्धः । **परिवेषिणः** इति । अनेन धनुर्मण्डलमध्यभाक्त्वं प्रतिरूपितम् । परप्रसिद्धचेदमिह दोषोदाहरणत्वेन प्रदर्शितम् । यावता निर्दोषोपमात्वमस्योत्प्रेक्षायां निर्णेष्यते तेनोन्निद्रस्यारविन्दस्य मध्यगा चन्द्रिका यथेत्युदाहार्यम् । तत्र हि शब्दोपात्तया मध्यगतचन्द्रिकया विरुध्यमानमुन्निद्रत्वं न कथञ्चिदिष्यत इति ॥

**हीनता** इति । उपमेये बहवो धर्मा न तावन्त उपमान इत्यर्थः । **विपर्ययः** इति । उपमा[3]नजातिप्रमाणगतहीनत्वाधिकत्वकृ[4]त उपमेयजातिप्रमाणगतहीनत्वाधिकत्वरूप

---

१. न तथेति...निमन्त्रणादेः । नास्ति पाठोऽयं ग. १ पुस्तके ॥ २. कालादिभेदावभासकाद्...न कथञ्चिदिष्यत इति । ग. १ प्रतौ नास्ति । ग. प्रतौ तु तत्स्थाने प्रकृताद्धर्मादन्यो धर्मो धर्मान्तरम् एतावानेव पाठः ॥ ३. -मेय -ग. १ ॥ ४-कृत......हीनत्वाधिकत्व-अयं पाठो नास्ति ग. १ पुस्तके ॥

औचित्यभ्रंशः । **उपमानाधिकत्वम्** इति । उपमेये यावन्तो धर्मा न तावन्त एवोपमाने, अपि त्वधिका इति **तेनासदृशता चेति** । उपमानेनासदृशत्वं चेत्यर्थः । **समाधीयते** इति । अत्र विकल्पद्वयम् । उपमानोपमेययोर्ययोः सामस्त्येन साधर्म्यं तयोरेवोपमेति वा । उपमेये वा यानि पदानि तान्यु[1]पमानोपमेयविशेषणभूतानि साधर्म्यवाचीनि कर्त्तव्यानि । तत्राद्यं[2] पक्षमधिकृत्याह– **सर्वं सर्वेण** इति । द्वितीयं पक्षमधिकृत्याह– **लक्ष्यविरोधममपी**[3]ति । **का-क्वेति** । काकुपाठेन नेयानीति विधिर्निषेधे पर्यवसाय्यत इति न समर्थनीयानीति व्याख्या-तम् । **असर्वसारूप्यम्** इति । उपात्तधर्माणां[4] सर्वेषामसारूप्यमुभयाननुयायित्वम् । **सूर्यांशुसम्मीलित** इति । अत्र द्वितीयस्याऽपि पक्षस्याऽसम्भवः । न च पक्षान्तरमस्तीति न हीनतालक्षणो दोष इत्यर्थः । यच्च[5] वर्षर्त्तुविगमस्योपमेयेऽनुपनिबन्धात् भर्तृहीनत्वेनोपमा-नाधिकत्वं तदत्राप्रस्तुतमिति न विचारितम् ।

**यथावस्थिते वा** इति । वचनवृत्तिविशेषद्वयेनैक एवायमिवशब्द उभयार्थ इत्येवं-विधस्य ग्रन्थ[6]काराऽभिप्रायस्य सम्भावयिष्यमाणत्वादेवमुक्तम् । वयं तु स्वाभिप्रायेणात्रोपमैव न कथञ्चि[7]दुत्प्रेक्षेत्युत्प्रेक्षायां निर्णेष्यामः । ननु यथावस्थिते च शब्दसम्बन्धे उत्प्रेक्षावत् रूपकमप्यापद्यते, तत् कथमुपमादोषप्रकरणवशादन्यत्रेवशब्दसम्बन्धं विधायोत्प्रेक्षैवैका प्रति-षिद्धेत्याह– **न च** इति । **रूपकम्** इति शरा वारिधारा एवेत्येवंरूपम् । **साम्य**– इति । साम्यं साधारणो धर्मस्तत्प्रतिपादकस्य शब्दस्य प्रयोगो न भवतीत्यर्थः । **अर्थेन** इति । उपमानलक्षणेन साम्यलक्षणेन च । **साम्यासम्भव**– इति । असत उपमानत्वेनानुपादानं परस्याऽपि सिद्धमिति न तत्र दृष्टान्तप्रतिपादनमिति । **एकेन** इति आद्येन । ननु कथम-न्वयः, धनुरुपादानस्यास्यापादानत्वेन निगीर्याध्यवसानरूपाऽतिशयोक्तिरत्र हि प्रकल्प-यिष्यत इत्याह– **न चात्र** इति । **तिरोहिता** इति । व्याप्तत्वं तिरोहितत्वेन निगीर्याध्यवसित-मित्यतिशयोक्तिरियम् । **तद्** इति । आस्यापादानकत्वाध्यवसानम् । **धनुर्मण्डल**– इति । आस्यापादानस्येत्यर्थः । **शराणाम्** इति । अर्थाच्छरनिपातस्य धनुरपादानकत्वमिति सम्बन्धः । **तद्विपक्ष** इति । **आस्यापादानकत्वप्रतियोगिधनुर्व्यापार**– इति । व्यापारस्य शक्त्यपर-पर्यायतया धनुर्व्यापारो धनुरपादानकत्वं तस्य यानालोचना आस्यापादानकत्वेन सम्भा-व्यमानत्वादपह्नुतिस्तयेति । **उत्तरत्रेति** वारिधारा इत्यत्रानयनम् । **अयमभिप्रायः** इति ।

---

१. तान्यु इत्यस्य स्थाने ग. १ प्रतौ 'उ' दत्त्वा तानि साधर्म्यवाचीनि...इति प्रदर्शितम् ॥ २. –था –ग. १ ॥ ३. –पीति ..व्याख्यातम् इत्यस्य स्थाने ग. १ पुस्तके –पि दर्शयतीति इत्येव पाठः वर्तते ॥ ४. –णां बाहुल्येन ग १ ॥ ५ मूलस्थस्य 'यच्च वर्षर्तु...उपमार्थश्च इति इति पाठस्य स्थाने परिवेषिण इति । अनेन धनुर्मण्डलमध्यभाक्त्वं प्रतिरूपितं यथावस्थिते वेति जाज्वल्यमाना इत्येवंरूपे । रूपकमिति शरा एव वारिधारा इत्येवंरूपम् । उत्प्रेक्षार्थ उपमार्थ...ग पुस्तके अयं त्रुटितः पाठः । ६. भामह । ख पुस्तके एव ॥ ७ कथञ्चिदुत्प्रेक्षायां ग २. ॥ ८. अपह्नुतेः । ख पुस्तके एव ॥

सम्भाव्यत इति शेषः । **उत्प्रेक्षार्थ उपमार्थश्च** इति । तेन सन्देहसङ्करालङ्कारः । एकतरस्य परिग्रहे निश्चायकप्रमाणाभावादित्यर्थः ।

**यथा** इति । उपमाया एवोदाहरणप्रदर्शनार्थमिदम् । **वक्ष्यते** इति उत्प्रेक्षायाम् । **उपमायामपि** इति । तथा हि चन्द्र इव मुखमित्येवमादौ कान्तामुखस्य यद्यप्याह्लादकत्वादिगुणयोगो विद्यते, तथापि क्व चन्द्रगतं ह्लादकत्वमत्यन्तलोकोत्तरं क्व च कान्तामुखगतं परिमिततरुणजनविषयत्वेन सम्भाव्यं, तथाऽप्यतिशयगर्भीकारेणैवाऽत्र साम्यापादनमुपमया क्रियत इति । **सम्प्रदाय** इति । लक्षणेऽनुक्तोऽपीत्यर्थः । **अपह्नुत्युपमा** इति । प्रकृतस्याऽर्थस्य सादृश्ये सत्यप्रकृतरूपेण सम्भावनमुत्प्रेक्षेत्यपह्नुत्युपमे अर्थलब्धेऽतिशयवत्त्वं चोत्प्रेक्षालक्षण एव शाब्दमभिधास्यते । **अनतिशयवती** इति अनुत्कटा । **कथम्** इति । उभयत्रेवशब्दस्य विशेषणयोजनायामुत्प्रेक्षा, उपमानयोजनायां तूपमा भवत्वित्याशयः ।

**वयं तु ब्रूमः** इति । ग्रन्थकाराऽभिप्रायेणेत्यर्थः । यदि ह्यत्रेवशब्दावुभावप्युभयार्थवृत्ती न स्यातामपि त्वेक उत्प्रेक्षार्थोऽपरस्तूपमार्थ इति, तदा प्रथमोदाहरणे[2] न समानयोगक्षेमत्वादुपमा[3],असम्भवोदाहरणवाक्येऽप्युत्प्रेक्षैव भवेत्तत्कथमुपमाऽसम्भवघटना स्यात्।अथान्यत्रेवशब्दमभिसम्बध्य [4]द्वितीयोदाहरणेन समानन्यायत्वात् तत्र सा विधास्यते तर्हि प्रथमोदाहरणेऽपि दोषोदाहरणवत्तत्सम्बन्धोऽन्यत्र दुर्निवार इति तत्राऽप्युपमा प्रसजति । द्वितीयोदाहरणेऽपि चैवमेवोत्प्रेक्षेत्युभयार्थत्वमुभयोरपि बलादापततीति भावः । **सङ्करालङ्कार एव** इति । दोषोदाहरणे हि सन्देहसङ्करमभिप्रेत्य पक्षान्तरभाविन्याऽमुपमायामसम्भवघटना कृतेति तत्परिहारार्थमतिशयार्थत्वप्रदर्शनपरेऽस्मिन्नपीवशब्दसम्बन्धान्यथाकल्पनेन सन्देहसङ्कर एवोपदर्शितः ।

**उत्प्रेक्षायाम्** इति । सम्भावनायाम् । **द्विविधः** इति । उपमेयाधिक्ये ह्यर्थादुपमानस्य हीनत्वमित्युपमानहीनत्वाधिकत्वाभ्यां स्तुत्यमुपमेयं हीनत्वाधिकत्वरूपेण विपर्यस्यतीत्युभयप्रकारः । **स्तुतिविपर्ययः** इति । अयमुभयरूपोऽपि विपर्ययो जात्याश्रय उदाहृतः । प्रमाणाश्रयस्त्वत्रैतद्दोषनिराकरणावसरे च स्वयमेवोदाहार्यः । **ननूपमीयते** इति । दिङ्मात्रप्रदर्शनपरमिदम् । तथा हि बहुप्रकारेष्वपि लिङ्गवचनभेदेषु पाणिकमलयोरधरविम्बफलयोश्च पुन्नपुंसकलिङ्गभेदः । अधरस्य विद्रुमच्छेदभासां च पुंस्त्रीलिङ्गभेद एक-

१. उत्प्रेक्षा उपमारूप । ख. पुस्तके एव ॥ २. पुञ्जीभूतमिति । ख. पुस्तके एव ॥ ३. जाज्वल्यमाना इवेत्यादि । ख पुस्तके एव ॥ ४. सरः शरत्प्रसन्नमिति ख. पुस्तके एव ॥ ५. घटना ख पुस्तके एव । ६. उत्प्रेक्षा उपमारूपत्वम् ख पुस्तके एव ॥ ७. उदाहरणयोः ख. पुस्तके एव ॥ ८. सन्देह...कल्पनेन सन्देह इति पाठो नास्ति ग. २ पुस्तके ॥ ९. यथा ग. २ ॥

वचनबहुवचनभेदश्चैव प्रदर्शितः । **प्राणा इव** इति । लिङ्गभेदव्यतिरिक्तेऽपि विषये वचनभेदो दृश्यत इत्येतदर्थमेतदिति । **उच्यते** इति समाधीयते **कैश्चि**दित्यर्थः । **हीनविपर्ययः** इति उभयरूपोऽपि विपर्ययदोषः सव्यभिचारत्वात् न सम्यगित्यवाच्य एवेत्यर्थः । **अत्र च** इति दोषप्रकाशनार्थमिदम् ।

[8] **प्रतिकृतिद्वारेण**[1] इति । किलोपमेयेऽर्थे नास्य शशिनो निर्देशो न्याय्यो मेघलक्षणोपमानसंन्धित्वात्[2] । अथ चैवमत्रोक्तं न[3] ह्ययं निर्दिष्ट उपमेयेऽर्थ इति सेयमुपमेयाधारा निर्दिशिक्रियाकर्मता शशिनाऽनु[4]पपद्यमाना स्वात्मसिद्ध्यर्थत्वेन प्रतिकृतिं[5] द्वा[6]रभूतामाक्षिपति । यथा काष्ठैः पचतीति विक्लित्तिसिद्धौ काष्ठानि ज्वालानुगमम् । सोऽयं स्वसिद्ध्यर्थत्वेनार्थान्तराक्षेप उपादानात्मा लक्षणाव्यापारोऽभिधीयते इत्यर्थः । यदा तु न ह्ययं निर्दिष्ट उपमेयेऽर्थ इत्यत्रायं शब्दः शशिविषयतयाऽनुपपद्यमानसमन्वयत्वान्मुख्यार्थाभोगवैमुख्येऽभिधेयसादृश्यस्वाजन्येनार्थान्तरभूतायाऽसौ शशिप्रतिकृतिर्जलजादिरूपा तत्परत्वेनात्मानमर्पयति तदा उपादानस्व[7]भावलक्षणा विलक्षणव्यापारा शुद्धलक्षणाऽभिधीयते । यदा तूपादानात्मनि व्यापारे पूर्वोपदर्शितस्वरूपे शब्दानामुपात्तानामसम्पूर्णतया प्रमाणत्वं न निर्वहतीति प्रमाणत्वनिर्वाहायोपात्तेन वाक्यखण्डलकेन वाक्यखण्डलकान्तरमनुपात्तमप्याक्षिप्यते। एवं हि तस्य प्रमाणतोपपद्यते। नान्यथा इति तदाऽनु[illegible]शब्दैकदेशविषयत्वाच्छ्रुतार्थापत्तित्वमत्राभिधीयते। **हीन[9]तादयः** इति । उपमानाधिकत्वस्यान्यथादोषत्वेन स्वयमभ्युपगतत्वान्मेधाव्युक्त एवेत्यर्थः । **कटाक्षी** इति । कटाक्षप्रक्षेपमात्रकरणमपि । न कृतम् इति । अपि तु कल्पप न्यायशब्दोपादानात् सादृश्यं प्रत्युतोक्तमित्यर्थः **हीनाधिकत्वविशिष्टः** इति । हीनविपर्ययोऽधिकविपर्ययश्चेत्यर्थः । **तावन्मात्रेण** इति । हीनत्वाधिकत्वमात्रेण न दोषोऽपि त्वप्रसिद्धिगर्भीकारेणेत्यर्थः । **स्व[10]रूपमात्रे**ति । मात्रशब्देन निन्दास्तुती व्यवच्छिन्ने । **सरत्न** इति । सरत्नप्रतिबिम्ब इत्यर्थः । **तस्माद्** इति । यतो हीनाधिकान्यप्युपमानान्युदाहृते विषये लोके प्रसिद्धान्येवेति न विपर्ययमात्रं दुष्टतायां प्रयोजकम् । **अप्रसिद्धिरेव** इति । न तु विपर्यय इत्यर्थः । **केषाञ्चिद्** इति । विपर्ययवर्जानां षण्णामित्यर्थः । [11]व्यभिचारदर्शनेन निराकुर्वताऽनित्यदोषत्वं विपर्यस्य **भामहे**नाप्यभ्युपगतमेवेति भावः । यद्यप्याधिक्यमन्यथा न्याय्य-

---

१. प्रकृतिद्वारेणेति ग. २. ॥ २ सम्बन्धित्वात् क. ग. २. ॥ ३ वा ग. २ ४ -नुपद्यमाना ग. २॥ ५. प्रकृति ग. २. ॥ ६ उपाय ॥ ७. -स्वभावलक्षणव्यापारा ग. २ ॥ ८ प्रतिकृतिद्वारेणेति ॥ ९ हीनतादय इति...प्रत्युतोक्तमित्यर्थः । इति नास्ति ग. १ पुस्तके ॥ १०. स्वरूपमात्रेति...प्रतिबिम्ब इत्यर्थः इति पाठो ग. १ पुस्तके नास्ति ॥ ११. व्यभिचारदर्शनेन...मेवेति भावः इति ग. १ पुस्तके नास्ति ॥

मित्युपदर्शितं तथापि **मेधाव्युक्तं** तावन्निराकृतमित्येवमुक्तम् । **तथाहि** इति । यादृग्धर्मयुक्तमुपमेयमुपनिबद्धं तादृग्धर्मयुक्तमेवोपमानं कर्त्तव्यमित्यत्र द्वितीये[1]पक्षे हीनताधिक्ययोर्लिङ्गभेदे वचनभेदे च [2]लक्ष्यविरोधलक्षणः परिहारो य उपदर्शितः स तुच्छरूपत्वादेव न समीचीन इति न प्रदर्शितः ।

**वि[3]शेषणानि च** इति । चः पुनरर्थे । ततो न पुनरिति सम्बन्धः । **साभिप्रायैः** इति साधर्म्यवाचिभिर्न त्वेकतरस्वरूपमात्रपरैः । **तदुक्त**–इति । अतिशयोक्त्युक्तलक्षणेनैव । **न शक्यम्** इति । लोकेऽप्रसिद्धत्वात् । **सोऽयम्** इति । स इत्यनेन **मेधाव्युक्तो** लिङ्गवचोदोषः परामृश्यते । अयमित्यनेन स्वलक्षणलक्षितः सामान्यशब्दभेद एव । यो लिङ्गवचोभेदेन **अन्यैर्द्विधा** दोष उक्तः सोऽयमेक एव सामान्यशब्दभेद इत्यर्थः । **यत्र** इति काव्ये । उभयोः समानयोरिति वैषम्याद्विशेषख्यापनार्थमिदम् । **विस्म[4]ये** इति । चित्रमिदं यत् प्रकटोऽपि दोषो महाकविभिरपि न परिह्रियत इत्यर्थः । **विपरीतरते** इति कल्पितोपमेयम् । **मुक्ताफलेति** तुल्यपाद्योपमा । **सुतनुरियम्** इति । अत्रोपमेयपक्षे विमलेन धौततनुवाससा लक्षयितुं शक्यमूर्वोरेव मृणालमूलयोर्लालित्यं शोभा यस्याः । मित्रं प्रियसुहृत् ।

**[5]न साहचर्याद्** इति । न पिङ्गत्वसाहचर्यात् **दीनता** इति सूर्यांशुसम्मीलितलोचनहेत्वतुकाया दीनताया इत्यर्थः । **पदम्** इति । भर्तृहीनेष्वित्येवंरूपम् । तेन सूर्यांशुसम्मीलितलोचनेष्विति दीनेष्विति च पदद्वयं न कर्त्तव्यमेवेत्यर्थः । **तथा च** इति । अव्युत्पत्तिप्रतिषेधे प्रकारान्तरोपदर्शनार्थमेतत् । ततश्च तेनैव प्रकारेण च घनागमेत्यभिधातुं युज्यत एवेति सम्बन्धः । **व्याख्यातम्** इति । जातिप्रमाणधर्माधिकतोपमानस्याधिकत्वमित्यर्थः । **अलङ्कार**–इति । अतिशायिनी तत्रोपमेत्यर्थः । **तत्त्वम्** इति । अर्थात्तच्छब्देनोपमेयधर्मः परामृश्यते । ततश्च तत्त्वमुपमेयधर्मत्वमित्यर्थः । यदि वा लक्षणया तत्सदृशवृत्तिरत्र

१. हीनताधिक्ययोर्द्वितीयपक्षे ग. १ ॥ २. लक्ष्यविरोध–इति नास्ति ग. २ पुस्तके ॥ ३. विशेषणानि च इति...लोकेऽप्रसिद्धत्वात् । इति पाठः ग. १. पुस्तके नास्ति ॥ ४. विस्मये इति इत्यस्मात्प्राक् ग. १. पुस्तके निर्दिष्टः पाठोऽधिको दृश्यते । यथा कालभेद इति । यत्र ह्यतीतनायकचरितमुपनीयते तत्रावश्यं कालभेदेन भवितव्यमित्यर्थः ॥ ५. न साहचर्याद् इति... तत्रोपमेत्यर्थः इति पाठस्य स्थाने ग. १ पुस्तके अयं पाठः दृश्यते । पद्मानिलनिर्मदत्वेनैवेति । अयं भावः । शरत्कालाहितं निर्मदत्वं केकानां शिखिमुखेषु विनाशे हेतुत्वेन विवक्षितं, तच्च भर्तृहीनत्वेन समानमिति बिम्बप्रतिबिम्बतया तयोरुपादानं युक्तं; यदा च तयोरुपमानोपमेयभावः प्रतीतस्तदा निर्मदत्वस्य निमित्तं सूर्यांशुसंस्पर्शो निर्मदत्वकारणकं च दीनत्वं स्वातन्त्र्याभावाच्च प्रतिवस्तुरूपं किञ्चिदात्मोपकाराय समीहेतामित्यर्थः । घनागमेति । अत्र हि दुःसहावलोकप्रतिबिम्बभावेन भर्तृभङ्ग उपनिबद्धः ॥

तच्छब्दस्तेन वडवाग्निसदृशत्वमित्यर्थः । **स्रोतःपतेः एव** इति । ननु चक्रवद्विशेष्यरूपम् । तत् कथमावर्त्तेन सम्बन्धमननुभवत्सवाडवाग्नित्वं चक्रविशेषणप्रतिबिम्बीभवति । तेन धर्माधिकत्वमित्यर्थः । चक्रस्येतिप्रसङ्गात् प्रतिपादितमिदम् । **शब्दस्यैव** इति । वाक्यस्यैवेमौ न्यूनाधिकत्वलक्षणौ दोषौ नोपमायाः धर्मन्यूनाधिकत्वे चेति दोषस्वरूपकथनमिदम् ।

**विशेषः** इति स्तुतिविपर्ययरूपः । एवं निदर्शितेनान्वयेन निदर्शयिष्यमाणे च चन्द्रमुखं मनोज्ञमिति व्यतिरेकेण परमार्थतः सामान्यशब्दभेदे एव लिङ्गभेदः पर्यवसितः । ततश्च कलिङ्गत्वेऽपि कालादिभेदे सामान्यशब्दभेदो यत्रास्ति तत्र सोपमानयुक्तेत्याह– **यत्रेव** इति । **प्रायेण** इति क्वचिन्नेष्ट इत्यर्थः । तत्रापि तेषां तैरस्ति कान्तिर्वाल्युग्रताऽपि वेति **भामहेन** परिहृतत्वादसादृश्यदोषस्य तन्मतनिराकरणाभिप्रायेण यथोपपत्तिः तस्य स्वरूपं निरूपयितुमाह– **अप्रतीत** इत्यादि । **गुणैरि**ति कान्त्युग्रतालक्षणैश्चित्तावर्जकत्वादिलक्षणैश्च । **प्रत्यायने** इति शब्दोपादानेन । **येन** इति । धर्मद्वारको धर्मिणोरुपमानोपमेयभावो भवतीत्यर्थः । **सा हि** इति । सूत्रोपात्तस्य हिशब्दस्य सम्बन्धोऽयमुपदर्शितः, उपमा ह्यलङ्कारेषु तन्निष्ठत्वात् कवीनां प्रधानम् । **सिद्धवद्** इति । कर्पूरादिवत् सितं यश इत्येवंरूपतया न वस्तुमुपक्रमो युक्त इत्यर्थः । यतः **कर्पूरेण मितम्** इत्यस्माद्वाक्यात् सामान्येनैव तुल्यता प्रतीयते इति साध्यावस्थ एवादौ शुभ्रत्वसम्प्रत्ययः । **तथारूपता** इति । शुभ्रतायाः । **नापुष्टार्थत्वाद्** इति । उपमानाधिक्यात्तदपोह इति यदुक्तं तन्नाऽपुष्टार्थत्वात् । एकस्मिन्नुपमाने प्रयुक्ते उपमानान्तरप्रयोगो न कञ्चिदर्थविशेषं पुष्णाति । **बलसिन्धुः** इति । नात्र पौनरुक्त्यं बलः सिन्धुरिव वैपुल्याद्बलसिन्धुः, सिन्धुरिव क्षुभित इति क्षोभसारूप्यादित्यर्थभेदप्रतीतेः । अर्थपुष्टिस्तु नास्तीत्याह– **अत्र बल** इत्यादि । **कथम्** इति अत्राप्यपुष्टार्थमस्त्विवति भावः ।

**अत्रापि** इति । सिद्धान्तप्रदर्शनपरम् । चन्द्राभेद इति रूपकम् । **अस्याभिप्रायः** इति । **वयं** तु ब्रूमः--रूपकोपमयोरेकत्र समावेशे विरोधाद्यर्थत्वम्, अथ प्रसवशुद्धिमत्तरत्वधर्माभ्यामुभयत्रोपमा तदैकार्थत्वम्, उत राजा इन्दुरिवेत्यत्र सौम्याह्लादकत्वसद्वृत्तत्वानि प्रतीयन्ते । इन्दुरिव प्रसूतः शुद्धिमत्तरश्चेत्यत्र तु प्रसवशुद्धिमत्तरत्वे अभिधीयेते इति नैकार्थत्वं, तर्हि साहचर्यात् प्रसवादिना सौम्यादौ लब्धे तदर्थमिन्दुरिति द्वितीयमुपमानपदं यदुपात्तं तद-

---

१. स्रोतःपतेरेवेति... ........दोषस्वरूपकथनमिदम् । नास्ति अयं पाठः ग. १ पुस्तके । २. इति विपर्ययरूपः ग. १ ॥ ३. एवं निदर्शितेनान्वयेन......नेष्टः इत्यर्थः । अयं पाठो ग. १ पुस्तके नावलोक्यते ॥ ४. –माणेन क. ग. २. ॥ ५. चन्द्र इव मुखं क. ग २. ॥ ६. यत्र चेति क. ग २ ॥ ७. तत्रापि तेषाम् इत्यस्य स्थाने तथापि इति पाठः ग. १. पुस्तके ॥ ८. गुणैरिति...प्रधानम् । इति पाठो नास्ति ग. १ पुस्तके ॥ ९. पुष्टार्थमस्त्विवति भावः ॥ १०. पूर्वापरव्याडनार्थत्वम् (?) । ख. पुस्तके एव ॥ ११. पुनरुक्तत्वम् ख. पुस्तके एव ॥

पुष्ट्यर्थमेवेति । **असिद्धे तु** इति स्वरूपतो विशेषणतश्चेत्यर्थः । **अनेन** इति इवशब्देनोन्नि-द्रस्येवेत्यत्र योजितेन । **निःसंशय** इति । येनोपमायां दोषोऽसौ सङ्गच्छत इत्यर्थः । **अर्थदोषः** इति । वाक्यार्थदोषो व्यर्थाभिधानः । **विचित्रस्येति** उपमानात्मनः । **यैः** इति **वामनवृत्तिकृद्भिः । इदमभ्यधायि** इति । को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मण इत्यादि ब्रुवता **भामहे**नोत्थानोपहतत्वमतिशयविवक्षायां तु सति समुत्थाने निर्दोषत्वम-सम्भवदोषस्योक्तमिति तन्निराकरणाभिप्रायेणास्य स्वरूपव्यवस्थापनाय नन्वर्थविरोध एवाय-मस्त्वित्युक्तस्य पूर्वपक्षस्य समाधानं पुनः पूर्वपक्षः समाधानं चाभिहितमित्यर्थः । **न ते सम्यग्** इति । **उक्तेनापोद्धारिकेयेत्यादिना** वक्ष्यमाणेन **मलयजरसेन** इत्यादिना नयेन चोद्यमिव समाधानमप्ययुक्तमित्यर्थः । **विरुद्धस्य** इति । शशभृद्वितत्धामविषयीकृतो ह्यर्थो वस्तुतः सर्वोऽपि किल विभाव्यतां गच्छतीत्यर्थः । **अतिशयस्य** इति । अविभाव्यतागमन-लक्षणस्य ।

**यौगपद्येन** इति । वक्ष्यमाणायामुपमेयोपमायां क्रमग्रहणाद्यौगपद्यमत्र लब्धम् । **अप्रस्तुतप्रशंसा** इति । यथाऽप्रस्तुतप्रशंसायामप्रस्तुतस्य वस्तुनोऽनन्वये चोपमानोपमेय-[2]भावस्य वाच्यस्याविवक्षा, तथाऽत्रापीत्यर्थः । **प्रतीतिमात्र** इति । मात्रग्रहणेन कार्येऽङ्ग[3]-भावेनान्वितत्वं व्यवच्छिद्यते[4], **तेन** इति । यत उपमानस्य साम्यस्य चोत्प्रेक्षायामविवक्षा । **मोहः** इति । उपमानस्य तद्विशेषणस्य वाऽसतः परिकल्पनं भ्रान्त्यपरपर्यायस्य मोहस्य बीजम् । न हि ते काव्यतत्त्वविदः, कथमन्यथा काव्यपदानां स्वबाच्येषु[5] कल्पनायोग-मिच्छन्ति । वेदवद्धि यथाशब्दं तत्रार्थो न यथार्थशब्दः । कथं[6] च यत्रोपमानोपमेयसाम्य-प्रतीतिरस्ति तत्रोपमायामप्यतिशयस्येष्टत्वादसद्धर्माध्यवसानेनोपमामपि तूत्प्रेक्षां व्यपदिश-न्तीति । **तत्र** इति । यत्र साललतेवेत्यादावुपमान एवेवशब्दश्रुतिस्तत्र निर्विवाद एवोत्प्रेक्षा बुद्धिप्रतिषेधोपदेशः । यत्र तु स्थास्नुरिवेत्यादौ विशेषण एव तत्राप्युपमेयस्योपात्तस्य प्रतीय-मानत्वादपह्नुत्यभावे उपमानरूपसम्भावनानुपपत्तेरधिकीभवदुपमानमुपमेयोपकारकत्वेनात्मनः प्रतिष्ठार्थमिव शब्दसम्बन्धमाकाङ्क्षतीति नेवशब्दो यथावस्थित एव सम्बन्धमर्हतीत्युपमान एव स द्रष्टव्यः ।

एवं च **जाज्वल्यमाना इव** इति, **पुञ्जीभूतमिव** इत्यादावपि नोत्प्रेक्षायां बुद्धिर्विधेया । **न च सङ्करेऽपि तूपमायामेव** इति । **एवंविधेषु** इति । अनेन कुमुददल-दीधितीनामित्यादि स्वरूपतः कलितो[7]दाहरणमपि लभ्यते । **व्यापनादि** इति । आदिग्रहणात्

१. –के – क. ॥ २. भावस्याविवक्षा ग. २ ॥ ३. वाक्यार्थे । कार्थेऽनङ्ग–ग. २ ॥ ४. व्यवच्छिद्यते उपमेयत्वमिति अनन्वयोक्तमेतदनुषक्तम् । ख. ग. २. ॥ ५. स्वभाव्येषु ग. २. ॥ ६. किमिति च ॥ ७. कलिपतो– क. ॥

श्यामप्रभाप्रसरणम् । **लेपनादि** इति । **आदि**ग्रहणादञ्जनवर्षणम् । **अत्रोपमानस्य** इति । अधिरोहणपूर्वकदृशिकर्मकस्य कस्यचित् पुरुषस्येत्यर्थः । **ततः किम्** इति । किलात्र नोत्प्रेक्षेति भवतोऽभिसन्धिः स न कश्चिदित्यर्थः । न हीतिविशेषणमन्यथा निरर्थकं भवेदिति प्रकारेण या हेतुता सा न हि परमार्थतश्चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वसम्बन्धस्य मलयमारुते असम्भवात् । **कारणत्वेन** इति । क्षामतागमनलक्षणे कार्ये इत्यर्थः । **आपाण्डुगण्डपाली** इति । अत्र मुखमुपमेयं तद्गतं च द्वितीयं मृगनाभिपत्रम् । उपमानं तु यथाक्रमं शशी लाञ्छनं च । एतस्य चोपमानशशिप्रतिबद्धस्य लाञ्छनस्योपमानान्तरस्य रूपेणोपमेयनायिकामुखगतमन्यदुपमेयं मृगनाभिपत्रं सारूप्यात् सम्भावितमिति सूत्रार्थयोजना ।

**कर्तुः** इति । यत्र सत्यप्यौपम्ये तद्द्योतको नेवादिः समन्वयोपरोधात् तु कर्त्तुरुपमानयोगः सम्भाव्यत इति सम्बन्धः । **विपरीताध्यवसानम्** इति मिथ्याज्ञानम् । **तदिव** इति सादृश्यपक्षे । **तदेव** इति तु सम्भावनानुमानपक्षे योजनीयम् । **काल्पनिकम्** इति । कल्पितं हि सादृश्यं सातिशयमेव भवति । **अत्र च** इति । काल्पनिकसादृश्येन या उत्प्रेक्षा तस्मिन् पक्षे इत्यर्थः । **उक्तचरम्** इति । **भामहे** उपमाऽसम्भवदोषपरिहारे **काव्यप्रकाशे** उत्प्रेक्षायां च । **आपीड** --इति मुखान्तर्गतरुतोपढौकनापेक्षमेत्येति पौर्वकाल्पम् । द्विरेफैः कृत्वा मकरध्वजेनाभ्यास्यमाने वेति सम्बन्धः । प्रधानक्रिया च वाक्यान्तरे । **राशीभूतः** इति । निर्वर्ण्यः कैलाशगिरिरत्र । **निर्मोक** --इति । उभयत्र निर्वर्ण्या गङ्गा कर्म । **तिक्खारुणं तम्** इति । आराद् दूरात् भेद एव भेदो द्रुतिरेव विदारणं तत्रेत्यर्थः । लोके हि तीक्ष्णः शरादिपदार्थोऽङ्गविदारणे लग्नरुधिरलेशो दृश्यत इति तद्धर्मसादृश्ये नयनयुगगततीक्ष्णारुणात्तत्त्वस्य विद्यमाने प्रस्तुतवस्तुधर्मोऽप्रस्तुतवस्तुधर्मत्वेन सम्भावित इत्युभयसाधनेयमुत्प्रेक्षा । **नीसासा** इति । हृदयस्थितः कुसुमबाणः पञ्चेषुरेव । **कुसुमबाणाः** बाणत्वेन रूपितानि कुसुमानि । तेषां मकरन्दलेश आकृष्टो यैस्ते तथेत्यर्थः । वसन्तर्तुविलासी ह्यनिलः आकृष्टकुसुममकरन्दलेशत्वेन सुरभिरनुभूयत इति तत्सादृश्ये सति रमणीनिःश्वाससमीरणानां यदेतत् स्वभावसौरभं तद्बाह्य एव न सौरभकारणकत्वेनोत्प्रेक्षितमितीयमप्युभयसाधनोत्प्रेक्षा । **उत्फुल्ल** --इति । अत्रापि पूर्ववदुभयसाधनत्वं भावनीयम् । अत्र चा[2]ऽसूत्रितार्थव्यतिरेकिवस्त्वन्तरविधानादपह्नुतिभ्रान्तिर्न विधातव्या । यतस्तस्याः प्रथमोद्भेदजीवितमुत्प्रेक्षा न पुनरपह्नुतिरेतस्याः । त[3]च्च **स्वयमेव** व्यक्तीकरिष्यति ।

य[4]**त्सेनारजसाम्** इति । अत्र ब्रह्मणः स्वाध्यायवन्ध्याननत्वं यदतिशयोक्त्योप-

---

१. क्रिया ॥ २. स्वाभाविक ॥ ३. एतच्च क. ग. २. ॥ ४. त-ग. २. ॥

वर्णितं तत्र संवरणाकुलत्वं कारणत्वेन सम्भावितमिति सम्भावनानुमानेनेयमुत्प्रेक्षेति । **वाक्यकल्पः** इति वाक्यकल्पनम् । **उत्प्रेक्षात्रयत्रः** इति । यत्र प्रधानक्रियाऽप्रधानक्रिया- श्चोत्प्रेक्ष्यन्ते । **उपेक्षितः** इति । ततोऽसौ न स्वीकर्तव्यश्चमत्कारकारित्वाभावात् । **पौरु- षेय**—इति । पौरुषेयव्यापार उत्प्रेक्षालक्षणः । **अपूर्वरूपताम्** इति । शफर्यादिरूपताम् । **इत्यन्ये** इति । तत एव च **ध्वनिकारेण** रूपकध्वनिरेवायमिति व्यपदिष्टम् । **अस्मा- भिरपि** ध्वनिस्वरूपनिरूपणे तन्मतेनैव तथैव प्रागुपदर्शितम् । **पल्लवे**ऽपि लक्षणाविचारे नृपतेर्भगवद्वासुदेवताक्षेपेण रूपकमेव प्रतीयमानं तथैवोपवर्णितमिति ।

**निश्चयः** इति । नेदमुपमेयमपि तूपमानमेव, नेदमुपमानमपि तूपमेयमेवेतिरूपः । **तदभावे** इति । नोपमेयं न चोपमानमिति कोटिद्वयसंस्पर्शे सति निश्चयाभावे इत्यर्थः । उपमेयमित्युपमानमिति च उपलक्षणपरे एते । तेनोपमानापह्नवेन यत्रोपमेयकथनं सोऽपि संशयो दृश्यत इत्यर्थः । अत एव च **विश्लेषः कथित** इत्यादीन्युदाहृतानि । यो **गोपीजन**—इति । गोपीजनस्य न तु मम[१]ैकस्याः । ग्रामीणजनस्य न तु नागरकलोकस्य च । स्तन- तटे न तु सिंहासने उत्तमाङ्गे च । छायावान् न त्वन्तःस्नेहनिर्भरः सारश्च । नवरक्तको न तु परिचितरागी स्थास्नुरागश्च । ईषदपरिसमाप्तगुणौ हीनगुणावुभावपि गुणाश्च दाक्षि- ण्यादयस्तन्तवश्च । चित्रः क्षणरक्तः विरक्तश्चित्रमात्रं चावस्तुरूपम् । चतुर्हस्तकोऽधिकहस्त- युग्मोऽतिप्रलम्बश्च । श्यामौ द्वावपि सुखच्छेदको मूर्द्धावधिश्चेति मुखे निन्दा परतः स्तुतिः । **गोपी** इति । सौभाग्याधिक्यं सौन्दर्याधिकत्वं च । स्तनेति मदनसर्वस्वभूतेऽङ्गे लब्धास्प- दत्वादुभयोरपि श्लाघातिशयः । छायोभयत्राऽपि शोभा । प्रथमानुरागः सद्योरञ्जितश्च । अनेकगुणोऽसङ्ख्यतन्तुश्च । विस्मयहेतुर्नानावर्णश्च । हस्ताधिक्येन सकलत्रैलोक्यातिशायी । निखिलाङ्गगोपनेन कुलस्त्रीणां मुख्यमाच्छादनं च । कृष्णनामा श्यामवर्णश्च । भर्त्ता कम- नीयश्चेति स्तुतिः । **किं वा तेन** इति । अत्र वातादय उपमानभूताः प्रतिषिद्धाः । **एव- मन्यदपि** इति । प्रकारान्तरं सम्भवति । तच्च यथेति शेषः । **एकस्य** इति । उपमेयस्योप- मानस्य वा । **तच्छायात्वम्** इति । एकत्वमुपमानप्रतिबिम्बत्वमुपमेयप्रतिबिम्बत्वं चेत्यर्थः । **सम्भावना** इति । **साम्य**—इति च । आभ्यां हेतुभ्यामुत्प्रेक्षासंस्पर्शः । **स्वरूप**— इति । अनेन च रूपकोल्लेखः ॥

**रञ्जिता तु** इति । अत्र तिमिरकर्तृकायां शैलगगनादिव्याप्तौ रञ्जितत्वमुत्प्रेक्षितं गगननामितत्वाद्युत्प्रेक्षान्तरसम्भवात् सन्देहमागतम् । **निमीलद्** इति । अत्र निमीलदाके- करलोलचक्षुष्ट्वादिषु साधारणेष्वनुभावेषु कार्यापरपर्यायेषु तैर्वा श्रमलक्षणं व्यभिचारिरूपं

---

१. कान्तपदस्य विवरणम् ॥

सहकार्यपरपर्यायमभेदोपचारेग प्रसिद्धकार्यानुमानस्थित्या वोत्प्रेक्षितं रत्यभिलाषापरपर्याय-मदनस्थायिभावोत्प्रेक्षान्तरसम्भवात् सन्देहमागतम् । एवमुत्तरत्रैकत्र विरुतविषयमुत्प्रेक्षाद्वय-मपरत्र वक्तृविषयमुत्प्रेक्षात्रयमिति । **भिन्ना** इति । निर्वृत्तत्वं निष्पन्नत्वं निष्पत्तिरिति यावत् । ततश्च भिन्नायां प्रवृत्तिलक्षणकार्यसिद्धौ कारणभेदादित्यर्थः । **एकार्थ** –इति । एकस्मिन्नर्थे निष्पत्तेर्निश्चितवृत्तेर्वा अभावात् । **गुणानामिति** चन्द्रशब्दस्येत्यर्थः । **यथा** इति । ह्लादकत्वादिगुणवृत्तित्वेन । **गुणानिति** चन्द्रशब्दमित्यर्थः । **तथा** इति गगनगते[1]त्वा-दिवृत्तित्वेन । **तदेतद्** इति । तं ह्लादकत्वादिकमेतस्य चन्द्रस्य गुणं स्वीकर्त्तुम् । **तथा त्वम्** इति चन्द्रत्वम् । **गुणवद्** इति । प्रधानायत्तत्वात् । **वाक्यार्थ**– इति । मुखोपमिति-सामर्थ्याक्षिप्तस्य चुम्बनाधारत्वादेः । पुष्पगतविशेषस्योपमेयायां साललतायामनुपयोगित्वेन चुम्बनस्य चानानुकूल्येनासङ्गतेरित्यर्थः । [2]शब्दालङ्कारोऽयमिति श्लिष्टे वाचके परम्परितं रूपकमित्येष उभयालङ्कारः । एकस्मिन् पदे परिवर्त्तिते हि नालङ्कार इति शब्दाश्रयोऽपर-स्मिंस्तु परिवर्त्तितेऽपि [3]न स हीयत इत्यर्थनिष्ठश्च । **उक्तम्** इति । शब्दश्लेषे पुनरुक्तवदा-भासे च शब्दार्थोभयगतत्वेनालङ्काराणां विभागकरणोपदर्शितयुक्त्युक्त्येत्यर्थः ॥

**वक्ष्यते** इति सङ्करालङ्कारे । **अत्र** इति । अर्थालङ्कारेषु । **एकदेश**– इति । एक-देशवृत्तिसंज्ञया हीदमन्येषामर्थालङ्कारेषु प्रसिद्धमित्यर्थः । **इहभवान्** इति पूज्यः । **समस्त-वस्तूनि** इति । समुच्चयेनास्यन्ते क्षिप्यन्ते इति समस्तानि [4]च तानि वस्तूनि चेति । **अर्थान्तरम्** इति अर्जनादि । **तद्रूपेण** इति तदारोपेणेत्यर्थः । **[5]यद्रूपणम्** इति विशिखा-दिना । **अन्यदा** इति प्रकृतार्थप्रतीतिकालादन्यस्मिन् काले । **एवं न्याय** इति एवं प्रकारं साधकं प्रमाणं रूपके इत्यर्थः ।

**ललना** इति । ललना उपमानं सरोरुहिण्यश्चोपमेयं शरद्वर्णनं हि प्रस्तुतमभि-सन्धाय श्लोकोऽयमुपर[6]चितः सम्भाव्यते, उपमायां तथैव व्यक्तमुपनिबद्धत्वात् । **[7]यस्या बीजम्** इति । यद्यत्रोपमेयगतमुभयावयवत्वं नास्ति तदेदमुदाहार्यम् ।

अलिभिः कुन्तलपाशैश्चक्रैश्च कुचैः सरोरुहैर्वदनैः ।
हंसैर्वासोभिरिमा विभान्ति वाप्यो विलासिन्यः ॥

अलिचक्रहंसानामाहार्यत्वात् सरोरुहाणां च सहजत्वाद् वापीषु इति । **अनुप-योगीति** । अवयवत्वाभावात् । न हि प्रावृड् गगनस्यावयवः । **जल[8]दोपप्लवस्य** इति । कालविशेषवाचिना प्रावृट्शब्देन लक्षितस्येत्यर्थः । तेन जलदोपप्लवो विपदिति रूपगमुप-

१. –ति– ग. २ ॥ २. शब्दार्थालङ्कारो– ग. २. ॥ ३. स न हीयत– क. ग. २. ॥ ४. ग. २ पुस्तके च तानि इति पाठो नास्ति ॥ ५. यद्रूपमिति ग. २. ॥ ६. –रि ग. २. ॥ ७. तस्या ग. २. ॥ ८. जलदस्येत्यर्थः ख. पुस्तके एव ॥

पर्वत एव । **आहार्यताम्** इति आहार्यावयवतामित्यर्थः । **इन्द्रस्त्वम्** इति । अत्र बाहू रसना च सहजाः खड्गस्त्वाहार्य इत्युभयावयवता । **अर्थयोः** इति उपमेयोपमानयोरवयविनोः । **गण्डफलकैः** इति । गण्डा एव लवूनि फलानि तैः । अत्र प्रमदाः शाब्द्या वृत्त्या लताभिर्न रूपिता इत्येकदेशिता । **विशेषोपमा** इति । अविभक्तत्वमत्र विशेषः ॥

**विच्छित्तेः कारणम्** इति । उपशोभाया निमित्तभूतं यत्तदेव न पुनर्ज्ञेयत्वप्रमेयत्वादिना यत्तदित्यर्थः । **विवर्त्तनम्** इति । विशेषेण वर्त्तनं रूपकस्येत्यर्थः । **प्रतीत्यन्तर** इति । अर्थान्तरप्रतीतिविधायीनि यानि विशेषणानि ये च विशिष्टे लिङ्गे तेषां सामर्थ्यात् । **उपलक्षणत्वेन वा** इति । यदि वा तया रात्र्या उपलक्षणभूतया न लक्षितमिति सम्बन्धः । **न ज्ञातम्** इति लोकेनेत्यर्थः । **अनन्तर** इति तेन न लक्षितं चेत्यर्थः । **अत्र च** इति । अनयोश्चार्थयोर्मध्यात् पश्चाद्गतनायकचुम्बनोपक्रमलक्षणो योऽर्थस्तस्मिन् रूपकं प्रतीयमानमेवेति । मुखे शशिनीत्येवंरूपम् । एतदेवोपदर्शितं **मुखं सन्ध्यारुण**— इति ॥

**शब्दभूयिष्ठरूपक**—इति । गौणवृत्तिव्यपाश्रयाणां शब्दानां समासादिमात्रभणनादत्र प्राधान्यं नत्वर्थस्य, क्रियासमावेशादेरभावादिति प्रधानैः शब्दैरेव व्यपदेशः । **समस्तम्** इति समासवत् । **व्यस्तम्** इति अकृतसमासम् । **प्रकृतसमासादिशब्दैः** इति । प्रकृतसमासैः प्रकृतासमासैः प्रकृतसमासासमासैः प्रकृतविशेषणैर्गौणवृत्तिव्यपाश्रयैः शब्दैर्विरचितम् इति । **प्रकृतम्** इति । परम्परादिभिर्विकारस्याभावात् स्वाभाविकमित्यर्थः । **अकस्मादेव** इति । अत्र मुखस्य विटपिरूपणमशाब्दमित्यसमस्तवस्तुविषयता । **तस्य तु** इति नन्दनशब्दस्य । **अपह्रियते** इति क्रियासमावेशस्याभावात् । **शब्दार्थभूयिष्ठरूपके** इति । अनुमन्यामहे तावद्विविक्ते अपि शब्दभूयिष्ठार्थभूयिष्ठते रूपकस्य, शब्दार्थभूयिष्ठता तु कथञ्चिदपि न मनसि संवदति । को हि विशेषस्ताम्राङ्गुलिदलेत्यादेरर्थप्रधानात् **सोहइ विसुद्धेत्यादेः**, विशेषणविशिष्टस्य विशेष्यस्योभयत्रापि समान एव हि क्रियासमावेशः । किञ्च यदलङ्कारान्तरसम्पाते सङ्कीर्णत्वमस्य विशेषतो विनिर्दिश्यते, तदपि न सहृदयहृदयावर्जकम् । उपमादीनामपि हि तन्निर्देश्यं स्यात् । न च सङ्कीर्णत्वाऽपरनामिका संसृष्टिरपि पृथग् वक्तव्या भवेत् । तत् किमुच्यते यथा तथाऽपि भेदप्रपञ्चनैकरसिकस्यास्य । **राजराजो ह्यसाविति** । **वणराइ केसहत्था** इति । अत्र धूमोत्पीडानां वनराजिकेशहस्तत्वेन कुसुमायुधसुरभिसञ्चरद्ध्वजपटत्वेन शशिकरसुहृत्तमेधत्वेन तमःप्रतिहस्तरूपेण च रूपितानां निराधाराणामेव शब्दप्राधान्यमर्थप्राधान्यं चावधार्यत इति निराधारं

१. –युज्यते ग. २. ॥ २. इत्येकदेशिताः ग. २. ॥ ३. मुख– ग. २. ॥ ४. उपमान ख पुस्तके एव ॥ ५. –श्य –ग. २. ॥ ६. ह्यसावेति क ॥

नामरूपकमिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरूपकभेदः । **महुमहदंसणयो[1]ग्गम्** इति । मधुमथनदर्शनयोग्यं तन्नाभ्याधारत्वाद् ब्रह्मोत्पत्तिकमलस्य । सुप्तप्रबुद्धेन हरिणा प्रथममाकाशावलोकनाच्च । **द्वयोस्तु** इति । उपमां परित्यज्य यद्यवयवानामपि रूपणं क्रियत इत्यर्थः । **घणसमय**– इति । घनसमयाकृष्टावनतविमुक्ता, वर्षासु निम्नत्वात् शरद्युन्नतत्वादिशामिति । **तदुभयम्** इति । धुतमेवमधुकराः दिशः शाखा इति नभः पादप इति च । **अन्यपदार्थ**–इति । **धुतमेवमधुकरा** इति बहुव्रीहिणा दिक्शाखापदार्थनिष्ठेन दिक्शाखानां सावयवत्त्वम् । नभःपादपस्य शाखा इति षष्ठीसमासेन च नभसः पादपरूपेण रूपितस्य तन्निमित्तम् । अनन्तरं दिशां शाखारूपेण रूपणमिति नभसः पादपरूपणोपक्रमावसरे त[2]द्गतानामवयवानां न रूपणमिति नभःपादपस्य निरवयवत्वं प्रत्याज्यते ।

**एषा** इति अभिधा इति । [3]असावपह्नुतिसंज्ञेत्यर्थः । **भास्वान्** इति नेमावादित्यचन्द्रावपि तु शाणावित्यर्थः । **रक्षकावगतिहेतोः** इति रोमोद्भेदलक्षणात् कार्यात् प्रागेवेत्यर्थः ।

**एकस्मिन्** इति । एकस्य वाक्यार्थस्य प्रतिपादनादित्यर्थः । **अनेकार्थता** इति । विभां करोतीत्येकमेव हि यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपलक्षणार्थद्वयप्रतिपादको भवतीति उदयादिशब्दा अप्येकार्थप्रतिपादका एव सन्तोऽनेकार्थाः । तथा ह्युदयलक्षण एक एवार्थ एकत्रोद्गमोऽपरत्रोन्नतिः । दिशः ककुभस्तत्स्थाः प्रजाश्च । मालिन्यं कालिमा कलङ्कश्च । निद्रा स्वापोऽप्रबोधश्च । क्रिया यमनियमादयः पाशुपाल्यादयश्च । स्वैराचारोऽभिसरणादिर्मात्स्यन्यायश्च । तेजो ज्योतिः प्रतापश्च । **तत्सदृशत्व**–इति । अर्थकथनपरमेवैतत् । यथा हि गोत्ववृत्तेरपि गोशब्दाद् गोर्भावो गोत्वमिति भावप्रत्ययस्तथेहापीति । **उभयथाऽपि** इति । यद्युपमेयस्योपमानरूपता तदा रूपकमथोपमानसादृश्यं तदोपमेति नामुना श्लिष्टेन कश्चिदर्थः । **न कथञ्चिज्जन्यते** इति । अपि तु प्रतिपाद्यत इत्यर्थः । किञ्च **लक्षणं रूपकेपीदम्** इत्येष वक्ष्यमाणश्लोकः किलैवं यद्वृत्त्यन्तरकारकैर्व्याख्यायि–काममिदं श्लेषलक्षणं रूपकेऽपि विद्यते, किन्त्वत्र रूपके युगपदुपमानोपमेययोः प्रयुक्तिरिष्टेति तन्न युक्तमित्याह– **यदप्येतदाशङ्कितम्** इत्यादि । **एकपद्यम्** इति समासम् । **एतेनेत्यादि** [4]असमासेऽपि रूपणाया दृश्यमानत्वादेकप्रयत्नोच्चार्यशब्दतायाश्चासम्भवाद्रूपकस्य श्लिष्टाद्भेदप्रदर्शनपरतया **शीकराम्भोमदसृज** इति यन्निदर्शनं वक्ष्यते तन्नोपपद्यत इत्यर्थः ।

अपि च **श्लेषादेवार्थवचसो**रित्यादिवक्ष्यमाणश्लोकः श्लिष्टस्य शब्दार्थद्वारकभेद-

---

१. –जो–ग. २. ॥ २. नभः ख. पुस्तके एव ॥ ३. च असा-ग. २. क. । ४. असमासे रूपणायाः ग. २. ॥

पुरस्सरं त्रैविध्यदर्शनपरतया यदन्यैर्व्याख्यातस्तदपि नोपपन्नमित्याह—**श्लेषादेवार्थ** —इति। **को हि विशेषः** इति । यथा कमलमिव मुखं मनोज्ञमित्यत्र मनोज्ञतालक्षणोऽर्थः कमले मुखे चानुगच्छति, एवं कृष्णः पट इव मधुसूदन इत्यत्र कृष्णशब्दो देवताविशेषे वर्णविशेषवति चार्थेऽनुवर्त्तत इति न कश्चिद्विशेषः । **अर्थश्लेषेऽपि** इति । असम्भाव्यसम्भावनायामपिशब्दः, गम्यमानो लीन इति गम्यमानत्वादेव लीन इत्यर्थः । **शब्दाः** इति कृष्णादिशब्दा इत्यर्थः । **स्वरूपतः** इति । शब्दार्थश्लेषविषयरूपद्वयविरहितात् स्वरूपमात्रादित्यर्थः । **अनुगमाभावोऽभिसंहितः** इति । अनेन हि शब्दानुगमाभावादिति यदुक्तं तदन्तरितम् । **तस्य** इति शब्दस्वरूपमात्रस्येत्यर्थः । **स्वाभिधेय—** इति प्रकृत[1]स्वाभिधेयाङ्गतयेत्यर्थः । **अर्थक्रियासु** इति । उपमानोपमेयभावलक्षणासु । **तन्नान्तरीयकतया** इति । तच्छब्देनार्थः परामृश्यते । **फलवत्त्वेन** इति । सहृदयमनश्चमत्कारः फलमत्र । **फलवदर्थत्वेन** इति । फलवच्छब्दप्रयोजनत्वेनेत्यर्थः । **तस्य** इति अर्थप्राधान्यस्य । अर्थश्लेषेऽपि शब्दगतवक्रत्वेऽभ्युपगम्यमाने विघटितायामुभयालङ्कारतायां श्लेषस्य शब्दालङ्कारतैव भवेत्, ततश्चोक्तेभ्यः शब्दालङ्कारमात्रेभ्यो यमकादिभ्यः कोऽस्य विशेष इति मुग्धबुद्धीनां व्याख्यातृणामाशङ्कामाह—**अथैवम्** इति । **उच्यते** इति । समाधीयते ।

**एकरूप—** इति । इह श्लिष्टलक्षणानुवादवेलायामेकं रूपं स्वभावो यस्य तस्यैकरूपस्यैक[2]स्यैव शब्दस्य न द्वयोः। अनुप्रासलक्षणयोरनावसरे त्वेकं साधारणं रूपं यस्य[3] सदृशवर्णस्य शब्दस्य शब्दयोर्वोपादानमितीदं श्लेषच्छायया व्याख्येयम् । यद्यपि सदृशशब्दोपादानमपि श्लिष्टरूपताप्रतिषेधे हेतुर्भवति, तथापि यथाऽर्थं प्रति पारतन्त्र्याभावश्चमत्कृतिकारी तथा नेदमिति स एव तत्र निमित्तत्वेनोपदर्शयिष्यत इति तदपेक्षयाऽसारत्वादनुवादरूपतयैवेदं प्रदर्शितमिति नासूयितव्यम् । **शब्द—** इति । शब्दभेद एकार्थत्वाभासश्चेति । **हेतू द्वौ** इति । इति स्थितमिति किं कुर्मः । एकस्मादेव च शब्दादर्थद्वयस्य प्रतीतावर्थश्लेष इति युष्मद्व्याख्यायां न केवलमर्थश्लेषस्योपमात्वप्रसक्तिः, शब्दालङ्कारताऽपि दुर्निवारा । न च न भिन्नो यमकादिभ्यः श्लेष इत्यर्थः ।

पूर्वमेकमेव कृष्णादिशब्दमङ्गीकृत्य दूषणानि प्रदत्तानि । सम्प्रति तु तस्यैकत्वमेव न घटत इत्याह— **यत्रैक एव** इति । **अवयवानाम्** इति । **धर्माणां भेदेन** इति । यत्रोभयधर्माः प्रकृताप्रकृतधर्मिभ्यां[4] भेदेनैव श्लिष्यन्ते । यथा उन्नतः प्रोल्लसद्धारः इति । **अभेदेन** इति । यत्र प्रकृतोऽप्रकृतो[5] वा धर्मी अप्रकृतधर्मेण प्रकृतधर्मेण वाऽभेदेनैव

१. प्रकृति— ग २. ॥ २. रूपस्यैव ग. २. ॥ ३. यस्य तस्य साधारणरूपस्य क. ग. २. ॥ ४. प्रकृताभ्यां धर्मिभ्याम् ग. २ ॥ ५. यत्र प्रकृतो वा धर्मी अप्रकृतधर्मेण प्रकृतधर्मेण वाऽभेदेनैव श्लिष्यते । ग. २. ॥

श्लिष्यते । यथा जीवञ्जीवक इत्यादौ । **भेदाभेदाभ्याम्** इति । यत्र पूर्वोक्तमुभयं भवति । **अलङ्कारः** इति उपमादिः । एतदेव वक्ष्यते **किं तद्** इत्यादिना । **करोति** इति । अत्र कर्तृ श्लिष्टम् । **पश्चात्तु** इति । अयमाशयः । यत्र श्लिष्टालङ्कारविरहिता उपमादयोऽलङ्कारास्तत्र तैर्व्यपदेश उपपन्नः । यत्र तु श्लिष्टोपनिबन्धस्तत्र सत्स्वपि उपमादिषु श्लिष्टालङ्कारेणैव व्यपदेशोऽनुगुणः । सर्वालङ्कारापवादत्वेन श्लिष्टस्य व्यवस्थितेरिति हि तत्र तत्र वक्ष्यते । [1]**वाक्यान्तरप्रतिभा वा** इति । अलङ्कारान्तरपर्यवसायित्वेनालङ्कारान्तरप्रत्याशया सङ्गृहीताऽप्युपक्रमावस्थायामलङ्कारान्तरस्याप्रतीतेर्वाक्यार्थान्तरप्रतिभा पृथगुपदर्शिता । **उपक्रान्तस्य** इति प्रस्तुतस्य । **विरोधाद्यलङ्कारान्तरम्** इति । वाक्यार्थान्तरद्वारकम् । **आदि**ग्रहणाद्रूपकपरिग्रहः ।

**अत्रोपमाप्रतिभा** इति । कामिनीलक्षणप्रकृतार्थप्रतीत्यनन्तर शब्दशक्त्यन्तरसामर्थ्याक्षिप्तं प्रावृड्लक्षणमर्थान्तरं प्रतिभाति इति वाक्यार्थान्तरप्रतिभायामप्युपमालङ्कारपर्यवसायित्वापेक्षयोपमाप्रतिभैवोपवर्णिता । न्यायश्चायमन्यत्राऽप्यनुसरणीयः । एतच्च वाक्यार्थान्तरप्रतिभायां पूर्वत्रोदाहरणीयमप्यनन्तरमेवाभिधित्सितसमासोक्त्यलङ्कारत्वाक्षेपे भ्रमिमरतिमित्यादिना समानयोगक्षेममित्यत्रोदाहृतम् । **प्रकृतार्थम्** इति । [2]प्रकृतार्थं वाक्यं प्रकृ[3]तार्थनिष्ठत्वेन वाक्यार्थस्योपक्रान्तत्वात् समानविशेषणताद्वारेणाक्षेप्यमर्थान्तरं नाक्षिपत्यपि तूपक्रम एवात्राप्युभयार्थप्रतिपत्तिः । **विनिबन्धनान्तरम्** इति । लिङ्गविशेष[4]प्रभृति तत्पर्यालोचनं विनेत्यर्थः[5] । **शब्दवाच्यत्वम्** इति । रूपकशब्दवाच्यत्वं रूपकव्यपदेश इति यावत् । **जीवञ्जीवकः** इति । अत्र रूपकप्रतिभोत्पत्तिहेतुः श्लेषः । **प्रकृताप्रकृतोभयनिष्ठतया** इति । प्रकृतार्थद्वयविषयोऽप्रकृतार्थद्वयविषयः प्रकृताप्रकृतार्थविषयश्चेति त्रिधा शब्दश्लेषः । ए[6]वमर्थश्लेषः । उभयश्लेषश्च प्रत्येकं त्रिधेति नवधा श्लिष्टम् । पुनश्चावयवानां भेदे[7]नाभेदेन भेदाभेदाभ्यां प्रत्येकं त्रैविध्ये सप्तविंशतिधा श्लिष्टं प्रागुक्तमवगन्तव्यम् । **समानप्रयत्नोच्चार्यशब्दनिबन्धनायाः** इति । तुल्यकालमुक्तिरेकप्रयत्नोच्चार्यैरेव शब्दैः सम्भवतीति त एव निबन्धनमस्याः । **एतेन** इति । प्रकृताप्रकृतोभयरूपाणामर्थानां सहोक्तेः समानप्रयत्नोच्चार्यशब्दनिबन्धनत्वेनेत्यर्थः । **अङ्गसत्त्वाद्** इति । गुणादिशब्दा अभग्ना अपि स्वभावतोऽर्थद्वयवाचित्वेनैकप्रयत्नोच्चार्या एव भवन्तीत्यङ्गसत्वम् । यदा हि सत्कविप्रयत्नेन भज्यमाना अर्थद्वयवाचितां प्रतिपद्यन्ते

---

१. वाक्यार्थान्तरप्रतिभा वेति ग. २. ॥ २. अप्रकृतार्थं ग २ ॥ ३. प्रकृतार्थमिष्टत्वेन ग. २ ॥ ४. -प्रकृति क. ॥ ५. विरं ही धनेति त्रिरं ही धननिचयमित्येष यः कर्मभावस्तेन ग. २. पुस्तके अधिकः पाठः ॥ ६. एवमर्थश्लेषश्च ग. २. ॥ ७. भेदाभेदेन ग. २. ॥

तदैकप्रयत्नोचार्यत्वाभावात् कुतस्तदिति। अतश्चाञ्जसत्वमत्रैकप्रयत्नोच्चार्याणां शब्दानाम्। उपमानं ह्युत्कृष्टगुणं भवेदुत्कृष्टगुणत्वं च तेषां स्वभावतोऽर्थद्वयप्रतिपादनशक्तिमत्तयेति। **मिथः प्रतिपाद्य**– इति। शब्देन शब्दान्तरप्रतिपत्तिर्वचःश्लिष्टे यथा विधीयते तथा नात्रेति भावः।

छायावन्त इत्यत्र तुल्ययोगिता। छायया मार्गद्रुमाणां महतां चोभयेषामपि वर्ण्यमानत्वम्, उत दीपकच्छायायाऽन्यतरेषामिति पक्षद्वयमेव सम्भवति। तदाह– **प्राकरणिकैकविषयत्वम्** इति। यच्चाप्राकरणिकैकविषयत्वं तस्य शङ्काऽपि नात्राविर्भवति। यत्र हि कस्मिंश्चित् प्रधानत्वेन वर्ण्यमाने तदङ्गत्वेन द्वयोरर्थयोः कयोश्चिद्वर्णना भवति तत्रैव तस्य सम्भवो नान्यत्रेति। **अत्र** इति उभयत्रेत्यर्थः। **उच्यमान**– इति। उच्यमानो हि धर्मः एकत्र लक्ष्मीवत्तादिरन्यत्रोपरिसमारोहणधर्मतादिरित्यसाधारणधर्मत्वात् कुतः सादृश्यं कुतश्चोपमा पदं बध्नीयात्। उन्नतादिश्च शब्दग्राम उभयत्र साधारण इति तस्मात् साम्यं प्रतिभातीत्यर्थः। **मालाम्बुत्पल** –इति। अत्र यदा वा शब्द उपमानवृत्तिस्तदाऽयम् उपमाप्रतिभाहेतुरुभयश्लेषः प्राकरणिकाप्राकरणिकनिष्ठः। यदा चार्थवृत्तिस्तदायं तुल्ययोगिताप्रतिभाहेतुरुभयश्लेषः प्राकरणिकैकविषयः। **पृथु[रु?]रसि**– इति। अत्र रूपकप्रतिभाहेतुरुभयश्लेषः प्राकरणिकाप्राकरणिकनिष्ठः। **हरितः** इति। अत्रोपमाप्रतिभाहेतुरुभयश्लेष उभयनिष्ठः। **चित्तहर**– इति। अत्रैकदेशविवर्त्तिरूपकोत्प्रेक्षाप्रतिभाहेतुरुभयश्लेष. प्राकरणिकाप्राकरणिकनिष्ठः। **धर्मभेदात्** इति। धर्माः स्वरविशेषादयः। **वाक्यार्थ**– इति। वाक्यार्थद्वितयमात्रश्लेषविषय इत्यर्थः। तेन न वाक्यार्थद्वितयमात्रश्लेषं प्रतिपादयामोऽपि तु प्राकरणिकत्वाप्राकरणिकत्वविशिष्टमेव श्लेषमिति सम्बन्धः। शेषं सुगमम्। **अबिन्दुसुन्दरीत्यत्र** इति। द्वितीयवाक्यस्थेनाद्युदात्तत्वमित्यनेन सम्बन्धः। **उपमानत्वात्** इति पूर्वपदस्येत्यर्थः। **तस्य** इति पूर्वपदस्योपमानवाचिनः। **इत्यादौ** इति अलङ्कारान्तरप्रतिभाव्यतिरिक्ते विषय इत्यर्थः। **श्लेषे** इति। शब्दोक्तिविशिष्टे अर्थोक्तिविशिष्टे चेत्यर्थः। **उपमारूपत्वमेव** इति। उपमैव शब्दालङ्कारइत्यर्थः। **तथाहि** इति। सङ्करत्वोपमारूपत्वयोः प्रदर्शनार्थमिदम्। **उपदर्शितः** इति। ते गच्छन्तीति श्लोकभागः समानप्रयत्नोचार्यशब्दनिबद्ध इत्यर्थः। **एवं च** इति अनेनैव प्रकारेणेत्यर्थः। यथैव पल्लवेत्यादौ सामान्यशब्दवाच्यत्वेऽप्युपमैव न्यायवती, तथैवाऽऽसारधारेत्यादौ भवदुक्तमपि परम्परिताऽपरपर्यायमेकदेशविवर्त्तिरूपकं युज्यते, नान्यथा। तथा हि सामान्यशब्देनाभिधीयमानेऽर्थद्वये प्रसाधनमेव प्रसाधनमिति रूपणं, तन्निमित्तमेव चाऽऽसारधारादीनां विशिखादिभी रूपणमुपपद्यत इति सामान्यशब्दवाच्यत्वमस्य रूपकस्यैव मौलं निमित्तं न श्लेषस्य।

१. प्रतिपाद्यते ग. २ ॥

**श्लेषाभासो हि स** इति । सामान्यशब्दवाच्यत्वेऽप्येकदेशविवर्त्तिरूपकव्यपदेशः समुचितं इत्यर्थः । **अस्य** इति । प्रसाध्यते स्मेत्यादेरेकदेशविवर्त्तिरूपकोदाहरणस्य । **श्लिष्टवाच्यत्वम्** इति । श्लिष्टव्यपदेश्यत्वमिति यावत् । **अर्थः** इति । शब्दो वार्थो वा । **भानुदीप्यमान**– इति भास्वच्छब्दस्य स्थाने इत्यर्थः । **अस्य** इति श्लिष्टस्य । **युक्तम्** इति । तस्माच्छब्दस्यैवायमलङ्कार इत्यर्थः । **अनेकाक्षेपः** इति । सर्वं वाक्यं सावधारणमिति न्यायात् प्रतियोगिन्यामनेकप्रयत्नोच्चार्यतायां सम्भवन्त्यामेव एकप्रयत्नोच्चार्यत्वमुपपद्यते । अनेकप्रयत्नोच्चार्यतासम्भवश्च शब्दानेकत्व एव सङ्गच्छत इति शब्दानामनेकत्वाक्षेपः । **एवं च** इति । यथा पल्लवेत्यादावुपमा, आसारधारेत्यादौ रूपकविशेषो, भास्वत्करविराजिनीत्यत्र च शब्दालङ्कारत्वं तथैवेत्यर्थः । **एवमन्येऽपि** इति । छायावन्तो गतव्याला इत्यादौ तुल्ययोगिताप्रभृतयः शब्दालङ्कारा ज्ञेयाः । न[नु?] तुल्ययोगितावलङ्कारान्तरप्रतिभाहेतवोऽर्थश्लेषाः शब्दश्लेषाश्च । तत्रापि हि आसारधारेत्यादौ गड्डरिकाप्रवाहेणाऽपि रूपकविशेषो व्यतिरेकविशेषश्चेति यद् व्यपदिष्टं सा प्रयत्नमन्तरेणाऽप्यसमत्समीहितस्य सिद्धिः समुपजातेति तत्र यत् साध्यं तदेव साधयितुमाह– **तथाहि** इति ।

**यद्वैचित्र्यम्** इति । यस्य वैचित्र्यम् । **चिन्त्यम्** इति । विरोधव्याजाऽसम्भवावयवतत्त्वविरोधाभासश्लेषेषु विरोधव्याजस्तुतिव्यतिरेकरूपकरूपकविरोधालङ्कारसंस्पर्शः स्फुटमेव हि प्रतीयते । **कान्ताम्** इति अङ्गनां कमनीयां च । **शब्दार्थयोः** इति । शरदिन्दुप्रभृतीनि विशेषणानि समानार्थानीति शब्दसाम्यम् । द्वावप्यर्थौ विशेषरूपावित्यर्थसाम्यम् । **आशा** आस्था दिशश्च । **फलानि** कार्यसिद्धयः प्रसिद्धानि च । **रजः** कल्मषं रेणुश्च । **यद्वा** इति । अरविन्दस्थलानां, वारिपूरेण स्थलानां च । अत्र शब्दश्लेषोऽपि । **वाहिन्यः** सेना नद्यश्च । **राजहंसाः** प्रकृष्टा राजानः पक्षिविशेषाश्च । **देवो** राजा जीमूतश्च । **निस्त्रिंश** इति खड्गधारा अप्रतनुत्ववेगवत्त्वानवच्छिन्नत्वैर्नृशंसाश्च वारिधाराः । **भूभृतो** राजानः पर्वताश्च । **प्रतापः** पौरुषं तेजः प्रकृष्टश्च तापः । **त्वया मदर्थ** इति अत्र स्तुतितो निन्दा । **नो भीतम्** इति । अत्र निन्दायाः स्तुतिः । **अब्धिवधौ** इति । अब्धिधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् । यथा भयं वर्षम् । **कुगभावाद्** इति । "कुग्जनस्य परस्य च" इत्यादिना जनप्रभृतीनां कियतामेव शब्दानाङ्कुको विधानं न स्वशब्दस्य ।

**सत्यपि** इति अभ्युपगममात्रमिदम् । **कलावतः** इति । कस्याश्चित् कुलस्त्रियो रूप-

---

१. तथेत्यर्थः ग. २. ॥ २. न तु ग. २. ॥ ३. आशा इति ग २. । आशा आस्था ॥ ४. पुरुषसत्कम् ॥

वर्णनं क्रियते । यया मुखेनाखण्डः शशी जितस्तया हस्तशोभया पद्ममपि नूनं जीयत इत्यर्थः । परोऽर्थः गणिकावर्णनं नाम । विदग्धसहेलानां यया सर्वस्वं जग्धं तस्या आर्जवधनं हस्तस्थमेवेत्यर्थः । अस्मिंश्चार्थे सुप्रापमिति विवक्षिते हस्तगमिति लौकिकी उक्तिः कृता । एतदेवाह—**अत्र सुप्रापेति** । **कलत्रं** नितम्बः सहचरी च । **एक**मद्वितीयमेकत्वसङ्ख्यावच्च । **द्वयोः** इति । ऊरुविशेषणमर्थात् पुरुषविशेषणं च । **सङ्घर्षः** सङ्घृष्टिः परस्परं कलहश्च । अत्र स्पर्द्धेतिविवक्षितादन्या सङ्घर्ष इत्युक्तिः प्रकृतमर्थं पुष्णाति । **उपास्येति** । **वैबुधं** विद्वज्जनसम्बन्धि देवकीयं च । **सरस्वतीं** वाणीं नदीविशेषं च । **जलं** जाड्यं वारि च । **पारमन्तः** परतटं च । **निम्ना** अधमपुरुषा नीचप्रदेशाश्च । **प्रतिमा** प्रतिबिम्बमद्वितीयेति यावत् मूर्त्तिश्च । **अवयवमुख**— इति अवयवद्वारेण कृतानि समुदायस्य विशेषणानि यत्र स तथोक्तः । **यत्र वाक्यम्** इति । यत्र वाक्यं कर्तृप्रस्तुतवाक्यार्थाभिधायि कर्तृप्रस्तुतं प्रस्तुतवाक्यार्थानुगतमविरुद्धं च सत्पदार्थद्वय[पदार्थद्वय]मन्यदिवाऽप्रस्तुतमिव पृथग्भूतमिव प्रस्तुतवाक्यार्थाननुयायीव विरुद्धमिव चाभासमानं गमयेदित्यर्थः ।

**प्राग्** इति विरोधश्लेषे । **गुणक्रिया** इति । गुणरूपाणां क्रियारूपाणां शब्दरूपाणां च । शब्दार्थौ समानप्रयत्नोच्चार्यच्छायाधारिणोऽत्र विवक्षिताः । **अर्थभेदेन** शब्दभेदस्य स्वकण्ठेनानुक्तेरुदाहरणाप्रदर्शनेन चानभ्युपगमात् । **योऽयम्** इति । यदिदं मुखं, एषोऽयं चन्द्र इत्यर्थः । यच्छब्दनिर्दिष्टो ह्यर्थः प्रत्यक्षनिर्दिश्यमानत्वनिमित्तमेतच्छब्देन परामृष्टः । **श्लेषप्रकाराणाम्** इति । दत्तानन्दा इत्यत्रार्थश्लेषोऽभङ्गशब्दश्लेषो वा । येन ध्वस्तेत्यत्र सभङ्गशब्दश्लेषः । **का गतिः** इति । एतल्लक्षणेनाव्याप्तेरिति भावः । **एकरूपता** इति । समानप्रयत्नोच्चार्यच्छायाधारितायाः । **अलङ्कारान्तररूपसाङ्कर्ये तु** इति । अयमभिप्रायः । सर्व एव विषयोऽलङ्कारान्तरैराक्रान्त इति निरवकाशतया तान्यपवदतीति श्लेष एव तेषामनुग्राह्य इति यदन्यैः प्रतिपादितं तन्न समीचीनम् । असावुदयमित्यादिरलङ्कारान्तरविविक्तोऽपि हि विषयः श्लेषस्य सम्भवतीति तत्साङ्कर्ये तान्येव तस्यानुग्राह्याणीति ।

**प्रागेवोदाहृताः** इति । आक्षेपादीनामत्र ग्रन्थे प्रागुक्तत्वात् । **तुल्ययोगिता ह्यलङ्कारान्तराणामिति** । प्रथमतृतीयषष्ठसप्तमेषूदाहरणेषु तुल्ययोगिताविरोधरूपकविरोधानां, द्वितीयचतुर्थयोस्तुल्ययोगिताऽतिशयोक्त्योः समुच्चयपरिसङ्ख्ययोर्वा, पञ्चमे चातिशयो-

---

१ अपरोऽर्थः ग. २. ॥ २. कलत्रमिति कलत्रं ग. २. ॥ ३. -मनर्थं ग. २. ॥ ४. बिम्बं द्वि- ग. २ ॥ ५ यत्र वाक्यमिति इत्यारभ्य गमयेदित्यर्थः इत्यवधिकः पाठः नास्ति ग. २. पुस्तके ॥ ६. हि ग. २. ॥ ७. मतान्तरेण ॥ ८. –गमाद् वा ग. २ ॥ ९. का मतेन ॥ १० अन्यालङ्कारमतेनानैकत्वयोरभणनात् । ख. पुस्तके एव ॥ ११ वा- ग. २. ॥

क्त्याक्षेपयोः परिसङ्ख्याक्षेपयोर्वेति । **समान**– इति समानप्रयत्नोच्चार्यशब्दकर्तृकं वाच्यत्वमर्थयोरिति संबन्धः । **पदान्तरम्** इति । यत्र विशेषणानि श्लिष्टानि विशेष्याभिधायिनी च पदे अश्लिष्टे तत्र समासोपमायां रूपकससन्देहादौ अप्रकृतार्थाभिधायि यत्पदान्तरं तदेतस्य श्लिष्टस्य प्रतिपादकमित्यर्थः । **इवादिर्वा** इति । इव वा चकारप्रभृतिर्वा वाचकविशेषः । **वाक्यसामर्थ्यमेव वा** इति । यत्र विशेष्यमपि श्लिष्टं येन ध्वस्तमनोभवे[ने]त्यादौ, यत्र चाश्लिष्टं विशेष्यं समासोक्त्यादौ तत्र वाक्यसामर्थ्यमेव केवलमेतस्य श्लेषस्य प्रतिपादकमित्यर्थः ।

**अत्र च** इति । एतेषु त्रिष्वपि प्रकारेषु । **अर्थयोः** इति । अर्थश्लेषे द्वयोरर्थयोरुल्लेखे एकं तन्त्रम् । शब्दश्लेषे शब्दयोरर्थयोश्चोल्लेखेऽपरं तन्त्रम् । उभयश्लेषे तदेवोक्तं तन्त्रद्वयमित्यर्थः । **तुल्यशब्दस्मृतेः** इति । यदि च तन्त्रं नाश्रीयते तदैकार्थस्य शब्दस्य स्मृत्या तुल्याऽनेकार्थस्य शब्दस्य या स्मृतिस्तस्याः कुतोऽर्थान्तरं प्रतीयते । स्मृतिरेव ह्यर्थस्य प्रतिपादिकेत्याह–**शब्दस्येत्यादि** । **श्लेषः** इति । यत्रैकेन पदेनानेकार्थकथनं स श्लेषः कथ्यत इति सम्बन्धः । **भिन्नपद** इति । समानप्रयत्नोच्चार्यच्छायाधारिशब्दोपनिबद्धः । **को विशेषः** इति । प्रथमयोर्हि अभिन्नक्रियत्वमस्ति ! अस्य चाभिन्नभिन्नपदत्वे अपि विवक्षिते इति भावः । **अयं च** इति । अयं स्वभावमधुरेत्यादिरभिन्नक्रियः । **हस्तिना** इति हस्तिगत्येत्यर्थः । **कृष्णा** इति । श्यामा शुभ्रा आरक्ता च । कर्णः श्रोत्रम् । अयमविरुद्धोऽर्थः । **असिमात्र**– इति । पृष्ठेनेत्यत्र हि स्वयमेव व्याख्यास्यमानमलङ्कारान्तरसङ्करं शङ्कित्वा विविक्तमेवैतद्दर्शितवान् ।

**अत्रापि** इति । न केवलमुपोढरागेणेत्यादौ श्लेषो न समासोक्तिः । **अगृह्यमाण**–इति । न हि कश्चिद्विशेषो ज्ञायते यद्बलेन श्लेष एव वा एकदेशविवर्त्तिरूपकमेव वा बाधितुं शक्यते । **पयोदोपक्रमस्य वाक्यार्थस्य** इति निर्व्यूढस्येत्यर्थः । **ये साधारणा धर्मा** इति श्लेषैकदेशविवर्त्तिरूपकवैचित्र्यकलङ्कविकला इत्यर्थः । **दन्तप्रभा** इति । अत्र हि प्रदर्शयिष्यमाणे युक्ततरव्याख्याने दन्तप्रभेत्यादिषु यद्यपि न रूपकत्वप्रसक्तिस्तथाऽपि श्लेषो दुर्निवार इति तान्युपेक्ष्य तन्वीमित्येकमेव दिङ्मात्रप्रदर्शनार्थमुपदर्शितम् । **तद्भावम्** इति । तच्छब्देन सुमनःप्रभृतयो गृह्यन्ते । **रूप्यते** इति । वनमेव वनमिति कृत्वा । **मनोरथशतैः** इति । अत्र कानिचिद्विशेषणानि प्रकृतसत्पुरुषेण तुल्यानि कानिचिन्न तथेति मिश्रविशेषणत्वेऽन्योक्तिरेव । **उपमेयस्य** इति । विशेष्यरूपस्य विशेषणरूपतया त्वस्योक्तिरेव । अन्यथा समानवस्तुन्यासता कथम् । एतदेवाह– **समानवस्तुन्यासता** इति ।

---

१. संस्पर्शः । अलंकाराऽभिप्रायेण । ख. पुस्तके एव ॥ २. विशेषणानि ख. ॥

**फलपुष्पा** इति । पुष्पशब्दसन्निधानात् फलशब्दो वृक्षावयवलक्षणस्यैवार्थस्य स्मारकः ।

**विशेष्यपरिकल्पनायाम्** इति । विशेष्यः सत्पुरुषवृत्तान्तोऽप्रस्तुतः प्रस्तुतो वा । **प्रतीयमानः** इति । यत्रासाधारणधर्मोपनिबन्धः । **वाच्यः** इति । यत्र साधारणधर्मोपादानम् । **केषाञ्चिदिति वामन**प्रभृतीनां मते । पुनः **केषाञ्चिदिति काव्यप्रकाशकारादीनाम् ।**

**वदान्योपमेयस्य** इति । प्रियवाग्दानशीलस्योपमेयस्येत्यर्थः । **अध्यासविषय**–इति । अध्यासो निगीर्याध्यवसानं तत्त्वापत्तिः । **तद्भावा** इति । अमुकमेवेदमित्येवंरूपा । **श्लेषोपमायास्तु** इति । ननु तद्युपमाप्रतिभोत्पत्तिहेतोः श्लेषस्य निर्विषयत्वमापत्स्यते इति पूर्वपक्षाशङ्कायामिदमुक्तम्– **उपमानस्य** इति । प्रतीतिरित्यनेन मुख्यः सम्बन्धः । **दृष्टान्तकरणम्** इति । शाब्या वृत्त्या दृष्टान्तत्वेन योजनमित्यर्थः । **तत्सदृशीम्** इति । वारणेन्द्रलीलासदृशीं लीलाम् । **पातक्रियया** इति । पततिलक्षणया । **पतनस्य** इति पतेदित्येवमुल्लिखितस्य स्वरूपस्येत्यर्थः । **क्रियया** इति शब्दव्यापारेण । **अवगमनेति** लक्षणारूपया । **क्रियार्थस्य** इति । व्यापारार्थस्योदयपतनान्वयलक्षणस्य वस्त्वन्तररूपस्य च । बुधिधात्वर्थोपहितस्य हि णिचो बोधनात्मकप्रयोजकव्यापारस्यार्थं प्रति योऽभिधाव्यापारस्तस्य कर्तरि कर्मणि चावस्थानादाधारः कर्मरूपं यद् बोधनं तत्रावश्यमुदयपतनान्वयस्य कर्मत्वेनाभिसम्बन्धात् स्वाधारसम्बद्धत्वाद् व्यापारार्थः स भवत्येवेत्याशयः । लक्षणालक्षणीययोस्तु सम्बन्धः प्रसिद्ध एव । प्रयोजकव्यापारोऽभिहित इति प्रयोजकव्यापारस्याऽभिधानमिति यावत् ।

**अभवन्** इति **भवन्** इति च । असम्भवद्वाच्यार्थत्वं सम्भवद्वाच्यार्थत्वं चोपदर्शितम् । **एतया च** इति चकारः पूर्वश्लोकार्थापेक्षया । **दृष्टान्तादिभिः** इति । आदिग्रहणेन हेतुर्गृह्यते । **अर्थः** इति प्रयोजनं कार्यमित्यर्थः । **पराभवम्** इति क्षयम् । **दृष्टान्तः** इति । **सिद्धेऽर्थे** इति सम्बन्धः । प्रसिद्धार्थो दृष्टान्तो य इत्यर्थः । **अन्यैः** इति । अनेन हि दृष्टान्तालङ्कारः पृथग् नोपात्तः । **पाण उडीए** इति मातङ्गकुड्याम् । **हिअए** इति । मनसि मध्यप्रदेशे च । **तिरच्छी** इति वक्रा । समग्रमपि हृदयं व्याप्येव स्थिता, न तत्रान्यस्या अवकाश इत्यर्थः । वामदक्षिणायता च । **पहि** इति 'प्रवसतः पुरस्तादिव' इति न्यायेन गृहस्थिताऽपि पथि सम्मुखेव । अपरस्त्वर्थः प्रसिद्ध एव । **गहिय** इति । क यास्यसीति गृहीतकक्ष्या पृष्ठं न मुञ्चतीवेत्यर्थः । पश्चिमपथाक्रान्तप्रदेशा च । **युगपद्** इति समत्वमुपदर्शितम् । **व्यतिरेक–** इति गुणवर्जितेन जायत इति व्यतिरेकः गुणवृत्त्या

१. विशेषितस्य ॥ २. णिचि ॥ ३. बोधने ॥ ४. बोधन ॥ ५. उदयपत्तनान्वयलक्षणः ख । सं–ग. २. ॥

चेति । अत्र टङ्कारो मुख्यया वृत्त्याऽव्यक्तं शब्दं प्रतिपादयति । शब्दश्च ध्वनियशोलक्षणार्थद्वयवाची। ततश्च टङ्कारशब्दः शब्दशब्दं लक्षयन् यशोलक्षकोऽपि भवतीति गौण्यावृत्त्या प्रयुक्तः ।

**अभिधानाद्** इति। प्रत्यायनात् । **गुणवत्येव** इति । व्यतिरेकमुखेनाऽभिहितम् । **शब्दः** इति ध्वनिर्यशश्च । गुणवृत्त्येत्यर्थः । **किमिति** इति । प्रस्थाननिवृत्तिलक्षणस्य कार्यस्य प्रश्नमात्रे। **येन** इति। क्षीणविभवः कश्चिदपकारिणमप्युपजीवनार्थमनुसरन् केनचिदिहोपालभ्यते । **इयं च** इति । तुल्ये प्रस्तुते तुल्यान्तरस्य यत्र प्रशंसेत्यर्थः । **अब्धेरर्णः स्थगित** इति । अत्रोपात्ता धर्माः समुद्रे सम्भवन्तो नैकान्तेन प्रतीयमानमर्थमाक्षिपन्तीति तदनध्यारोपः । एतद्दृष्ट्या च पुंस्त्वादित्यत्र आदायचारीत्यत्र च प्रतीयमानस्यार्थस्यानध्यारोपः । येनास्यभ्युदितेनेत्यत्र च चन्द्रे सम्बोधनोपालम्भादेरसम्भवादध्यारोपोऽवसेयः। **व्यङ्ग्यस्यापि** इति । अपिशब्देन वाच्यस्याऽपि । **भावाद्** इति सम्भवात् । **एवंभूतापि** इति अकुलजाऽपि लावण्यरहिताऽपि च । **भ्रात्रादि** इति यदि भवतीति शेषः । **वाक्यैक**– इति वाक्याभ्यामेकवाक्यतेत्यर्थः । **कालमात्र** इति । वियोगकाले इति हि कालमात्रम् ।। **प्रस्तुतानुसारेण** इति । अभिधीयमानप्रस्तुतनायिकानुसारेणेत्यर्थः । **उपपद्यते** इति । तेनासम्भवी अयमर्थ इति नेह व्याजस्तुतिः, किन्त्वप्रस्तुतप्रशंसैवेति । यो विकल्पः स न युज्यत इत्येतदेवाह– **अप्रस्तुत**– इति । **इति** इति नायिकामात्रवर्णनपरतयेत्यर्थः । **तदलब्धसदृश** –इति । न लब्धाः सदृशा अनुरूपा योग्याः श्रोतारो यत्रेति प्रसिद्ध एवार्थः । **उपमा अलङ्कारः** इति । **भामहादीनां** तु मते श्लेषालङ्कारः । **उत्साहजनन**– इति, **कुशलकारिताप्रदर्शनया** इति च धर्मवीरस्पर्शने इमौ हेतू । **प्राधान्येन** इति । प्रस्तुततयेत्यर्थः । **अन्यपरत्वे** इति । प्रस्तुतप्रौढाश्रयत्वे इत्यर्थः । **कुतो दोषाभावः** इति प्रस्तुतपाटलोपवर्णनेन वस्तुपरिपोषो, न च श्लोकः परोपदेशाय कल्पत इति दोषसद्भावात् । **इयमेव च** इति । अप्रस्तुतप्रशंसैव च । **अस्मिन्** इति ।

अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् ।
अप्रस्तुतप्रशंसां च व्याजस्तुतिविदर्शने ॥

इत्युत्तरक्रियापेक्षया कर्मभावेनोक्ते अलङ्कारवर्गे । **यान्ति स्वदेहेषु** इति । अत्र **गौरीचेष्टितं** प्रस्तुतमाक्षिप्यते । **सापि** इति । न केवलमसाधारणानि विशेषणानि यत्र साऽन्योक्तिः । **मुक्त्वा** इति । अत्र सर्वाण्यसाधारणानि विशेषणानि । **अपरसेविनः** इति। नं परं सेवन्ते इत्येवंशीलाः । **लावण्य**– इति । अत्र लावण्यसिन्धूत्पलशशिप्रभृतयः पदार्थाः पदमात्राभिधेया अप्रस्तुता उपवर्णिताः । **छाया** इति । अत्र तालेनेति पदार्थः सकल-

१. –पोटा –क. ग. २. ॥ २.अ–ग. २. ॥

वाक्यव्यापकतया उपवर्णितः । **मेदच्छेद्-** इति । अत्र मृगया न व्यसनं किन्तु गुणकारी विनोद इत्यस्तोतव्यायाः मृगयायाः स्तुतिरुच्यमाना प्राणिनो न हिंसितव्या इति धर्ममेव बाधते । **लक्ष्यते** इति लक्षणया प्रतिपाद्यते । **स्वाभिप्राय-** इति । सुरतसुखानुभवरूपस्य स्वाभिसन्धेः साधनायेत्यर्थः । **अचेतसः प्रभोः** इति । शाब्द्या वृत्त्या उपमानभावमापन्नस्य । वस्तुवृत्त्या तूपमेयभूतस्य । **अप्रस्तुत-** इति । वस्तुवृत्त्या हि सामान्यमुपमानमेवेत्यर्थः । **ते** इति । ध्यानापेक्षया विषयिविषयभावात्मनि सम्बन्धे षष्ठी । **असम्भाव्यः** इति लोकातिक्रान्तगोचरः । **एतद्** इति । 'निमित्ततो यत्तु वच' इत्यतिशयोक्तिलक्षणम् । **सैषा** इति सेत्यनुवादकम् । **एषा** इति च विधायकम् । सा वक्रोक्तिरेषैव अतिशयोक्तिरेव नान्येत्यर्थः । ततश्च यः पर्यवसितोऽर्थस्तमुपदर्शयितुमाह- **परोक्ष-** इति ।

**लोक-** इति । तच्छब्देन लोकप्रसिद्धिः परामृश्यते । एतच्छब्देन च लक्षणलक्ष्यमागत्वम् । **पूर्ववद्** इति अतिशयोक्तिरित्यर्थः । **स्व[वा]रत्न** इति । स्व[वा]रत्नं सूर्यकान्तश्चन्द्रकान्तश्च । **तं दइया** इति । तद्दयिताभिज्ञानं यस्मिन्नप्यङ्के राघवेण नाढौकितं सीतापरामृष्टेनेव व्यूढस्तेनापि न केवलं यत्र ढौकितं तेनैव निरन्तरो रोमाञ्चः । **माहात्म्य** इति महत्त्वकृतस्य माहात्म्यस्येत्यर्थः । **अतिशयस्यैव** इति । गुणातिशयस्यैव उपमानत्वाद् इति । **प्रतिबिम्बत्वात्** प्रतिरूपत्वादित्यर्थः ।

**शब्दप्रवृत्ति-** इति । शब्दप्रवृत्तिनिमित्तम्, एकत्र गुणित्वम् अपरत्र शाखित्वम् । **शब्दसंस्कार-** इति । इवादिशब्दैकपद्यादिसंस्कारयोः । **उपमायाः** इति उपमास्वरूपादित्यर्थः । **निकटः** इति । उपमाने उपनिबद्ध उपमेयस्याप्युपमेये चोपमानस्याऽपि समीपवर्त्ती भवति एकत्वादित्यर्थः । **साधारणधर्मस्य** इति । प्राप्तिलक्षणस्य । **उपरि घनम्** इति । अत्रोपरिभावशिरआधारत्वयोर्घनत्वक्रोधाविष्टत्वयोर्दूरत्वहिमवदाधारत्वयोर्[1]बिम्बप्रतिबिम्बभावेनावस्थानम् । **वस्तुसाम्यम्** इति । अत्र च वक्ष्यमाणोक्तप्रस्तुतार्थविषयत्वं यद्वक्तव्यशेषं तत्साधारणोक्तिप्रक्रमायातमाक्षेप एव **सूत्रकृत्** प्रतिपादयिष्यत इत्यत्राप्यनुसन्धेयम्[2] । ततश्च निदर्शयिष्यमाणे सरसिजमित्यत्र[3] वक्ष्यमाणविषयता । तदरुचावन्यस्मिन्नुदाहरिष्यमाणे त्वयि दृष्ट इत्यत्रोक्तविषयता व्याख्येया । अस्यैव चार्थस्य प्रदर्शनार्थं सुलभेऽपि निर्विवादवक्ष्यमाणविषयोदाहरणे एतदुदाहरिष्यते इति । **शास्त्रारम्भवैयर्थ्याच्च** इति । चकारेण क्रियापदस्य वाच्यपरिसमाप्तिमात्रप्रत्यायकत्वादिति हेतुः समुच्चितः । शास्त्रारम्भवैयर्थ्यमेव भावयति **अलङ्कार-** इत्यादिना ।

---

१. -दूरत्वहिमवदाधारत्वयो- नास्ति ग. २ पुस्तके ॥ २. -सम्बन्धेयम् । ग. २ ॥
३. सरसिजमित्यादि ॥

**दीपकम्** इति क्रियापदोपनिबन्धरूपम्। **तद्विरोधाद्** इति। तद्विरोधस्तस्य हीत्यादिना प्रकटयिष्यते। **पूर्वोक्तम्** इति। गतोऽस्तम् इत्यादि। **कैश्चिद्** इति। **रुद्रट**प्रभृतिभिः। तैर्हि वास्तवप्रभेदतया दीपकस्य प्ररूपणं कृतं, कारणमालादिभिश्चालङ्कारविशेषैः[1] प्रायशः समावेश इष्टो न त्वौपम्येन। **उत्तरोत्तरजन्यत्वेऽपि** इति। कारणमालासद्भावेऽपीत्यर्थः। **गोत्वानुविद्धेन** इति। अस्य व्याख्या **तन्मय[2]तापन्नेन** इति। **न[3] च तासाम्** इति। यथा दीपकमादिर्मध्योऽन्तो वेति सामानाधिकरण्यानुपलम्भादादिप्रभृतिविषयाणां दीपकमयतया न स्थितिस्तथा दीपकमाद्यवस्थामध्यावस्थाऽन्तावस्थेत्यवस्थानामपि न तथा स्थितिरपि तु दीपकस्याद्यवस्थेत्यादिरेवोपलभ्यत इत्यर्थः। **यदाहुः** इति। अप्रसिद्धस्य सम्बन्धपरस्य वाक्यस्य प्रसाधनाय वृद्धवादोपक्षेपः। **नाफलिता द्रुमाः** इति। अत्र फलितद्रुमैरष्टविष्टिदायिनी नाम यत्नोपदेयदा[यि]नी भोगादिकराणां धनकणसमृद्धानां कृषीवलादिप्रजानामध्यवसानम्। **वच** इति वाक्यम्। **सम्बन्धपरे ऽपि** इति। राज्ञः पुरुषो हरिः करी इत्यादौ स्वस्वामिसम्बन्धेन कार्यभूतेन राजा पुरुषादिकं बिभर्तीत्यनुमीयमानस्य विशेषणविशेष्यभावात्मकस्य क्रियाकारकसम्बन्धस्य कारणभूतस्योन्नीयमानभरणक्रियापेक्षया क्रियापदेनैव दीपकत्वमित्यर्थः।

**चंकम्मंति** इति। अत्र कवयः प्राकरणिकाः स्फुटमेव प्रतीयन्ते। **ब.्केसरी** इति अत्रापि कविकेसरी प्राकरणिकः। **सामर्थ्याद्** इति। प्राकरणिकाप्राकरणिका अर्था अन्यपदार्थीभूताः। **अत्र तादृशाः** इति अन्तर्गतोपमा इत्यर्थः। **रेह̣** इति। अत्र त्वया भुवनमिदम् इति प्राकरणिकम्। **अतिदेशार्थः** इति तद्वदित्यतिदेशस्यार्थः। **पदग्रहणम्** इति। एकवचनान्तं क्रियापदमित्यत्र कारकपदमित्यत्र च। **अत्र हि** इति। प्रथमे हि जयतिलक्षणा एका क्रिया। अपरत्र हि एकलक्षणमेकं कारकम्। **तद्** इति। क्रियापदं कारकपदं च। **औपम्यसमुच्चयोऽपि** इति। अयं हि समुच्चयाधिकार एव दर्शयिष्यते। **गुणादि** इति। कारकं हि गुणजातिद्रव्यरूपमेव भवतीति कारकदीपकमेवैवमुक्तम्। **संयोगोऽत्र** इति। तस्माद्विरुद्धार्थदीपकम् इति व्यपदेशान्तरं लभते। **हरत्याभोगम्** इति। एतदन्तदीपकमप्येकार्थदीपकम्। **हृद्य**— इति मध्यदीपकमप्येतत् श्लिष्टार्थदीपकम्। **भ्रमणेनैव** इति। भ्रमन्तीत्यनेकै[नै]कस्य धर्मैः साधारणस्य जीमूतमतङ्गजलक्षणस्यार्थद्वयस्य उपकार इत्यर्थः।

**आश्रये** इति। क्रियादौ प्राकरणिकार्थे च। **साकाङ्क्षाणाम्** इति। आकाङ्क्षा अन्विताऽभिधाना[4]र्थं प्रतियोगिक्रियादिजिज्ञासालक्षणा। उपमानभावाय प्राकरणिकार्थ—

---

१ सह। ख. ॥ २. -याप- ग. २. ॥ ३. न च तासामिति...इत्यर्थः अयं पाठः ग. २. पुस्तके नास्ति ॥ ४. -देरुक्तार्थघटनम् ॥

जिज्ञासालक्षणा च । **यत एकेन** इति । यथा हि दीप एकेन छात्रेण प्रयुक्तोऽपरेषामपि साधारण्यात् प्रकाशं करोति, तथा क्रियादिकमपि प्रकृतेन केनचिदवान्तरवाक्येन एकेन संयुक्तं सदपरेषामप्यप्रकृतानामवान्तरवाक्यानामाकाङ्क्षापूरकं भवतीत्यर्थः । **अवान्तरवाक्येन** इति प्राकरणिकार्थवाचिनेत्यर्थः । **क्रियान्तराश्रवणाद्** इति । क्रियाविशेषाश्रवणाद्या चासिप्रभृतिः क्रिया सा सर्वाऽपि वाक्यपरिसमाप्तिमेव प्रत्याययति । **तद्** इति । पङ्क्तिसंस्थम् । **एतस्माद्** इति । यतो दीपकं दीपयत्यनेन प्रकारद्वयं प्रदर्शितम् । **एकश्च प्रकारो मौलः** इति । **दीपयत्यन्यत्तदन्यदिति** इति । एतेन श्लोकार्द्धम् उट्टङ्कितम् । तद्दीपकं कर्मभूतं तेषामिति अन्यत् कर्तृभूतं श्रिय इति दीपयति । अन्यदपि च कर्मभूतं ताः इति । अपरं कर्तृभूतम् **अचापलम्** इति । दीपयतीति सम्बन्धः । एनमेवाह– **अन्यस्यातिशय** इति । **अन्यस्य** इति क्षोणीमण्डलस्य । **दीपकम्** इति नृपतयः । **क्रौर्य**– इति क्रौर्यक्रियया ऽलङ्क्रियाम् । **सद्** इति शोभनम् । **यदि** इति । यदि तद्दीपितं कर्तृभूतं, स इति अन्यत् कर्मभूतम्[1] । **अनङ्गम्** इति । तदपि कर्तृभूतं स इति अन्यत् कर्मभूतम् प्रियासङ्गमोत्कण्ठामित्येवं दीपयति तदायं तृतीयः प्रकारो भवतीत्यर्थः ।

**भावलक्षण** इति । "यस्य च भावेन भावलक्षणम्" । सप्तमीति वर्त्तते । यस्य च भावेन क्रियया क्रियान्तरं लक्ष्यते ततो भावतः सप्तमी विभक्तिर्भवति । प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति । सा च प्रयुज्यमाना वा भवतु गम्यमाना वा । **गोषु दुह्यमानासु गतः** । दुग्धास्वागतः । अत्र प्रयुज्यमानया दोहनक्रियया गमनागमने लक्ष्येते । कैदारमात्रेष्वाम्रेषु[2] गतः । अत्र सत्स्विति गम्यमानया क्रियया गमनं लक्ष्यते । ततश्च भावलक्षणा चापसम्बन्धिनी या समारोपक्रिया प्रयुक्ता तया लक्षितस्य समासादनलक्षणस्य भावविशेषस्य संक्षेपेण तन्त्रेणाभिधानमिति । **मालादीपकेन** इति कोदण्डेनेत्यादिना । अपिशब्दात् समस्य चेति न्यूनस्य विशिष्टेन समस्य च समेनेत्यर्थः । **न्यायः** इति । श्लिष्टानुप्रवेशेऽष्टिरन्यमते तु कचित्तदभ्युपगमः कचित्तदनभ्युपगमश्च । पुनरर्थतत्त्वपर्यालोचनायां यदि सम्भवति ततो विविक्त एव विषयो निदर्शयितुं युक्त इत्येवंलक्षणः । **अलङ्कारान्तरम्** इति तुल्ययोगितालक्षणम् ।

**समासोक्त्या** इति । यत्रोपमानादेवैतदुपमेयं प्रतीयते इति लक्षितया । **केनचिद्** इति **रुद्रटेन** । **विवक्षितम्** इति तेनोपमानादुपमेयस्य यदाधिक्यं स एव व्यतिरेक इत्यर्थः । **एकतरस्य** इति । उपमेयगतोत्कर्षनिमित्तस्य वा उपमानगतापकर्षकारणस्य वा । **शब्देन** इति इव वा यथेतिरूपेण । इवार्थविहितवतिरूपेण च । **अर्थेन** इति । तुल्यादिना

---

१. कर्तृ–ग. २ ॥ २. धान्यभेद ॥

तुल्यार्थविहितवतिना च योऽयमार्थः क्रमः सामर्थ्यापरपर्यायार्थशब्दलब्धः आकारप्रश्लेषादार्थशब्दलब्धो वा तेन। **आक्षिप्ते** इति इवादितुल्यादिपदविरहेऽपीत्यर्थः। **समारोप**—इति। भास्वतेव भास्वतेत्यर्थः। एवं षड्भिरुदाहरणैरन्यान्यप्यष्टादश द्रष्टव्यानि। **वृषः** इति धर्मो दानवविशेषश्च। **अर्थः इवशब्दादिः** इति। पदार्थव्यपदेशं शब्दोऽप्यवाप्नोतीति कृत्वा। **सितासिते** इति। अत्र **पक्ष्मवती** इति **ताम्रराजिनी** इति च समानधर्मोपादानम्। पक्ष्म रोमविशेषः किञ्जल्कश्च। **दग्ध्वापि** इति। अत्र कामरूपदाहादयः समाना धर्माः। **भङ्ग्या** इति। ये साधवस्ते गुणदोषनैरपेक्ष्येण परोपकारव्यसनिनः, यथा दिवसो नलिनविषये इति रागिणि नलिने इत्यादिना विशेषेण समर्थकेन सतां परोपकारव्यसनितायाः सामान्यभूतायाः समर्थनरूपया। **द्वयोरेव** इति। अर्थान्तरन्यासव्यतिरेकयोरेव। **न निन्दा** इति। निन्द्यस्य प्रमाणान्तरेण निन्द्यत्वेन निर्ज्ञातत्वात्, निन्दायां सत्पुरुषाणां प्रवृत्त्यनुपपत्तेश्च।

**यदा त्वयम्** इति इतरव्याख्याद्वयोपक्रमः। **सोऽपि** इति। व्यतिरेकहेतुत्वाद् दृष्टान्तोऽपि व्यतिरेक उक्तः। **सत्यम्** इति। अत्र प्रसन्नसुभगत्वं साधारणधर्मो न पृथक् प्रयुक्तः। **प्रसिद्ध एव** इति शुक्रादिः। **अत्र** इति। अत्र गुणावपि दोषावपि न्यस्तावित्यर्थः। **कथम्** इति। प्रियाविरहो ह्यनभ्यर्णवर्त्तिनमपि दहति, न च शाम्यति। किमिति विषं हि तदात्वे स्वदते बाधितं च शाम्यति। **सत्यम्** इति। अत्राभिधीयमानगुणो व्यतिरेकः। एष चार्थः **स्वयमेव न तु चे**त्यादिना आक्षिप्य निर्णेष्यते। **स्वादोः** इति रससम्पदः। स्वादोः पदममृतमिति सम्बन्धः। **चिन्ता व्याजम्** इति चिन्ताव्याजेनेत्यर्थः। **उपमान**—इति कुवलयवनलक्षणस्योपमानस्येत्यर्थः। **उपक्रमम्** इति मन्यते इति सम्बन्धः। **उपमाने** इत्यादि। उपक्रमस्यैव स्वरूपकथनम्। तेन वाच्यायमानगुणातिरेकत्वादुच्यमान—गुणातिरेकः, न गम्यमानगुणातिरेको व्यतिरेक इत्यस्याभिप्रायः।

**प्रकृष्टभुजङ्गत्वम्** इति प्रकृष्टधूर्त्तत्वम्। **अनया** इति श्लेषे च लोपकल्पितया। **छायया** इति। न तु वस्तुवृत्त्या। **तथाविधार्थ** इति गुणीभूतात्मनो वाक्यार्थस्येत्यर्थः। **विवक्षितार्थ** इति। विवक्षितोऽर्थः पयोधौ कम्पनिमित्तवितर्कधारगोत्प्रेक्षालक्षणः। **वाक्य**—इति। वाक्यार्थसामर्थ्यम्। **प्राक्तन**—इति। प्राक्तनधर्मैर्विशिष्टतरो यो देवतावतारस्तद्भावप्रतिपादनपरागीत्यर्थः। **प्रस्तावाद्** इति। उपमाश्लेषयोरनन्तरमेव व्यतिरेकस्य प्रस्तुतत्वादित्यर्थः। **तस्मादेव** इति। येन वासुदेवादिना रूपणं कृतम्। **द्वादशप्रकारः** इति। सदृशासदृशोभयव्यतिरेकस्य एकसदृशव्यतिरेकसङ्करस्य च विविक्तसदृशव्यतिरेकादिभेदग्रहणेनैव सङ्गृहीतत्वात् द्वादशप्रकार एवेत्यर्थः। उभयव्यतिरेको यद्यप्यसदृशव्यति-

रेकाद्वस्तुवृत्त्या न भिद्यते, तथाऽपि शब्दवृत्तेनोभयव्यतिरेके भेदमात्रमुक्तम्, असदृशव्यतिरेके पुनराधिक्यमित्यनयोर्भेदेनोपादानमविरुद्धमिति ।

**उपचरित**– इति उपचरितभेदा चासावात्मव्यक्तिश्च तस्याः प्रेयानिति । अत्र वृषो धर्मोऽपि भूतिर्विभूतिरपि दुर्गाया विषमाया अपि भूधरभुवो भूधरभूमेरपि करो राजभागोऽपि परमेश्वरः परमैश्वर्ययुक्तोऽपि वाहिनीशः सेनापतिरपि । विषादी विषमत्तीति विषादवांश्च । **ताभ्यां चेति** । शब्दोपात्तनिर्मलेन्दुताविराजमानत्वविकचाब्जताशोभमानत्वधर्माभ्यां प्रतीयमानमहत्त्वाह्लादकत्वधर्माभ्यां च नभःसरोभ्यां सह प्रतीयमानसादृश्ययोरिति सम्बन्धः । **मुखं चन्द्र**– इति **महत्त्व**– इति च करणे तृतीया । राममुखस्य हि चन्द्रेण लक्ष्मणमुखस्य च कमलेन रूपणम् । **चिन्त्यः** इति । स्पर्द्धितुं योग्यः सम्भाव्यत इति यावत् । **अत्रभवान्** इति पूज्यः । **शाखासु** इति पाणावित्यर्थः । **तयोः** इति भुजप्रयागविटपिनोः । **इमावेव** इति । **भुवनत्रय**– इति, **स्वकायान्तः** इति च । **एवंप्रकारः** इति । भुजकल्पद्रुमयोरेकव्यतिरेको भुजप्रयागविटपिनोर्हरिक्तपाणयोश्च सदृशव्यतिरेकाविति त्र्यात्मकः । **कार्यस्य** इति कर्त्तव्यस्य । **अशक्यवक्तव्यत्वम्** इति वक्ष्यमाणविषयस्य लक्षणम् । **अतिप्रसिद्धत्वम्** इति चोक्तविषयस्य । **अत्तियारिय** इति । या अन्यासक्तमपि भवन्तमभिलषति । **न भणिस्सम्** इति । त्वदप्राप्त्या तास्तास्तदवस्था अनन्ता या वक्तुमपि न शक्यन्ते इत्यस्यार्थस्य प्रतिपत्तये । **किमनेन** इति । त्वदप्राप्तौ ज्योत्स्नादयः स्फुलिङ्गव्यापारहेतवस्तस्या भवन्तीत्यतिप्रसिद्धोऽयमर्थ इत्यस्य प्रतिपादनाय । **नात्यन्ताय** इति प्रतिषेध इवेत्यस्यार्थोऽयम् नात्यन्तं प्रतीतिप्रतिषेधाय प्रतिषेधः । **समुद्रोपमो भवानिति** इति । अस्य च पर्यवसितोऽर्थः समनन्तरमेव समुद्रोपमानेत्यादिना स्फुटयिष्यते ।

**रक्तपटः** इति । अत्र हि भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियाऽभिनिर्वर्त्तकस्वक्रियासम्बन्धात् साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयत इति प्रमाणान्तरादवगतम् । अत एव भूतं सिद्धं पटभवनं [१]भव्याय साध्याय रक्ततावगमनायोपदिष्टमिति रक्ततावगमनपरत्वं वाक्यस्येत्यर्थः । **अत्रान्तर**– इति अङ्गभूतत्वादित्यर्थः । **इच्छा कर्म** इति । इष्यत इति कृत्वा । **तेन** इति निषेधेनेव । **इयदास्ताम्** इति इयदेवास्तामित्यर्थः । **प्रत्यक्ष**– इति । प्रत्यक्षनिर्देश्योऽर्थोऽशेषविशेषावच्छिन्न एव भवति । **अतिशयोक्ति**– इति । स्मरमाहात्म्यविशेषोक्तेः समुद्राम्भः कुम्भमानरूपत्वेनाध्यवसाने भेदेऽप्यभेद इत्येवमात्मिकया । **अनन्वयेऽपि** इति । तत्र हि वर्णनीयस्य सदृशमन्यन्नास्तीत्युपमानान्तरप्रतिषेधे

१. भवतीति भव्यं, भव्यगेयेत्यादेर्निपात्यते ॥

तात्पर्यम् । **अन्यत्वम्** इति अन्यालङ्कारत्वम् । **उत्प्रेक्षालक्षणवद्** इति । यथा तत्र वाच्ये । **वादिभिरुच्यते** इति । या वाच्या सा इवादिभिरुच्यते, गम्यमानान्वर्थसामर्थ्यात् प्रतिपद्यत इति विशेष उक्तस्तथाऽत्रापीत्थं गम्यमान आक्षेपो भवतीति विशेषो वक्तव्यः । स च नोक्त इत्यनुदाहरणत्वमिति । **चिन्तयत इत्यस्य** इति । **अन्यत्राऽपि** इति । यथाऽप्रस्तुतप्रशंसायां प्रस्तुतपरत्वेऽलङ्कारत्वं, तथेहापि चेत्तर्हि आक्षिप्यमाणस्याप्रस्तुतस्य प्रस्तुतपरत्वेऽप्याक्षेपो भवतीति प्रकारान्तरं वक्तव्यमेवेत्यर्थः ।

**एते तूदाहरणे** इति । पूर्वेऽनुदाहरणे इत्यर्थः । **वोलेसु** इति । **गच्छविशेषः** इति अप्रस्तुतप्रशंसायाः । **एवं गतेऽपि** इति यात्रानुबन्धिनि विघ्नजाते इत्यर्थः । **त्वदभ्यासे** इति त्वदभ्यर्णे । **तस्यैव** इति प्रेम्णः । **तदनुमतम्** इति प्रेमानुमतम् । **तत्पराधीना** इति प्रेमपराधीना । **उद्रिक्त**–इति । अत्यधिकप्रेम्णा निर्गतमर्याद आत्मा यस्यास्तया । **दीर्घिकासु** इति पुष्करिणीषु । **विशीर्णम्** इति गलितपलाशम् । **जीर्णम्** इति कालान्तरपरिवासजरठम् । **अनुक्रोश**–इति । आघ्राणादेरुत्पलोचितव्यापारस्य निषेधोऽत्र शोच्यदशानिबन्धपर्यवसायितया अनुक्रोशे फलित इति तथा व्यपदेशः । **नूपुरसंवादि** इति । नूपुरध्वन्यनुकारि । **संशय**–इति । संशयनिवृत्तिमुखेन निबन्धात् । **संशयाक्षेपः येन** इति । हेतुपदम् अर्थान्तरोपन्यासेनाक्षेपात्तद्व्यपदेशः । **अनुसन्धेयम्** इति । तदत्र वालय नाहमित्युक्तविषय आक्षेप उदाहार्यः । वक्ष्यमाणविषयस्तूदाहृत एव । **विध्याक्षेपः** इति । विधौ पर्यवसायित्वमिति मिश्रस्यापि तद्व्यपदेशः । **ताभ्याम्** इति विधिनिषेधाभ्याम् । **निषेधाक्षेपः** इति निषेधस्यैव प्राधान्यात्तद्व्यपदेशः । **निषेधेऽपि** इति । निषेधेऽपि रोधोऽभिधीयत इत्यर्थः । तेन विधिरोधो निषेधरोधश्चेति सामान्येन द्विप्रकारः स रोधः कथ्यते इति सम्बन्धः । उक्तियुक्तिभ्यामिति तु विधौ निषेधे च प्रतिकूलानुकूलयो रोधयोरभिसम्बध्यते । ततश्च विशेषापेक्षयाऽष्टप्रकारोऽयं रोध इत्यर्थः ।

**पत्तिय** इति । प्रतीहि । **हन्तुम्** इति । हे प्लवगपते, रघुपतेः किमिति प्रियमिति बुद्ध्या विप्रियं कर्तुमिच्छसि । **किंकुर्वाणो** दशवदनं हन्तुं विशेषेण मृगयमाणः । कीदृशस्य रघुपतेः आत्मना दशवदनं हन्तुं त्वरितस्य कृतप्रतिज्ञस्य । जे इति पादपूरणे निपातः । **आनुकूल्येनैव** इति । मा गा इत्यस्य स्वभावत एव निर्गतत्वात् । वैयात्योक्तिपक्षे तु बुद्धिपूर्वकमुपेत्यैव मा गा इत्यस्योक्तत्वात् किं करोमीति प्रातिकूल्येनैवाह– **निषेधाक्षेपरूपः** इति । अकुपितस्य निषिद्धकोपस्य कुपितीकरणलक्षणं आक्षेपो निषेधाक्षेपस्तत्स्वभावः । **उपालम्भः** इति इयमतिप्रभुतेत्युक्तयेत्यर्थः । अस्य चोपालम्भस्य स्वरूपमभिधातुमाह– **तत्र** इति ।

---

१. विनष्टे ॥ २. विधि ख. पुस्तके एव ॥

कयाचित् खण्डितया निर्भरप्रवृत्तमन्युपरवशयाऽपि धाष्टर्यात् परिरक्षिततच्चिह्नया प्रातिकूल्येनानुवर्त्तनयैव किं मया भृकुटिरारचितेत्येवमकुपितत्वस्य प्रतिकूलकारणान्युपन्यस्य काक्का तत्त्वविकल एवोपालम्भोऽभिधीयत इत्यर्थः । **स्वरूप**– इति । अनयैव दूरीकृतकोपस्थायिभावया आनुकूल्येन स्वरूपमात्रप्रतिपादनपरतया सर्वस्यैवैतस्योक्तत्वादित्यर्थः । **नास्त्यस्य** इति । तस्मात् कदम्बवातागमिता अपि न गमिता इत्यादौ कारणाक्षेपे तात्पर्यम् ।

**तेषाम्** इति मते इति शेषः । **ज्ञप्त्यपेक्षः** इति । यथा हि कार्यमुत्पद्यमानमेव कारणप्रतिषेधेन बाध्यत इति भवत्युत्पत्त्यपेक्षस्तत्र बाधस्तथा नोत्पद्यमान एव कारणप्रतिषेधः कार्योत्पत्त्या बाध्यते, अपि तूत्पन्नस्य तस्य बाधस्तया ज्ञाप्यत इति कारणप्रतिषेधबाधो ज्ञप्त्यपेक्ष एव । ज्ञप्तिश्चेति कारणप्रतिषेधबाधज्ञानं च । दवीयसीति पश्चाद्भावित्वेन हेतोरिति कारणात् । **यस्माद्** इति यतः । **साङ्गत्ये** इति सङ्गतावित्यर्थः । असंमृष्ट—इति । सम्मार्जनं विनाऽपि निर्मलत्वं गगनस्य । **अप्रसादित** इति । वस्त्रादिस्रावणेनानपनीतरजःसम्पर्ककालुष्यम् । **अत्र** इति अनयोः । **वक्तुम्** इति । तस्या वक्त्रं वपुश्चैकान्तभव्यमपि मम भव्याभव्यरूपं निष्कारणमेव भवतीत्यर्थः । **सा** इति । कारणान्तरविभावना स्वाभाविकत्वविभावना च तेन षड्विधेत्यर्थः । **ताम्** इति उभयरूपां विभावनाम् । **तया** इति । या गौर्भङ्गी तां विचित्रां विभावनां प्रयोजयति तयेत्यर्थः । **अन्यया** इति । अविभावनारूपया । **णमह** इति । नमत अवर्द्धितमपि तुङ्गम्, अप्रसारितमपि विस्तीर्णम्, अनवनतमपि गम्भीरम्, अप्रलघुकमपि परिसूक्ष्मम्, अज्ञातपरमार्थमपि प्रकटं मधुमथनम् । **उत्तरयोः** इति षष्ठी, उत्तरार्द्धोक्तयोरित्यर्थः । **प्राग्** इति । पूर्वार्द्धोक्ताभ्यां स्वाभाविकीभ्यामविभावनाभ्यामुत्तरार्द्धे कारणनिर्निमित्तगौर्भङ्गीप्रतिपादिताभ्यां विभावनाभ्यां कृत्वा निर्मथ्य प्राक्तनस्वाभाविकी[क?]विभावनागतोऽनन्यथाभावापत्तिलक्षणो विशेष उक्तः ।

**विभावनयैव** इति । आरोपितस्वाभाविकत्वं विभावनया । **कारणान्तरविभावनायाः विशेषः** इति । इतरदीपेभ्यो निर्निमित्तोपकारकारित्वपतङ्गवाताद्यनभिभवनीयत्व–एकान्तदीप्रत्वादिलक्षणं वैचित्र्यम् । **साद्गुण्यस्य** इति प्रगुणतायाः । **कार्योत्पत्तिकाल** इति । अन्यदा प्रभवतो विगमे यतो गुणान्तरसंस्तवोऽनूदितः । ततस्तदर्थपर्यालोचनादन्यदेत्यस्य प्रतियोगी कार्योत्पत्तिकाल एव व्याहर्तुमुचितः । ततश्च कार्योत्पत्तिकालादन्यस्मिन् कार्यानुत्पत्तिसमये प्रभवतः कारणवैगुण्यस्य प्रहाणेऽर्थात् कारणसाद्गुण्ये सति यत् कार्यानुत्पत्तिवचनं सा विशेषोक्तिरित्ययमर्थोऽवतिष्ठते ।

---

१. न कारणस्योत्पद्यमानस्यैव सत्ता कार्योत्पत्त्या क्रियते ॥ २. कारणसत्ता ॥ ३. गलनम् ॥ ४. विभावनारूपा ॥ ५. आरोपितं स्वाभाविकत्वं यया ॥ ६. –भू– क. ॥

**कारणेषु** इति असाद्गुण्यमित्यस्याधेयस्यापेक्षया सप्तमी। **कार्यविशेषस्य** इति नियतस्य कस्यचित् कार्यस्येत्यर्थः। **अर्थाद्** इति वक्रभणित्यन्यथानुपपत्तिलक्षणसामर्थ्यात्। **विशिष्यते** इति अभावलक्षणेन धर्मेण भिद्यत इत्यर्थः। **विशेषाय** इति विशेषः कारणसाद्गुण्ये कार्यानुत्पत्तिलक्षणः। **अपाङ्गदृष्ट्या** इति। हेतौ तृतीया। **क्वचिदपि** इति। यत्र गुणादीनां वैकल्यं न दर्श्यते। तत्रापि विशेषायोक्तिर्विशेषोक्तिर्भवतीत्यर्थः। **वैकल्यवद्द्रव्य**—इति। पूर्वं हि वैकल्यशब्दार्थोऽभावलक्षण उपदर्शितः। इह त्वपरिपूर्णयथोक्तधर्मतालक्षणः।

**द्रव्यस्य योग**—इति। इहायोगहेतुकाविशेषदर्शनं योगनिमित्तविशेषस्यैवातिशयाधानार्थम्। अथवा विशेषापेक्षमविशेषस्याविशेषत्वं, स्वापेक्षया त्वविशेषोऽपि नैरर्थक्यलक्षणो विशेषरूप एवेति तदानीमपि विशेषोक्तिशब्दार्थो न दुरुपपादः। **तया** इति उर्वश्या। **तेन** इति विशेषेण। **हेतुतः** इति हेतोरलङ्कारात्। तत्र हि न विशेषायोक्तिः। **इह** इति अयं तयेत्युदाहरणे। **न विशेषोक्तिः** इति। तेन तदपेक्षया सङ्करोऽत्रेत्यर्थः। **अस्याश्च विशेषोक्तेः** इति। गुणादीनां वैकल्यदर्शने प्रत्येतव्येऽभिधेये च विशेषकारणे या विशेषोक्तिः सेदमा परामृश्यते। **शक्तेर्वा हानिहेतुना** इति सामर्थ्यविघाते कारणान्तरसद्भावेन वेत्यर्थः। **अकृत**— इति। अत्रार्थात् हेतुविशेष्यः तेनाकृतात्मीयकार्यो व्याहतश्च यो हेतुः स्यात् सोऽहेतुनामालङ्कार इत्यर्थः।

**पीणत्तण**— इति। अत्र जीवितं कर्तृ कण्ठं कर्मतापन्नं, दुःखेन व्युत्क्रान्तमिति सम्बन्धः। **न प्रतिपद्येत** इति। इदं तु स्पष्टम्। एकस्त्रिधा वससीति वाजिवारणेति स्वतन्त्रत्वे उदाहरणमिदं तेषु तथैव। **ततः** इति ततस्तस्मात्तेषूद्दिष्टेषु तथैव द्विस्त्रिर्वा बध्नीयादित्यर्थः। **भणितिवैचित्र्य**— इति भणितिवैचित्र्यमात्रं विरहय्येत्यर्थः। **शब्दपरिपाटौ** इति पदात्मिकायाम्। **तारतम्यम्** इति। न्यासादुत्कृष्टः क्षेपः क्षेपाद्विप्रकीर्णत्वं तस्माच्च निरसनमिति। यद्यपि कालतो देशतश्च द्विधाऽर्थपरिपाटिः प्रतिज्ञाता, तथाऽपि क्रियातारतम्यप्रभृत्यपि तत्प्रयोजकं भवतीति। **अर्थपरिपाटिः** इति देशात्मिका क्रियात्मिका च। **न्यग्भवति** इति। शब्दपरिपाट्या एवात्रोद्भूतत्वादित्यर्थः। **स्वा** इति सुष्ठु समन्ताचाहारासीति। हारलतावतंसविपुलवक्षसम्। असिलतावतंसस्थलांसभुजं च। **पुंभावम्** इति पुंस्त्वम्। **अर्थनाम्** इति। येयमभ्यर्थनाभङ्गिरिति सम्बन्धः। **मुख्यक्रमेणैव** इति। दशा पुनीहीत्यादिकाया अभ्यर्थनाया उत्तरोत्तरं प्राधान्यादित्यर्थः। **अर्थपरिपाटिः** इति अभ्यर्थनात्मिका। **शब्दपरिपाटी** इति वाक्यात्मिके। **उपमानोपमेयभूते** इति। गङ्गायमुनालङ्कृतौ प्रयागन्यग्रोधावुपमाने, हारलतासिलताविभूषितौ च

विपुलवक्षःस्थलांसभुजावुपमेये ।

**विभाग**— इति । एकस्य वाच्यस्य यौ विभागौ तल्लक्षणयोर्वाक्ययोः । **अन्यस्योपन्यसनम्** इति । अनेन **यदन्यस्ये**त्यादिसूत्रव्याख्यानं प्राक्तनमुल्लिखितम् । समर्थकस्येति पूर्वमिति च द्वयमपि वक्ष्यमाणन्यायलब्धम् । **पूर्वार्थानुगतः** इति । अर्थान्तरन्यासप्रकारव्याख्यानद्वयेऽपि योजनीयम् । **तथा च** इति । वाक्यद्वयस्थितये वाक्यैकतालक्षणप्रदर्शकं **जैमिनीयं** सूत्रमुपदर्शयति । विभागे सति साकाङ्क्षं चेद्भवेत्तत ऐकं वाक्यमर्थैकत्वात् । यदि तु विभागौ निराकाङ्क्षौ तदा द्वे वाक्ये, अर्थद्वयवत्त्वादित्यर्थः । **तथाहि** इति । समर्थकस्येति पूर्वोपन्यास इति च यदर्थाक्षिप्तमुक्तं तत्रान्यशब्दाभिधानगोचरतयेति अङ्गसत्वादिति च हेत्वोरुपदर्शनपरम् । अन्यशब्दव्यापारगोचरो ह्यर्थोऽप्रस्तुत एव । स चात्र समर्थक एव भवति । समर्थ्यसमर्थकभावेन प्रस्तुताप्रस्तुतयोरिह सम्बन्धस्याभ्युपगम्यमानत्वात् । **पूर्वार्थानुगतः** इति प्राकरणिकार्थानुगतः । **पूर्वेणार्थेन** इति कर्त्रा । **अन्यस्येत्यविशेष** इति । अन्यस्योपन्यसने पूर्वं पश्चाद्वेति विशेषेणानभिहितः । **न चात्र** इति । उदितादित्यस्य ऋते इत्यनेन सह सम्बन्धं विघटयितुं ऋते इत्यस्य चाध्याहृतेनार्थेन सम्बन्धमुपदर्शयितुमुक्तम् । **प्रस्तुताद्** इति अर्थलब्धात् । अर्थान्तरन्यास इति पूर्वार्थानुगत इति च यथावस्थितमेवात्र सम्बन्धनीयम् ।

**बन्धच्छायान्तरम्** इति समर्थकोत्तरोपन्यासात्मकम् । **समर्थक**—इति अध्याहृतायाः । **एतदेव** इति । उदात्तशब्दवाच्यत्वमात्रमभिप्रेत्यैतदेवेत्युक्तम् । वास्तवभेदवशात्त्वन्येन वाच्यार्थेनोदात्तान्तरमवतारितमित्यर्थः । **तद्वदिहापि** इति । तत्र हि उदात्तशब्दवाच्यत्वमुभयोरस्तीत्युदात्तशब्द उभयानुयायी । इह च सामान्यलक्षणलक्ष्यत्वमुभयोरस्तीत्युपन्यसनमर्थस्य यदन्यस्य सोऽर्थान्तरन्यासः । **पूर्वार्थानुगतः** इति । सामान्यलक्षणमुभयानुयायि । तत्र शक्तिमान् राम इत्यादि वाक्यार्थद्वयमुदात्तरूपं वाच्यम्, इह च सामर्थ्यलब्धसमर्थकपूर्वोपन्यासलक्षणं समर्थकोत्तरोपन्यासलक्षणं चार्थान्तरन्यासद्वयं वाक्यार्थीभूतं लक्ष्यम् । ततश्च ऋते इत्यनेन द्वितीयवाच्यसंसूचकेन सामान्यलक्षणे सम्बन्ध्यमानेन समर्थकोत्तरोपन्यासलक्षणोऽपरोऽर्थान्तरन्यास आनीत इत्यर्थः ।

**वक्ष्यति** इति अत्रैव । **तस्मादिति** हेत्वर्थप्रकाशात् या सिद्धिस्तदर्थमित्यर्थः । **अतिशयेन** इति । सामर्थ्याक्षिप्ते हि समर्थ्यसमर्थकभावे निरतिशयाऽर्थान्तरन्यासस्य लक्ष्येऽभिव्यक्तिर्भवति । **कथयती**ति हि शब्दः । **सा चे**ति अतिशयेनाभिव्यक्तिः । **समर्थ्यसमर्थकभावेन** इति । साक्षाद्धिशब्दोक्तेन । **प्रकारान्तरेणेति** । अर्थाक्षिप्तसमर्थ्यसमर्थकभावलक्षणेन । **अभिसम्बन्धे** इति । अभिव्यक्तिरनुपपन्ना स्यादिति सम्बन्धः । **अत्र** इति अर्थान्तरन्यासे ।

१. भवति ॥

**इहापि** इति । यत्र हिशब्दोक्तिरस्मिन्नित्यर्थः । **अर्थः** इति समर्थ्यसमर्थकभावलक्षणः । **रागिणि** इति अत्र बाणविषयकृष्णव्यापारे विशेषे प्रस्तुतेऽप्रस्तुता समर्थकविशेषरूपनलिनविषयदिवसव्यापारसमर्थिता सतां परोपकारव्यसनिता सामान्यभूतोपवर्णिता । ततश्च कण्ठोपात्तसमर्थ्यसमर्थकापेक्षया अर्थान्तरन्यासः, प्रतीयमानप्रस्तुतपरत्वेन चाऽप्रस्तुतप्रशंसेति । **यदाह** इति **उद्भटः । सामान्यस्य** इति विशेषरूपदिवसव्यापारसमर्थितस्य । **विशेष** इति । विशेषः कृष्णव्यापारः । **सामान्य**–इति दिवसव्यापारसमर्थितसामान्यापेक्षयेत्यर्थः । **न वा ण** इति । तत् कथं तयोर्बिम्बप्रतिबिम्बभावः शङ्कितः । सद्व्यापारकृष्णव्यापारयोर्बिम्बप्रतिबिम्बत्वाभावादयं दृष्टान्त उच्यत इत्याशयः ।

**सैवेति** न कृष्णव्यापारः । **ततः** इति हिशब्दात्, योऽसौ हेत्वर्थप्रकाशस्तस्मात् । **उक्तस्य** इति हिशब्देन । **व्यज्यत** इति हिशब्देन । **अर्थादिति** बिम्बप्रतिबिम्बभावोपनिबन्धसामर्थ्यात् । **भेदत्रयम्** इति उदाहार्यमित्यर्थः । एवमुत्तरत्र । तेन षोडशप्रकारोऽर्थान्तरन्यास इत्यर्थः । **न ह्यत्र** इति । औपम्यभेदत्वमेवास्य प्रतिज्ञातमिति भावः । **अज्ञाते यस्य** इति अस्वजनस्यासमानजातीयस्येत्यर्थः । **अत्र** इति उभयोः । **प्रधानभूतस्य यदिति** प्रकृतस्य वाच्यार्थस्य यत्तात्पर्यम् । यः परमार्थः सोऽपि क इत्याह–**यत्परत्वेन** इति । यस्य परमार्थस्य तत्परतया तदप्रस्तुतं वाक्यार्थान्तरं प्रवृत्तं स इत्यर्थः । **तस्माद्** इति । स्वस्मिन्नपि परमार्थवृत्त्या विद्यमानात् मुख्यतात्पर्यात् साधारणस्वभावाद्धेतोः प्रकृतवाक्यार्थेन सह यत्साम्यं तस्मादित्यर्थः ।

**कथम्** इति । तत्सादृश्यादपि वाक्यार्थान्तरविन्यासः कथमर्थान्तरन्यास इति प्रश्ने सत्याह–**समर्थक**–इति । तत्सादृश्यात् समर्थकत्वेनोपनिबद्धः सन् स तथा भवतीत्यर्थः । **तहेति** हृदयदयित एव । **व्याघातः** इति । एकतरप्रतिबन्धरूपः । **केवल** इति । परिहारसम्भवो हि त्रिष्वप्यस्ति । **भेदभावादिति** । श्लेषवशादासादितस्वभावो यः प्रभेदः स कथं श्लेषाद्भिन्नो भवेत् । भिन्नयोरेव ह्यन्यत्र लब्धसत्ताकयोरेकत्र सन्निपाते सङ्करत्वं वक्ष्यतेऽतो नात्र सङ्करः । **विकल्पस्य** इति । गुणस्य वा क्रियाया वेत्येवंरूपस्य । **समुदायः** इति गुणक्रियालक्षणः । **व्यर्थ**–इति विरुद्धार्थलक्षणः । न **पुनर्मन** इति । अनेन परिहारो दर्शितः । **इदम्** इति अनेनोदारचरितत्वादितिपर्यन्तो वाच्यार्थः परामृश्यते । **अत एव** इति । यत एवावश्यंभाव्यपि कार्यं न दृश्यते । **उदाहार्यम्** इति । तनुरियमित्यत्र विषमनाम्नोऽलङ्कारस्य लक्षितत्वादित्यर्थः ।

**एकार्थत्वाद्** इति । अकुब्जत्वं धवलत्वं च न हि चेतसश्छाययाऽपि सङ्गच्छत

१. सूर्याचन्द्रयोः ॥ २ अमुख्यात्मनि । ख. ॥ ३. विरोधः ख पुस्तके एव ॥

इति भावः। **जडयति** इति शीतलयति। **औपम्य** इति अतिशयभेदत्वेनास्य प्रतिज्ञातत्वात्। **लक्ष्येते** इति सादृश्यादित्यर्थः। **अण्णोण्णं** इति मदः प्रहर्षश्च। परस्परं नयनमुकुलनविकाशनलक्षणं प्रातिकूल्यमाचरन्तावपीत्यर्थः। **कवि** इति कापि। **पच्चेलिउ** इति प्रत्युत। भडीति। कस्याश्चित् सम्बोधनमिदम्। **तथा च** इति शाब्द्या वृत्त्या। **तदवस्थ एव** इति। तात्त्विकैकत्वविवक्षायामपि। एतदेव च स्फुटयत्येकाश्रयतयेत्यनेन। **तदनुरूपा** इति कालावस्थाऽनुरूपा चेष्टा इत्यर्थः। **आद्या** इति मुख्या। **एते** इति संस्थानादयः। **प्रख्या** इति। प्रख्या ज्ञानम् उपाख्या शब्दः। **ते संस्थानादयः** इति। ते स्वरूपादयो जातिभेदहेतवः संस्थानादयो वक्ष्यमाणा इत्यर्थः।

**व्याजरूपा** इति छद्मरूपा निन्दाद्वारिकेत्यर्थः। **व्याजेन** इति परमार्थेन तु निन्दैवेत्यर्थः। **न शब्दार्थीभावः** इति। अत्र हि वक्त्रभिप्रायप्रतिपादनपरवाच्यार्थलक्षणकार्ययोगिनो लक्षिता एव स्वाम्यादयः शब्दानामर्थास्ते च स्तुतिपर्यवसायिन इति। **पदार्थः** इति मुख्योऽर्थः। **या साधून्** इति अत्र साधूनित्याद्यनुवाद्यं प्रखलानित्यादि च विधेयम्। प्रखलानित्यादि वाऽनुवाद्यं साधूनित्यादि च विधेयमित्युभययोगः। **तदनुरोधेन** इति नाममात्रानुरोधेन। **यथाधिकार**मिति व्याजश्लेषः। श्लेषे इयं चात्रेति। **एकीया** इति। निन्दाद्वारिका स्तुतिरेव हि व्याजस्तुतिः **अनेन** लक्षिता। साऽपि तथाविधोदाहरणप्रदर्शनादलङ्कारान्तरानुविद्धैव प्रतिज्ञाता। अत एव च तस्यामेकीयमतलेशप्रकारस्यैकस्यैव तथाविधस्याऽनतिरेके युक्तिरुपन्यस्ता। द्वितीयस्य तु तत्प्रकारस्यान्यैरुक्तस्य च व्याजस्तुतिप्रकारस्य तथाविधस्य नाममात्रमेव भिद्यत इति न तत्र कुतो युक्तिर्नोपन्यस्तेति चोदनीयम्। नाममात्रभिन्नानां नाममात्राभिन्नानां च दोषगुणालङ्काराणामस्मिन् ग्रन्थे मूलत एव यथाधिकारं व्याकर्तुमुपक्रान्तत्वात्।

**व्याजाद्** इति स्तुतिव्याजान्निन्दाव्याजाच्च। **तेन** इति मानेन। **स्ववर्त्मनि** इति सृष्टिमार्गे। यत् प्रस्थानं प्रयाणं प्रचलनमिति यावत्। तत्र स्खलत एवंविधामाम्रालिं विदधत इत्यर्थः। **युनैष** इति। अत्र येयमुत्तरार्द्धे राज्ञो वीर्योत्कर्षस्तुतिः सा कन्याया निरन्तरान् भोगान्निर्विवक्षोर्दोषत्वेन प्रतिभासिष्यत इत्यभिप्रेत्य, योऽयं विदग्धसख्या राजप्रकोपपरिजिहीर्षया दोषोऽपि गुणरूपेणोक्तः, सोऽयं दोषस्य गुणीभावो नाम लेशतोऽल्पतया शनैर्न्यविदितमुच्यमानो लेश इत्युच्यते। **चपलो निर्दय** इति। अत्र पूर्वार्द्धे मानपरिग्रहानुगुणं सखीनामग्रतः प्रकाशं प्रतिज्ञाय तन्निर्वाहमाशङ्कमाना तदुपहासं परिजिहीर्षुर्दोषाभासं

१. आश्रय ख. पुस्तके एव ॥ २. दण्डिना ख. पुस्तके एव ॥ ३. लेश ॥ ४ स्तुतिद्वारिका[रक ?]निन्दारूपस्य ख. पुस्तक एव ॥ ५. कन्या ॥ ६. चपल इत्यादि ॥

तद्गुणमाह—**आगःप्रमार्जनायैवेति**। सोऽयं गुणस्य दोषीभावो नाम लेश इति। **समासोक्त्या** इति उपमानादुपमेयप्रतीतिलक्षणया। **गुणानाम्** इति। अत्रोपमेयः कश्चित् सत्पुरुषः प्रतीयते।

**अयमपि** इति यत्रोभयमस्ति। **एकार्थाभिधायकम्** इति। एकपदार्थगतधर्माभिधायकमपि सहार्थसामर्थ्येन द्वितीयपदार्थगतधर्मप्रत्यायकमपि यद् भवति। **प्रतिवस्तूपमावद्** इति। यथा प्रतिवस्तूपमायामभिन्नधर्मत्वं सहोक्तेर्व्यापकतया प्रसजत्येवं दीपकेऽपीति भावः। **व्यापार**—इति व्यापार उपमेयत्वनिष्पत्तिलक्षणः। **फल**—इति। फलं रूपातिशयभाजनत्वलक्षणम्। **यस्य** इति। प्रेष्येण इति सम्बन्धः। **यो वा येनेति**। इयमन्या पूर्वविलक्षणा सहोक्तिः। कोऽसावित्याह—योऽर्थः कर्मभूतो येन कर्तृभूतेन क्रियते जन्यते तस्य कर्मभूतस्य प्राधान्येन यदभिधानं समानं तुल्यं क्रियते। केन समानमित्याह—**तेन** इति। तेन कर्तृरूपेणार्थेन, कीदृशेन तथैव पूर्ववद्वर्द्धनादिधर्मयुक्तेन, भवता सता।

**सो रोसेण** इति। स रोषेण रथेन च निशाचरबलेनोत्साहेन च सह प्रहर्षं ध्वजं च वैराबन्धं प्रहरणं च वहमानो निर्गच्छतीति पर्यवसितोऽर्थः। **वर्द्धते** इति **कोकिल**—इति च साध्यसिद्धरूपक्रियोपदर्शनपरत्वेन विरहसम्भोगोपदर्शनपरत्वेन वा क्रियोक्तावेवोदाहरणद्वयम्। **यदि न्याय्यत्वाद्** इति। यदि परपराभवं नैरपेक्ष्येणानुष्ठातुं रामस्य पाणिरसीति नास्ति त दया, ततो मुनिमेनं बधान[?]इत्येकं वस्तु। द्वितीयं तु करुणा कुतस्ते इत्यत्र मुनिवधाचरणं कियन्मात्रं ते भवेदिति। शेषं च समानमिति। अनया चार्थद्वयसहोक्त्या प्रस्तुतोऽत्र विप्रलम्भशृङ्गारः परिपोष्यते। तथा हि करुणा कुतस्ते तदेनं मुनिं बधान। कियन्मात्रं च तवैतत्। यतो निर्भरगर्भखिन्नदेवीप्रवासनपटो रामस्य करस्त्वमिति हेतुरूप एवार्थे विश्रान्तिरिति स एव चमत्कारकारणम् **इतीदमाह**—इति विप्रलम्भशृङ्गारपरिपोषाद् इति। **तथा च** इति। कृतविप्रियेऽपि प्रिये मानं विधातुमशक्नुवत्याः कस्याश्चिन्नायिकायास्तदनुनयनाय सखीमुद्दिश्येयमुक्तिः। यदि वा काञ्चिन्नायिकां प्रति सख्या इयमुक्तिः। उभयत्राऽपि वाच्योऽर्थः स एव। तथा हि यत् किल मानम्लानिकरं मृदु प्रतिपादनासारं तदपि वचनीयमुच्यतां सः। प्रभौ हि कठिनत्वं कथञ्चिदपि न साधु। अत एव चानुर्नयैनमानय। विप्रियाणि वा कुर्वन् कथमप्यनुनेयः। सर्वथा किं गतेन, न हि युक्तमुपैतुमित्येवंविधो मानः सुभगमानिनि प्रिये न युक्तः। यदि वा नायिकाया उक्तिः सख्याश्च प्रत्युक्तिः, सख्या वा उक्तिर्नायिकायाश्च प्रत्युक्तिरिति वाक्यैकदेशेनोक्तिप्रत्युक्तिमत् प्रकारद्वयम्। तथा हि तथाविधागःकारित्वाद्यपि वचनीयमुच्यतां स इत्युक्तिः, नेश्वरे परुषता

१. नायक ॥

सखिसाध्वीति प्रत्युक्तिः । तर्हि आनयैनमनुनीयेत्युक्तिः । कथं[1] वा विप्रियाणि जनयन्ननुनेय इति प्रत्युक्तिः । तर्हि किं गतेन न हि युक्तमुपैतुमित्युक्तिः । कः प्रिये सुभगमानिनि मान इति प्रत्युक्तिरिति । वाक्यैकदेशद्वयेन चोक्तिप्रत्युक्तिमत् प्रकारद्वयम् । तथा हि प्रथमेऽर्द्धे उक्तिः । अपरे च प्रत्युक्तिः । द्वितीये च श्लोके पूर्वेऽर्द्धे उक्तिरिति । व्याख्या च प्रथमप्रकारद्वयानुसारेण विधातव्या ।

**वाक्यार्थद्वयम्** इति । हे पर्वतराज, मया वियुक्ता रामाऽत्र त्वया दृष्टेति प्रश्नरूप एको वाक्यार्थः । हे राजराज, त्वया विरहिता रामाऽत्र मया दृष्टेत्युत्तररूपो द्वितीयो वाक्यार्थः । अत्र इति सहोक्त्यलङ्कारे । **बहूनाम्** इति मध्यमे उदाहरणे । **द्वयोः** इति [2]प्रथमतृतीययोः । **प्रधानार्थपरत्वेन** इति विप्रलम्भशृङ्गारपरतयेत्यर्थः । **शब्दार्थद्वय**-इति । शब्दश्चार्थद्वयं चेति विग्रहः । वचःश्लिष्टे हि शब्दात् शब्दान्तरस्यानन्तरमर्थद्वयस्य प्रतिपत्तिर्भवतीति । **शाब्द** इति । तस्मादेव शब्दात्तादृशार्थो[4] । **गतः न्यायः** इति । युगपदर्थद्वयप्रकाशनलक्षणः । **आवृत्तिरत्र** इति । श्लेषे त्वनावृत्तिरित्यस्याभिप्रायः । **एषा समासोक्तिः** इति । संक्षेपेणैकेनैव वाक्येनार्थान्तरस्याऽपि प्रतिपादनात् । **अर्थान्वयाद्** इति अन्वितार्थत्वात् ।

**अन्यत्वमेतयोः** इति । अन्यत्वमेतदुक्ताद्यत्रैकेनैव वा वाक्येनेत्येवंरूपाल्लक्षणादित्यर्थः । एतयोः समासोक्तिसहोक्त्योः । समासोक्तिर्हि संक्षेपेणाभिधानम्, उपमेयोक्त्यैवोपमानप्रतिपादनमुपमानोक्त्यैव चोपमेयप्रतिपादनमिति । सहोक्तिश्च गुणकर्मणां सहभावस्य कथनं, सहादिना पदेनेत्यर्थः । **या तु** इति । यत्रैकेनैव वाक्येनेत्यादिलक्षणलक्षिता या सहोक्तिः सैतस्य ग्रन्थकारस्यालङ्कारतया संमता । या पुन**र्भामहा**दिभिरुक्ता सा नालङ्कार इत्यर्थः । **तुल्यकाल** इति ह्युपलक्षणमन्यालङ्कारकारोक्तलक्षणानामिति । **कस्यचिद्** इति अर्थान्निकृष्टस्य । **अन्यपरित्यागेन च** इति । अर्थान्तरन्यासवतीत्यत्रार्थान्तरशब्देन समस्य निकृष्टस्य चार्थस्य प्रतिपादयिष्यमाणत्वात् अन्यशब्देनार्थात् सम उत्कृष्टो वार्थः प्रतिपाद्यते । **अञ्जसत्वाद्** इति । विशिष्टस्य न्यासः पूर्वमेवाभिहितः, निकृष्टस्य चाग्रे प्रतिपादयिष्यते, पारिशेष्यात् समस्यैवाञ्जसत्वमित्यर्थः । अतश्चाञ्जसत्वमपोह्यमानो योऽर्थः सामान्येन प्रतीयते । नोत्कृष्टो नापकृष्टस्तस्मादन्यत् सममेव भवतीति ।

**एकस्य** इति अन्यशब्दपर्यायोऽयम् । **पूर्वम्** इति विशिष्टस्य । **यदे**ति लक्षणश्लोकस्य पूर्वार्द्धे । **तद्रूपतया च** इति । धर्मनिबन्धनरूपतया च । **तस्य** इति अक्षसूत्रस्य । **अर्थस्वभावम्**

---

१ कथमिव ॥ २. उदाहरणके ख. पुस्तके एव ॥ ३. अर्थश्लेषे ख. पुस्तके एव ॥ ४. शब्दश्लेषे ख. पुस्तके एव ॥ ५. उत्कृष्टनिकृष्टविशेषणरहितत्वेनेत्यर्थः । ख. पुस्तके एव ॥

इति । अर्थ्यत इत्यर्थ उत्कृष्टो लभ्यते । **अर्थाभावस्वरूपम्** इति । अत्राऽप्यर्थशब्देनार्थनीयत्वविशिष्टोऽर्थो गृह्यते, तदभावरूपं समस्वभावमेव भवति, अर्थनीयत्वाभावादित्यर्थः । **वस्तुनोः** इति । अत्र द्विवचनमविवक्षितम् । तेन यत्रैकं दत्वा द्वे बहूनि च वस्तून्यादीयन्ते, द्वे च दत्त्वा एकं द्वे बहूनि वा, बहूनि च दत्त्वैकं द्वे बहूनि वा, सा सर्वैव परिवृत्तिः । कथमसत उपचार इत्याह—**प्रसिद्धितः** इति। प्रसिद्ध्या हि न किञ्चिद्विरुध्यते। अन्यथा कासादीनामपि मूर्त्तधर्मवर्णनमयुक्तं स्यात् । **इति** इति उक्तेन प्रकारेण । **यां चन्द्रकैः** इति । अत्र मदजलस्य त्यागः पयोजपत्राणां च ग्रहणम् । **पर्यायान्तरस्य** इति पर्यायालङ्कारप्रकारस्य । **उत्तरत्र** इति । उत्तरस्मिन्नर्द्धे मनोगमनरणरणकोद्भवयोर्मनोपहरणरणरणकदानरूपत्वेनोपचरितत्वात् । **केचित्तु** इति । पूर्वं हि पुष्पोद्गमार्थं पादाहतिरिति पादार्पणमुक्तम् ।

**कुमुद** इति । अत्र कुमुदवने रजन्यां श्रीमत्त्वं यदासीत् तत् प्रातरम्भोजखण्डे सङ्क्रान्तमिति व्यत्ययः । अम्भोजखण्डे तु यदपश्रीकत्वं तत्कुमुदवने इति च व्यत्ययः । एवमुत्तरत्र । **सोच्चिय** इति । ताम्बूलादिजनितरागकोपनिर्वृत्तरागयोरभेदोपचारः । **स्वर्गिणः** इति यशःशेषतां गतस्येत्यर्थः । **अनुरुयव्वयत्या** इति । परप्रयोजने कृतशरीरव्ययहेतुकं यशः प्रसृतम्, अथ च शरीरं दत्त्वा यशोऽन्यस्मात् क्रीतमित्युक्तम् । **स एष** इति । राजभागलक्षणस्य द्रव्यस्य राजभ्यो राजराजे, हस्तलक्षणस्य च राजराजाद्राजपृष्ठे यत् सङ्क्रमणं स एष उभयोऽपि द्रव्यस्थानपरिवर्त्तः द्रव्यगुणादीनां स्थानपरिवर्त्तरूपो व्यत्ययो भवतीत्यर्थः ।

**यश्च** इति । चित्राक्षेपलक्षणेऽर्थे विनिमयोपदर्शनमिदम् । **दानप्रतिदान**—इति राजभागग्रहणप्रदानलक्षणः । **परोक्षोपलक्षणपरत्वे** इति । एतत् प्रत्यक्षा इवेत्यस्य झगिति हृदयेति यद् द्वितीयं व्याख्यानं तत्रापि सम्बन्धनीयम्। **पुरः स्फुरद्रूपत्व**—इति । पुरः स्फुरद्रूपत्वस्य हेतुभूतं वर्णनमित्यर्थः । **इदमुत्तरम्** इति। भ्रुकुट्यादिभिर्मानं विधेहीति पूर्ववाक्यस्य सखीसम्बन्धिन उन्नयनात् । **अन्ये** इति । मुसलमप्रस्तुतमेव येऽभिमन्यन्ते । **अपरे** इति । मुसलं ये प्रस्तुतमेव सम्भावयन्ति । **व्यक्तमेव** इति उ इत्यनेन । **उद्भिन्न** इति किन्त्वित्यादिना । **क्वचिद्** इति । अञ्जनादिछन्नोद्भिन्नविच्छायत्वादिविरहकार्यनिगूहनलक्षणे । **प्रणयिसखीति** । अत्र शस्त्रोपक्षेपोऽकाण्डयमदण्डपात इव भुजपाते हेतुरित्युपमानोपमेयाभ्यां तस्यानेकपदार्थतेति । **हेत्वलङ्कारः** इति **रुद्रटोक्तः** ।

**कस्तु** इति । कारको ज्ञापको वा । **अलङ्कारान्तरत्वम्** इति । उक्तवक्ष्यमाणालङ्कारव्यतिरिक्तरूपत्वम् । **मूर्च्छनेन** इति । विशेषणद्वारको हेतुरयमुपदर्शितः । **अलङ्कारान्तर** इति उत्प्रेक्षायाः । **अन्ये तु** इति इदमुदाहरन्तीत्यनुषज्यते । **अलङ्कारान्तरम्** इति ।

हेतुलक्षणं काव्यलिङ्गमिति। धूमादित्यस्माद् व्याप्त्यादिदर्शनयुक्तात्तर्कहेतोर्विलक्षणम्। एतत् स्वरूपं च प्रागेवाभिहितमस्तीत्यत्रैव **काव्यलिङ्गे**त्यादिना प्रतिपादयिष्यते। **अन्यत्र** रस इति। अनुभवस्येत्यनेन सम्बध्यमानोऽन्यत्र शब्दो रसाद्यर्थः **केनचित्** यद्विवृतस्तन्न युक्तमित्यर्थः। **कान्तेश्च** इति। कान्तिच्छाययोः पर्यायत्वे कान्तेः छायेति धर्मधर्मिसम्बन्धो न घटते इति भावः। **अविरल** इति। सादृश्यसम्बन्धोपचारे हि रूपकमुक्तम्, अयं तु कार्यकारणसम्बन्धोपचार इति हेतुरेव। **भावान्तरस्य** इति। भावान्तरस्वरूपस्याभावस्वरूपस्य वा कार्यस्य जन्यत्वे इत्यर्थः। **भावाभाव** इति कार्यविशेषणमिदम्। **कार्यादुत्तरकाल**–इति। तत् सहजकार्यानन्तरजहेतुद्वये गौणव्यवहारोपदर्शनमिदम्। शेषेषु हि दूरकार्यादिषु अनङ्गाङ्गत्वादिर्गौणोपचारः स्फुट एव प्रतीयते।

**उदासीनः** इति अनाविशन्। लक्षणं ज्ञापकस्त्विति तुशब्दः कारकाद् व्यतिरेके। लक्षणमिति ज्ञापक इति च पर्यायशब्दौ। **यथा वे**ति। गौणवृत्तिव्यपाश्रयास्तावत् कार्याः। अथवा यथा वैचित्र्यं कर्तुमीशते तथाऽन्यथाऽपि कार्या इत्यर्थः। **चन्दन** इति। अत्र पवनस्य पथिकप्रमाथसाधनक्रियायां कर्तृत्वेनावेशान्निवर्त्तको नामायमाविष्टक्रियो हेतुः। **ताम्** इति दर्शनक्रियाम्। **आत्मन्येव** इति। क्रियालक्षण एवात्मनि क्रियालक्षणस्य क्रियेति दर्शनक्रियाऽनाविष्टः। **इतिशब्द**–इति। इतिलक्षणः शब्द इतिशब्दः। **कण्ठे काल इत्यादीनि** इति। अत्र कण्ठेकाल इन्दुशेखर इति च विशेषणे अविवक्षिते। इत्थम्भूतलक्षणतृतीयान्तमेव विशेषणद्वयमत्रोदाहरणत्वेन विवक्षितम्।

**सम्बन्धस्य** इति। लक्ष्यलक्षकभावात्मकस्य। **लक्ष्यवाचिनः** इति। उभयत्र प्राप्तावपि ज्ञाप्यमानवाचिनो गोनासादेः। लक्षणवाचिनो लक्षकोत्पातरूपा गदरज इत्यादेः। कथं तर्हि तृतीया न श्रूयते इत्याह–**एकयैवे**ति। **विभक्त्ये**ति चतुर्थीलक्षणया। **वस्तुनः** इति उद्भेदलक्षणस्य। **प्राग्** इति उद्भेदाभावाभावः। **शब्देन** इति। मदेन मानेन च ऐरावणमुखे हरिहृदये च निवासप्रीतिरुज्झितेति भङ्ग्यन्तररचितशब्दैरित्यर्थः। **यदेवोच्यते** इति भङ्ग्यन्तरेणेत्यर्थः। **यथा तु** इति। येनैकघनरूपतात्मकप्रकारेण तु प्रतीयते व्यङ्ग्यम्, न तेनैव प्रकारेण वक्तुं शक्यते। क्रमभाविविकल्पप्रभवानां शब्दानां तथाऽभिधानशक्तेरभावात्।

**तदाकारतयैव** इति। अशेषविशेषावच्छिन्नस्वलक्षणाकारतयैवानुभवस्योत्पत्तेः। **व्युत्पत्ति**–इति। व्युत्पत्तिरिदं पदमेतस्यार्थस्य प्रतिपादकमित्येवंरूपा। **तयोः** इति गुणद्रव्ययोः। **संसर्गः** इत्यनेन वक्ष्यमाणेन मुख्यसम्बन्धः। **द्वितीयादि**–इति। आदिग्रहणेन तृतीयादिश्रुतयो लभ्यन्ते। अत एव च नीलमुत्पलमानयेत्यादावित्यत्रापि आदिग्रहणेन अरु-

णया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यादि ग्राह्यम् । **क्रिया**—इति । क्रियया आनये-त्यादिकया । **एकवाक्यवशाद्** इति । वाच्यलक्ष्यगततृतीयप्रमाणसामर्थ्यादित्यर्थः । **एकार्थ** इति । एकोऽर्थो नीलोत्पललक्षणः । **संसर्गः** इति परस्परमित्यर्थः । **अन्ययोग**—इति करणे तृतीया । **वध्यघातक**—इति वैपरीत्यसम्बन्धनिबन्धनेत्यर्थः ।

**बाध्यविज्ञान**—इति । बाध्यविज्ञानं शुक्तिकायामिदं रजतमिति रजतप्रतिभासः, बाधक-विज्ञानं नेदं रजतमिति शुक्तिकैवेयं परमार्थसतीत्यर्थः । **युक्तोऽयम्** इति । रसस्य वाक्यार्थीभावे ये रसवदलङ्कारम् **उद्भटादयः** प्रतिपन्नास्तान् प्रति ध्वनिगुणीभूतव्यङ्ग्य-वादिना **आचार्येण**[1] "भिन्नो रसाद्यलङ्काराद्" इति "एते च रसवदाद्यलङ्काराः" इति च वदता स्वाभिप्रायप्रतिपादनं यद्विहितं तदुपजीव्यपरस्येयमुक्तिः । **उपलक्षणीभूतम्** इति । वाक्यार्थीभावमनापन्नमङ्गभूतमप्रधानमिति यावत् । तेन मुख्यवृत्त्यैवोदात्तमेतत्, न रसवद-लङ्कारापवादत्वेनेत्यर्थः । **अन्यत्र तु रसवद्** इति । एतत्पर्यन्ता **भट्टोद्भटादी**नामुक्तिः ।

**भगवतः** इति । वराहवपुषस्त्रैलोक्योद्धरणोद्युक्तस्य । **अन्यस्मिन् विषये** इति । यथा हि तत्त्वारोपादिलक्षणा रूपकादयोऽलङ्कारा यत्र कुत्रचिदपि विषये दृश्यन्ते तथा नायमृद्धिमद्वस्तुवर्णनलक्षण उदात्तालङ्कारो विषयान्तरे समृद्धिविरहिते समृद्ध्यसमृद्धिविरहिते च वस्तुनि दृश्यते । ऋद्धिगुणविशिष्टं वस्त्वेवालङ्कार इत्युक्तं, तच्च कथं वस्त्वन्तरधर्मतां प्रति-पद्येत, असम्भवात् ।

**अलङ्कारत्व**—इति । यथा हि ऋद्धिमद्वस्तुवर्णनमयमलङ्कारस्तथा तद्रहितवस्तुवर्ण-नमप्यलङ्कारः कश्चित् प्रसजति । **न वाच्यम्** इति । **भट्टरुद्रटेन** युगपद्या गुणक्रियाः स त्वन्य इत्यत्र लक्षणे, व्यधिकरणे इति एकस्मिन् देशे इति च व्यधिकरणे वा यस्मिन्नित्यादिना यत् प्रतिपादितं तन्न वक्तव्यमित्यर्थः । **यत्रैकत्र** इति । यत्र समुच्चये एकत्राधारे शब्दोपात्ते प्रतीयमाने वाऽनेकं वस्तु परं स्यादसौ समुच्चयः । तत्र **सूत्रकृदु**दाहरणान्यग्रे प्रदर्शयिष्यते । सम्प्रति तु **वृत्तिकृदेव** विनेयविशेषव्युत्पत्त्यर्थं स्वयमुदाहरणजातं किञ्चित् प्रदर्शयितुमाह—**तत्र साधु** इति ।

**उमा वधूः** इति । अत्र साधुद्रव्यसमुच्चयः । **क्लीब** इति । अत्रासाधुगुणसमुच्चयः । **चित्तनिर्वृत्ति**—इति । अत्र सुखावहद्रव्यक्रियासमुच्चयः । **राज्यभ्रंशः** इति । अत्र दुःखावह-क्रियासमुच्चयः । **एवमपि** इति । द्विप्रकारेऽपि समुच्चये लक्षिते । **स्त्रीणां वैरूप्यम्** इति । अत्र स्त्रीसाधुपण्डिताः सन्तो, दुर्जनाश्चासन् । वैरूप्यदारिद्र्याल्पायूंष्यसन्ति, आधिपत्यं च सदिति सदसद्योगः । **किमेतदर्थेन** इति । अयमभिप्रायः । सतोरसतोश्च योग इति प्रकार-

---

१. आनन्दवर्द्धनेन ख. पुस्तके एव ॥

द्वयं परग्रहणेनैव सङ्गृहीतं, किमेतन्निमित्तेन त्रिधेति त्रिप्रकारत्वदर्शनलक्षणेनादरेण, सदसद्योगलक्षण एक एव हि प्रकारोऽत्र दर्शयितुं न्याय्यः।

**सदसताम्** इति। सतोश्चासतोश्च सदसतोश्च सदसतामित्यर्थः। **इत्येवमादिकः** इति सदसतोर्योग इत्यत्रान्वयो[1]ऽप्येवमेव विधेयो योगशब्दः प्रत्येकमभिसम्बध्यते तेन सतोर्योगोऽसतश्च योग इत्ययमर्थः सम्पद्यते। केन योग इति चेत् सन्निधानात् सताऽसता वा योगे सतोर्योगः। सदसतोश्च योग इति द्विधात्वम् असतोऽपि सताऽसता वा योगेऽसत्सतोः योगोऽसतोश्च योग इति द्विप्रकारतैव। तत्र सदसद्योगोऽसत्सद्योगश्चेति द्वावप्येकरूपावेवेति सतोर्योगोऽसतोर्योगः सदसतोश्च योग इति त्रिधा समुच्चयो न्याय्यो भवतीत्य[2]ः।

**दुर्गं त्रिकूटः** इति। अत्र पूर्वार्द्धे साधूत्कृष्टमुत्तरार्द्धे चासाधु। **प्रस्फुरयन्** इति। इदमपि सुखावहवस्तूदाहरणम्। दुःखावहवस्तूदाहरणदिक् च प्रागेवास्माभिरुपदर्शिता। **अन्येषां** तु इति मतमिति शेषः। यदि च सदसतोर्योग इति योगशब्दे जात्या एकवचनं व्याख्यायते। ततो योगौ योगाश्चेति प्रतिपत्तौ न कश्चिन्मतभेदः। एषैव च व्याख्या युक्तिमती तथैवोदाहरणदृष्टेः। **देशे** इति क्षित्यादौ। **एकतः** इति सप्तम्यर्थे तसिः। तेन क्रियाद्रव्यगुणादिष्वेकत्र क्रियायां द्रव्ये गुणे जातौ वेत्यर्थः।

**उभयापाश्रयः** इति उभयं द्वे पदे बहूनि च पदानीति। **अनुभयाश्रयः** इति। अत्राप्युभयं तदेव किन्त्वेष विशेषः कुत्रचिद् व्यस्तं कुत्राऽपि समस्तमुभयं नाश्रय इति। तदाश्रयानाश्रयत्वं च द्योतकसद्भावासद्भावमात्रेण प्रतिजानीत इत्याह—**त्रयः प्रतिपदम्** इति। **शुद्धा** इति प्रतिपदाश्रितद्योतकत्वमेव वा उत्तरपदाश्रितद्योतकत्वमेव वा यत्रेत्यर्थः। **मिश्रा** इति पूर्वोक्तमुभयं मिश्रितं यत्रेत्यर्थः। **विचिन्त्यमानम्** इति। **अत्र बहूनि पदानि** इति पदद्वये पदद्वये चोत्तरपदनिवेशी चकार इति चोभयापाश्रयत्वम्। **दीपकेन** इति। यत्र हि क्रियादिकमेकमर्थं प्रति द्रव्यादीनामनेकेषां परस्परनिरपेक्षाणां तुल्यकाले चीयमानता पश्चादाचीयमानता च। न च समुच्चयान्वाचयद्योतकं किञ्चित् पदमस्ति। सदपि वा तन्नो[3]द्भूततया तद् द्योतकं भवितुमलं स सर्वोऽपि दीपकस्य विषयो भवितुमर्हति। आद्येषु त्रिषु प्रभेदेषु समुच्चयादेरुद्भूततया प्रतीयमानत्वादनुभयाश्रयप्रभेदे चेतरेतरयोगसमाहारयोः परस्परसव्यपेक्षपदार्थनिष्ठयोर्निरपेक्षपदार्थविषयस्य दीपकस्य कुतः सम्भव इति निरवकाशं दीपकमनुभयाश्रयं समुच्चयमन्वाचयं च बाधते निर्विषयतापत्तेरित्यस्याभिप्रायः। **क्रिया द्रव्यविशेषाः** इति। अनव्ययकृदभिहितो हि भावो द्रव्यवत् प्रकाशते। इति क्रियाणां

१. यथा व्याख्यातं लतायाम्॥ २. पदम् ख पुस्तके एव॥ ३. समुच्चयान्वाचय-ख एव दृश्यते॥

द्रव्यवद्भावः । **तद्विवक्षायाम्** इति । अविवक्षितत्वाद्विनाऽत्र समासः कृतः । **च योगेऽपि** इति । चयोगससुच्चयः प्राक्प्रदर्शितः इतरेतरादीनपि तद्भेदत्वेन सम्प्रत्युपदर्शयति–**विचिन्त्यमानमित्यादिनैव** इति । **इदम्** इति सर्वनाम्ना हि नपुंसकेनैकवचनान्तेन च परस्परसव्यपेक्षत्वे निशादयः क्रोडीक्रियमाणाः समाहारस्यैव विषयो भवितुमर्हन्ति । परस्परसव्यपेक्षत्वेन तत्क्रोडीकरणाविवक्षया तु समुच्चयप्रभेदता प्रदर्शितेति न कश्चिद्विरोधः । एवमपरेऽपि समाहारे च योगा द्रष्टव्याः । **भिन्नो भवति** इति । समुच्चयाद् अन्वाचयस्य स्वरूपान्यत्वमात्रप्रतिपादनपरमेतत् । परमार्थतस्तु नान्यः समुच्चयादिति द्विपदाश्रय उत्तरपदाश्रितद्योतकत्वेन समुच्चयभेद एवायम् । **युज्येते** इति प्रयुज्येते इत्यर्थः । इह इति अन्वाचयप्रस्तावे ।

**एकस्यैव** इति । यथा हि परिवृत्तौ मरुल्लास्यं त्यजति लताश्चोपाददते इत्येवमेकस्यैव हानोपादाने विवक्षिते । **न तथा अत्र** इति । अत्र हि नतभित्तिगृहस्य हानमेव विवक्षितम् [ ॥ रू ॥ ] । **प्रथमे हि भाव** इति । तत्र हि मञ्जरीयुक्ततरुणदर्शनं कर्तृभूतम् । अये एष कामुकः सङ्केतस्थाने समागतोऽहं च गृहव्यापारव्यग्रा इहैव स्थिता तन्मे मन्दभाग्यायाः सम्भोगसुखावाप्तिर्न निर्वृत्तेति तदभिप्रायाविष्करणपूर्वकं मुखमालिन्यं तस्याः समुत्पादयति । तच्च सम्भोगाप्राप्तिरूपं तदभिप्रायं प्रतिपत्तुर्गमयति । स चाभिप्रायो मुखमालिन्यस्य कार्यस्यान्तरङ्गकारणरूप एव भवितुमर्हतीत्येवमुक्तं कार्यरूपोऽर्थः कारणं गमयतीति । **द्वितीये तु** इति । तत्रापि हि भयाभावसाभिलाषत्वादिः कारणरूपतां निर्विशङ्कसम्भोगसुखास्वादाभिसन्धिश्च कार्यरूपतां न कदाचिद् व्यभिचरतीत्येवमुक्तम्–कारणरूपोऽर्थः कार्यमिति । **उदर्काभिधानेन** इति । उदर्कः फलमुत्तरम् । तच्चात्र रहसि निर्विशङ्कसम्भोगसुखास्वादः । तस्य च मिषतो विनिर्यय इत्यनेन स्फुटीकरणादभिधानमिति । **आकाङ्क्षा** इति । किमत्र तात्पर्यमिति [ ॥ ३४ ॥ ]

**न दर्शितम्** इति । यथा **रुद्रटेने**त्यर्थः । **आवानैः** इति ईषच्छुष्कैः । **लयेन** इति श्लेषणेन मीलनेनेति यावत् । अत्र हेतवः पञ्च । तैश्चारादुत्प्रेक्षमाणा दूरत एवानुमीयमानेत्यर्थः । **मारिवडिए** इति । मारी देवताविशेषस्तत्र पतिते इत्याक्रोशगर्भं सम्बोधनम् । [॥ ३५॥]
**अत्र भानुदीधिति** इति । अत्र ह्येकमिति नवत्वमिति च प्रधानाभिनवत्वपर्यायतया प्रयुक्ते अपि विशेषणे शब्दच्छलेन किलैकत्वनवत्वसङ्ख्ये प्रतिपादयिष्यतः जननयनभुवनब्रह्माननादिसङ्ख्यया किल द्वित्वादिसङ्ख्या द्वे इत्यादीनि विशेषणानि प्रत्याययिष्यन्तीति भानुदीधितिशतानामेकादिक्रमेण दशेति सङ्ख्याप्रतीतये यान्येकमित्यादीनि विशेषणा-

१. ख पुस्तके एव ॥ २. बहिरङ्गकारणम् ॥ ३ तरुण ॥ ४. नायिका ॥

न्युपात्तानि न तथा प्रतीतिमाधातुमलम् । **अविघ्नितेत्थम्** इति । ऋजुत्वे हि सति यदिष्यते न तत्र युक्तमयुक्तं वेति विकल्पविघ्नान्युपतिष्ठन्ते । **आर्जवत्यागेच्छया** इति । ईदृग्गुणगणकलितमृजुत्वं शब्दवृत्त्या यद्यपि स्वीकर्तुमिष्टमिह प्रतीयते तथाऽपि वस्तुतो दुष्टमेव तदिति कथमिष्यते अपरस्यामनुरक्तोऽपि हि जनः स्वात्मनि सानुराग एव यत्र प्रतीयते तदार्जवं कथमिव सगुणं भवेत् कीदृशी हि तत्र रतिः रत्याभास एव सः । तदवश्यं त्याज्यमेवार्जवमित्यभिप्रायः ।

[1]**स** इति विभीषणः । **मारुइ** इति । मारुतेर्लब्धो यः प्रत्ययस्तत आगतो हर्षो यत्रालिङ्गने तत्तथेति । **उन्मूलियाण** इति । उन्मूलितानां खण्डितानि उत्खातानामृज्वपसृतानि नीयमानानां निःशेषेणायतं दीर्घं कृत्वा निर्यातानीति गिरीणां मार्गेण प्रस्थितानि नदीस्रोतांसि तादवस्थ्यमापन्नानीत्यर्थः । **अप्रयोजका अपि** इति विशेषणानामित्यर्थः । **तादर्थ्येन** इति क्रियार्थत्वेन । **गेहाज्जाता** इति । **उदकं हर्तुं मङ्क्ष्यामि** इति गाश्च सन्दातुं कुम्भमच्छं वासो दाम च समादाय गृहान्निःसृता अथ च प्रदेशान्तरमागच्छसि न सरितं, श्रयसि यमुनातीरवीरुद्गृहाणि न यमुनाम् । विशसि गोवर्द्धनगिरिविपिनानि न गोष्ठम्, तत् किं त्वं देवकीनन्दनस्य दृशि निपतिता नूनं त्वया क्वचिदपि स युवा कदाचिद्दृष्टोऽधुना च त्वं तमलभमाना विसंस्थुलमेवमाचरसीत्यत्र तात्पर्यम् । **एवम्** इति । यथा क्रियार्थत्वेन तथा क्रियाविषयत्वेनेत्यर्थः । ! **अध्ययन** इति णमुलन्तेनेत्यर्थः । **स्तनोपपीडम्** इति । अत्र सप्तम्यां चोपपीडरुधकर्ष इत्यनेनोपपूर्वात् पीडधातोस्तृतीयान्ते उपपदे णमुल् प्रत्ययः । चकारात् तृतीयान्तोपपदलाभः । **एवम्** इति । अपरणमुल्प्रकारोपदर्शनपरम् । **एतेन** इति पूर्वं ह्यनुप्रयोगे विशेषरूपमन्तरङ्गं विशेषणं सामान्यरूपायाः क्रियाया विशेषकं विशेषे व्यवस्थापकं व्याख्यातम् एतेनान्तरङ्गविशेषणस्य विशेषव्यवस्थापकत्वव्याख्यानेन । क्वचिद्विशेषापेक्षबहुत्वयोगाद् बहुत्वेऽपि व्यवस्थापकं भवतीति व्याख्यातमेवेत्यर्थः ।

**आन्तर** इति बहुत्वविशिष्टान्तरविशेषणयोगात् । **भेदपरिग्रहाद्** इति बहुप्रकारविशेषस्वीकारात् । **बाह्यम्** इति बहिरङ्गम् । **आवृत्तिरूपेण** इति । एकं वारं द्वौ वारौ त्रीन् वारानित्येवं या आवृत्तिस्तद्रूपेणेत्यर्थः । [4]**अविचलितस्वरूपमेव** इति बाह्यविशेषणविशेषणमेतत् । **प्रधानम्** इति उक्त इत्यादिरूपम् । **अनेकवारमित्यर्थे** इति कृदर्थे इत्यर्थः । **क्रियाविशेषणेन** इति तद्धितेनेत्यादिना । **शतृलक्षितया** इति लक्षणहेत्वोरित्यनेन शत्रन्तभ्रमिलक्षितयेत्यर्थः । **एतेन** इति । यत्तदोर्विपर्ययेण तयोरेवान्यविशेषणयोगेन च ।

---

१. स ख. २. निमूलकाषमित्येवं रूपम् । ३. कषतीत्यादिकायाः । खप्रतावेव ॥ ४. क्रियायाः सम्बन्धि यत् बाह्यमिति विशेषणं तस्य विशेषणम् ॥

**तद्विशेषण** इति स्वविशेषणयोग इत्यर्थः । **सम्बोधनमपि** इति न केवलं समासकृत्तद्धितादयः । **सम्बन्धीति** इति क्रियाकारकसम्बन्धीति परिकरलक्षणे यत् सम्बन्धिपदं तेनेत्यर्थः ।

**दिवसम्** इति कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । **उपमानाद्** इति उपमानभावात् । **पियसंगमम्मि वि** इति । प्रियस्य वल्लभस्य संगमः संयोगः प्रियोऽभिमतश्च सङ्गमः सम्भेदो नद्योरिति **मदन** –इति विरोधपक्षे मदनाय मदनसन्तापनिवृत्त्यर्थमितरत्र मदकारि यदार्द्रकप्रसाधनम् । **पर्वत** –इति । [1]द्वे पदे एकं च पदं नरकस्य दानवविशेषस्यापि । **बहु** इति द्वे पदे । एकं च[2] पदं **हरिम्** इति शक्रं कृष्णं केसरिणं च । **अर्थैकावल्या** इति– इति विशेषरूपया । **कर्तृकारकम्** इति सामान्यरूपम् । । **कस्य दोषोऽयम्** इति तवैवेत्यर्थः। **सर्वनामभिः** इति सा अहमित्येताभ्याम् । असर्व –इति अम्बेत्यनेन [ ।। ३६ ।। का ।। ]

**कस्याश्चिद्** इति अप्रकृतानामेव यत्र धर्म इति । **प्रकृतस्यैव** इति । प्रकृतयो रोमाञ्चवेपथ्वोरपलापमात्रमत्रास्ति न चान्यदप्रकृतं किञ्चित् साधितमिति प्रकृतस्यैव सद्भावः । **प्रकरणविशेष** इति । सन्ध्यादिवसवृत्तान्तोऽत्र प्रकृतो नायकव्यवहारो वेति विशेषस्याऽनवगतिः । **द्वयोः** इति द्वयोर्मध्यादेकस्याऽन्यतरस्य समासोक्तेरप्रस्तुतप्रशंसाया वेत्यर्थः । **एतदेव** इति । निगूहनलक्षणमेव [ ।। ३७. का ।। ]

**प्रतिपाद्येन** इति बोद्धव्येन । **प्रमाणान्तर**-इति शब्दप्रमाणव्यतिरिक्तप्रत्यक्षादिप्रमाणावसितम् । **किमासेव्यम्** इति । अत्र स्त्रीनितम्बकामिनीकल्मषधनानि व्यपोह्यार्थाः । **कौटिल्यम्** इति । अत्र तु मानसपरपुरुषशोषाङ्गस्वभावाः [रु?] । किं सुखमपारतन्त्र्यमिति । अत्र सुखं गुणोऽविनाशित्वगुणयुक्तं धनं च द्रव्यं पृष्टमन्यत्रापि स्त्र्यादौ विद्यमानमपारतन्त्र्ये विद्यायां च कथितम् । अन्यत्र तदभावः प्रतीयते । अपारतन्त्र्यमेव सुखं न तु स्त्रीभोजनादि, विद्यैव चाविनाशि धनं न भूहिरण्यमित्यर्थः । तथा किं कार्यमित्यत्र द्विजनृपकर्तृका क्रिया पृष्टा, अन्यत्राऽपि कार्ये सती सन्तोषमहेच्छतयोर्नियमार्थं कथिता । विप्रेण सन्तोष एव कार्यो राज्ञा च महेच्छताऽसन्तोष एव न तु विपर्यय इत्यर्थः । जातावुदाहणं यथा–के ब्राह्मणा येषां सत्यं दम आनृशंस्यं चेति । **अत्र च** इति कौटिल्यमित्येतस्मिन् । **अनेक** इति चतुर्णामित्यर्थः । एवं जातिद्रव्यक्रियास्वप्युदाहार्यम् [ ।। ३८ रु[का] ।। ]

**पूर्वार्थात्** इति । विनयनिर्दव्यत्वादेः [ ।। ३९ रु[का] ।। ]

**निमित्तत्वम्** इति साधनत्वम् । **नातिप्रसङ्गः** इति । स्फारिततत्त्वविशेषस्य

१ षयो [?] विशेषणपक्षे । इन्द्रविशेषणपक्षे पर्वतभेदि पवित्रमिति जलविशेषणपक्षे द्वे पदे इन्द्रपक्षे एकं पदम् । ख पुस्तके एव ।। २. जलविशेषणपक्षे । सिंहविशेषणपक्षे ख पुस्तके एव ।।

कारकभावस्याभावात्। **कृष्ण** इति। अत्र सेवनाध्यापनक्रियाभ्यां द्वौ कारकभावौ उपकार्योपकारकेति प्रतीयमानात्। **अभिधीयमानः** इति छलेनेत्यनेन। **प्रतीयमानः** इति निर्दोषमित्यनेन। **एभिः** इति प्रत्यक्षनिर्देश्यैः। **व्यतिकरेण** इति छुरणेन मिश्रणेनेत्यर्थः [॥ ४० । का॥]

**तत्र वा** इति प्रश्ने वा। **एतद्** इति उत्तराभिधानमलङ्करणम्। **उत्तरस्य** इति प्रतिवचनस्य। **ताद्रूप्य** इति। काव्यलिङ्गताऽनुपपत्तेः। अत्रैव हेतुमाह **नहि** इति। **एकधर्मी** इति प्रश्नो ह्यन्यत्र प्रतिवचनं चान्यत्रेति। **धीरम्** इति धैर्यम्। **दधि** इति दध्यादीनां धर्मित्वं प्रसिद्धमेव। तृतीयया यदङ्गत्वं तेन धर्मरूपतेत्यर्थः। **अविशेषेणैव** इति सामान्येनैव ॥ ४१ का॥

**केनचिद्** इति। असिलतालेखनादिना [रू?]। **उपपत्तिमदिति च** इति सर्वत्राऽप्रतिहतप्रसरत्वादयो बुद्ध्यादिगता ये धर्माः प्रतिपादयितुमिष्टास्तेऽपि देवदत्तादावुपपद्यन्त इत्युपपत्तिमदितिवदनेन प्रयोजनदर्शनमुपपन्नमिति। **हेत्वलङ्कारे तु** इति। सूक्ष्मे उपादानात्मिका लक्षणैव नोपचारः। हेतौ तु कार्यकारणभावलक्षणापुरःसरो वस्त्वन्तरे वस्त्वन्तरोपचार इत्यर्थः। **संवृति** इति नालङ्कारान्तरताम्। **सूक्ष्मगुणाद्** इति। सौक्ष्म्यमित्युच्यते तत्तु यत्सूक्ष्मार्थस्य दर्शनमित्येवं लक्षितात् सौक्ष्म्याभिधानादर्थगुणात् सूक्ष्मार्थात् प्रत्यक्षार्थाच्च स इङ्गिताकारलक्ष्योऽर्थोऽसूक्ष्मोऽप्रत्यक्षश्चेति सूक्ष्मं भिद्यते। दर्शनमित्यनेन हि प्रत्यक्षार्थत्वं सौक्ष्म्यगुणस्योपदर्शितम् **सामाइइ** इति। श्यामायते [॥ ४२ । रू ?॥] **सर्वस्माद्** इति अनेकस्मात्। **सर्वस्य** इति। अनेकस्य। [॥ ४३ । ४४ ॥]

**यत्र पुनरप्राकरणिके** इति। यत्रोपमानादुपमेयं प्रतीयते सा समासोक्तिरिति ह्युक्तम्। तत्राप्राकरणिके प्राकरणिकधर्माध्यासेनाऽप्युपमानादुपमेयस्य प्रतीतिर्विवक्षितेति न तल्लक्षणव्याघातः। **समानमिति** इति। यस्य हि धर्मिणोऽध्यासस्तेन किलाऽप्राकरणिकेनैव भवितव्यम्। तस्य चाध्यासे कुत एतदभिधातुं शक्यते इयं समाध्युक्तिरियं तु समासोक्तिरित्यभिप्रायः। **एकत्र** इति समाध्युक्तौ अध्यारोप्यस्य धर्मिणः प्रतीयमानतेत्यर्थः। **अन्यत्र तु** इति समासोक्तौ पुनरभिधीयमानतेत्यर्थः। **दिवसादिभिः** इति उपमेयभूतैः। [॥४५ । ४६॥]

**एवम्** इति। यथा कार्यकारणयोर्गुणक्रियाविरोधे विषमस्तथा हीनस्याधिककार्यकरणेऽधिकस्य स्वल्पमात्रस्याऽपि कार्यस्याकरणेऽपि विषमो भवति। एतेन **भट्टरुद्रटोक्तं** भेदान्तरचतुष्कमपि सङ्गृहीतमस्मिन्नुभये भेदचतुष्कस्यान्तर्भावसम्भवादित्यभिप्रायः [रू?]। **ततः कार्याद्** इति। ततः कुतश्चित् कार्याद्धेतोरित्यर्थः। [४७.४८.४९.५०.५१ ॥स?]

**तमसा** इति पापेन । **अदृष्ट**—इति पुण्यजनितम् । स[?]. ५२ ] । **दयन्तिण** इति दयमानेन दयां कुर्वतेत्यर्थः । [ ५३ का ]

उपमानान्तरे अपि तु प्रसिद्धं यदुपमेयं तस्यैवोपमानत्वविवक्षयेत्यर्थः । **तत्कल्पनायामपि** इति । उपमानत्वकल्पनाऽपि तिरस्कारहेतुरित्यर्थः [रू ?] । **अत एव** इति । निन्द्यतेऽनुकम्प्यते वेत्येताभ्यामभिसम्बन्धः । **एतदेव** इति विपरीतार्थप्रत्यायनमेव [५४] । **संपृक्तम्** इति । योगार्थोऽयम् [५५ का] । **उक्तम्** इति । **भामहे**नेत्यर्थः । [ ५६ रू [?] ]

**यस्मिन्नेकगुणानाम्** इति । यत्राऽभिन्नवर्णानामर्थानां सम्बन्धे सत्यनेकरूपत्वं न लक्ष्यते स तद्‌गुणोऽलङ्कारः स्यात् । स एव गुणो यत्र इति तद्‌गुणः । कदाचिद्दुग्धोदकतुल्यास्तेऽर्थाः स्युस्तदवश्यं संसर्गान्नानात्वं लक्षयितुमशक्यमित्याह— **योगलक्ष्यरूपाणाम्** इति । यत्र योगे सति रूपं लक्षयितुं शक्यमथ च न लक्ष्यते इति [ ५७ का ] । **या न** इति या न चीयते नापचीयत इत्यर्थः । **आहृतेन** इति अध्याहृतेन [ ५८–५९ ] ।

**आश्रयाः** इति । वागङ्गाभिनयद्वारेणैव स्थायिव्यभिचारिणां प्रतीतेः । अत एव व्याचष्टे—**प्रतीतिहेतवः** इति । **वागाद्यभिनयसहिताः** इति । वागाद्यभिनयाश्रया एव सन्तो विभाव्यन्ते । न तु निराश्रया एकका इत्यर्थः । यदि हि वागाद्यभिनयाविशिष्टतया न ज्ञायन्ते तदा स्थायिव्यभिचारिणोऽपि[1] तथा न ज्ञायन्त इति । **अनुभवन्** इति स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषं साक्षात्कुर्वन् साक्षात्कार्यत इत्यर्थः । **यद्वा वा** इति पूर्वं हि सामाजिकः प्रयोज्य उक्तः । इदानीं तु सामाजिकगतः स्थायिव्यभिचारिलक्षणश्चित्तवृत्तिविशेषः । स एव च सामाजिकस्य साक्षाद्भवन् साक्षाद्भाव्यते साक्षात् क्रियते इति । **येन** इति व्याख्यानद्वयेऽपि सम्बन्धनीयं सोऽनुभाव इति तस्मादित्यर्थलब्धम् । तेनेत्थं योजना वागङ्गसत्त्वानामभिनयैरभिनयप्रकारेण यस्मादर्थोनुभाव्यते तस्माद्वागङ्गोपाङ्गसंयुक्तः स वाचिकादिरभिनयप्रकारोऽनुभाव इत्यर्थः ।

**निर्वेद** इति । तत्र निर्वेदो नाम दारिद्र्यव्याध्यपमानाऽधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैः समुत्पद्यते । तमभिनयेद् रुदितनिःश्वसितोच्छ्वसितसम्प्रधारणादिभिरनुभावैः । भवति चात्र श्लोकः ।

दारिद्र्येष्टवियोगैस्तु निर्वेदो नाम जायते ।
सम्प्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् ॥

अत्रानुवंश्ये आर्ये भवतः ।

---

१. विशिष्टयता । ख. पुस्तके एव ॥

इष्टजनविप्रयोगाद्दारिद्र्याद् व्याधितस्तथा दुःखात् ।
परवृद्धिं वा दृष्ट्वा निर्वेदो नाम सम्भवति ॥
बाष्पपरिप्लुतनयनः पुनः पुनः श्वासदीननेत्रमुखः ।
योगीव ध्यानपरो भवति हि निर्वेदवान् पुरुषः ॥

निर्वेद इति दारिद्र्यव्याध्यादिकारणजन्यो रुदितनिःश्वसितादीनां कारणं मनोविकारो दुःखरूपो भावविशेषः । शेषेष्वप्येवं विवृतिः । तत्त्वज्ञानं चिरं भ्रान्त्या गुणितहानोपादानादिप्रबन्धस्य भ्रमनिवृत्तौ सत्यां धिङ् मां वृथा भ्रान्तमिति निर्वेदं जनयति । यथा

वृथा दुग्धोऽनड्वान् स्तनभरनता गौरिति चिरं,
परिष्वक्तः शण्ढो युवतिरिति लावण्यरहितः ।
कृता वैडूर्याशा विकचकिरणे काचशकले,
मया मूढेन त्वां कृपणमगुणज्ञं प्रणमत ॥

सम्प्रधारणं यद्यपि वितर्कों भावान्तरं तथापि तदनुभावानामत्रानुभावत्वं मन्तव्यम्। न तु व्यभिचारी व्यभिचार्यन्तरेग युज्यते इति । दृष्ट्वा निर्वेदः सम्भवतीति कृदन्तनिर्वेदशब्दान्तर्गतक्रियापेक्षं दृशेस्तुल्यकर्तृकत्वमिति क्त्वाप्रत्ययः । निर्वेदवान् पुरुष इति मतुपा इदं दर्शयति न खल्वमी निर्वेदादय इदन्तया घटादिवदवभासन्तेऽपि तु अहं निर्विण्ण इत्याश्रयपारतन्त्र्येणैव । विवेकेन तूद्ध्रियन्ते, यस्मिन् सत्येवं प्रतीतिः स आन्तरो विकारो निर्वेदः । एवमन्यत्र । अयं च निर्वेदः स्वयं पुरुषार्थसिद्धये वोत्साहरत्यादिवदत्यन्तानुरञ्जनाय वा हासविस्मयादिवन्न प्रभवतीत्यन्यमुखप्रेक्षित्वाद् व्यभिचार्येव एवं शेषेष्वपि वाच्यम् ॥१॥

ग्लानिर्नाम वान्तविरिक्तव्याधितपोनियमोपवासमनस्तापाऽतिपानमदनसेवनाऽतिव्यायामाध्वगमनक्षुत्पिपासानिद्राछेदादिभिर्विभावैरुत्पद्यते । तस्याः क्षामवाक्यनयनकपोलमन्दपदोत्क्षेपणवेपनाऽनुत्साहतनुगात्रवैवर्ण्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रानुवंश्ये आर्ये भवतः ।

वान्तविरिक्तव्याधिषु तपसा जरसा च जायते ग्लानिः ।
कार्श्येन साऽभिनेया मन्दक्रमणेन कम्पेन ॥
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसञ्चारैः ।
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥

वान्तं विरिक्तमिति भावे क्तः । मदनसेवनं सुरतसेवा । वाक्यं नयने कपोलौ चेति क्षामाणि । वाक्यस्य क्षामत्वं स्वरस्य नीचत्वात् । मन्दं कृत्वा पदोत्क्षेपणं तत्सहचरितं

१. पुंसः ॥

निक्षेपणमपि । वान्तेत्यादिनिमित्तसप्तमी । मुहुर्मुहुरिति । सजातीयचित्तवृत्तिप्रवाहमात्रे व्यभिचारिणां भवत्यपि नैकस्य चिरमवस्थानमिति सूचयति ।२। शङ्का नाम चौर्याभिग्रहण-नृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते । सन्देहात्मिका स्त्रीनीचानाम् । सा च मुहुर्मुहुरवलोकनाऽवगुण्ठनमुखशोषणजिह्वापरिलेहनमुखवर्ण्णभेदवेपथुं शुष्कौष्ठवायससाधर्म्या-दिभिरनुभावैरभिनीयते । अत्राकारसंवरणमपि केचिदिच्छन्ति तच्च कुशलैरुपाधिभिरिङ्गि-तैश्चोपलक्ष्यम् । अत्रार्ये ।

द्विविधा शङ्का कार्या आत्मसमुत्था च परसमुत्था च ।
या तत्र परसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥
किञ्चित् प्रवेपिताङ्गस्तथोन्मुखो वीक्षते च पार्श्वानि ।
गुरुसंज्ञमानजिह्वः श्यामास्यः शङ्कितः पुरुषः ॥

**चौर्याभिग्रहण** इति । यदा चौर्येणान्ये परिगृहीता विज्ञातास्तदा तत्सहायस्य तदा-नीमपरिगृहीतस्याप्यनर्थसंशयस्वभावा शङ्का जायते । चौर्यग्रहणमकार्योपलक्षणम् । तेन ये समानमकार्यं कृतवन्तस्तन्मध्यादन्यतमपरिग्रहेऽन्यस्य तथात्वेनाऽज्ञातस्याऽपि शङ्का जायत इत्युक्तं भवति । तेन नृपापराधादिप्रदर्शनमस्यैव प्रपञ्चः । **स्त्रीनीचानाम्** इति । स्त्रीणा उत्तमस्वभावानां यद्यप्यकार्यं नास्ति अधमानां तु नीचग्रहणादेव सङ्ग्रहस्तथाऽपि स्त्रीग्रहणमकृतपापानामपि स्त्रीणामन्यत्र सापराधे परिगृहीते मनसि शङ्का जायत एव । भयशेषैभूतत्वादस्या भीरुस्वभावत्वाच्च तासामिति प्रदर्शनार्थम् ।

एवं विभाविकाँ स्त्रीनीचानामिति दर्शयन्नायिकान्तरपरिचयाद्यपराधजनिता उत्तमा-नामपि शङ्का भवतीति दर्शयति । न ह्यत्र विभावा एत एवेति नियमः । नाप्येभ्यो विभावेभ्यः शङ्कैव नाप्येभ्यो भवत्येव शङ्केति । किन्तु शङ्का तावत् स्वसामग्रीतः प्रत्यात्म-वेद्या जायते । तन्मध्ये चैषामस्त्यनुप्रवेश इतीहोच्यते । अत एव याऽन्यगतत्वेन शङ्का यथा **समुद्रदत्तस्य नन्दयन्त्या**मन्यानुरागशङ्का । **दुर्योधन**स्य वा **भानुमत्यां,** साऽपीह शङ्कात्वेन परिगृहीतैव। केवलमत्यन्तानौचित्यमत्र नायकस्येति नैवंविधं वर्ण्णनोचितं भवति ।

**आकारसंवरणम्** इति । अवहित्थे यद् बाहुल्येन दृश्यते तदत्रापीति । तदनुभावयोग-माह यदि वाऽवहित्थमत्र भवतीति प्रदर्शयत्यत्र स्थायिनि शङ्का व्यभिचारितामेति तत्र नियमे-नाऽवहित्थमपीति प्रदर्श्यते । न तु व्यभिचारिणि व्यभिचार्यन्तरम् । एवं हि सति तस्मिन्न-प्यन्यदित्यादि शृङ्खलया तदाँ व्यभिचारिस्थायितां यायात् । यथा शङ्कायां चिन्ता तत्रापि

१. सम्बन्धयुत ॥ २. अवयव ॥ ३. शङ्का । खपुस्तके एव ॥ ४. पुंष्पदूषितकप्रकरणे ॥ ख पुस्तके एव ॥ ५. व्यभिचार्यन्तरम् ॥

निर्वेदस्तत्र ग्लानिस्तत्रालस्यमित्यादि । एवं सर्वत्र व्यभिचारिलक्षणे व्यभिचार्यन्तरोपादानं व्याख्येयम् । केचिदित्यनेनेदमाह— वस्तुतो न शङ्काया अयमनुभावोऽपि त्ववहित्थस्य, तस्य तु शङ्कयैकैस्थायिकत्वम् । नन्वाकारसंवरणं कथं शङ्कां गमयतीत्याशङ्क्याह— **तच्च** इति । उपाधयः संवरणोपायाः कथाविच्छेदातिकथनादयः । उपाधीयते आच्छाद्यते प्रकृतं यैरिति । उपाधीयन्तेऽन्यत्र प्रस्तावे योज्यन्त इति वा । इङ्गितान्यङ्गोपाङ्गपरिस्पन्दाः सूक्ष्मा ये संवरीतुं न पार्यन्ते, संवरणस्य च प्राँग्भाविनः संविवरीषितास्ते गृह्यन्ते तैरुपाध्यादिभिः करणभूतैः कुशलैः कर्तृभिस्तदाकारसंवरणं शङ्काऽनुभावत्वेनोपलक्षयितुं शक्यमेव ।

**द्विविधे**ति । यदन्यैरुक्तमत्र द्वैविध्यं तत् सर्वव्यभिचारिणामस्ति । स्वात्मगतो हि निर्वेदः कदाचित् परगतो दृष्टिचेष्टाद्युपलक्ष्यः, अहं निर्विण्णोऽयं निर्विण्ण इति प्रत्ययात् । तस्मादयमत्रार्थः । आत्मशब्देन स्वात्मगतोऽपराध उच्यते । परशब्देन परगतोऽपराधः । तत्र परगतेऽपराधेऽसम्भाव्यमानेऽपि कुतश्चिन्निमित्तात् सम्भावनापदवीमुपेयुषि या शङ्का यथा नन्दयन्त्यां दर्शिता सेह परोत्था विवक्षिता । एतदुक्तं भवति । य एव विभावाः स्वात्मनि शङ्कां सम्भाव्यमानदण्डनादिविषयां जनयन्ति । त एव कदाचित् स्वरूपकर्मिकामपि शङ्कां जनयन्ति किं चौरोऽयं स्यादिति । ननु तथाऽपि कथं परत्र चौर्याद्याशङ्का जायत इत्याह—**दृष्टिचेष्टाभिः** इति । स हि यदा परः कृतापराध इवावलोकयति चेष्टते वा कुतश्चिदप्रागल्भ्यभीरुत्वस्वभावादेर्निमित्तान्तरात्तदा सापराधा भवत्वन्यथा वा तत्र तु **चौर्या**-द्यपराधविषया शङ्का जायत इति । **पार्श्वानि** इति । शंसा[शः?] पुनः पुनरवलोकनं दर्शयति एतदेव च वायससाधर्म्यम् ॥ ३ ॥

असूया नाम नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिर्विभावैरुत्पद्यते । तस्याश्च पर्षदि दोषप्रख्यापनागुणोपघाताचक्षुःप्रदानाधोमुखभ्रुकुटीक्रियाऽवज्ञानकुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्ये भवतः ।

परसौभाग्येश्वरतामेधालीलासमुच्छ्र्यान् दृष्ट्वा ।
अभिनेतव्याऽसूया कृतापराधो भवेद्यश्च ॥
भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवर्तनैश्चित्रैः ।
गुणनाशनविद्वेषैस्तस्याः कार्यः सदाभिनयः ॥

गुणो नाश्यते दोषीक्रियते येन वचनेन तत्तथोक्तम् । यथा तपोजपनियते दाम्भिको

१ एकः स्थायी यस्य ॥ २. किं चौरोऽयमिनि शङ्कितः कश्चित् केनचिन् स्वरूपमेव कर्म यस्याः शङ्काया इति कृत्वा ॥ ३. प्रत्ययेन स्वप्रतावेव ॥

ऽयमिति । ४ । मदो नाम मद्योपयोगादुत्पद्यते । स च त्रिविधः स पञ्चविधभावश्च[1] । अत्रार्या भवन्ति ।

त्रिविधस्तु मदः कार्यस्तरुणो[2] मध्यस्तथाऽवकृष्टश्च[3] ।
करणं पञ्चविधं स्यात्तस्याऽभिनयः प्रयोक्तव्यः ॥
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् ।
परुषवचनाभिधायी कश्चित् कश्चित्तथा स्वपिति ॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः ।
परुषवचनाऽभिधायी रोदित्यपि चाधमप्रकृतिः ॥
स्मितवदनमधुररागो हृष्टतनुः किञ्चिदाकुलितवाक्यः ।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः ॥
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् ॥
सन्त्रासाच्छोकाद्वा भयाच्च हर्षाच्च कारणोपगतः ।
उत्क्रम्याऽपि हि कार्यो मदप्रणाशस्तथा तज्ज्ञैः ॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युदयसुखैर्वाक्यैस्तथैव शोकः क्षयं याति ॥

अवकृष्टो निकृष्ट इत्यर्थः । करणं क्रिया चेष्टा । तेन यैव पञ्चविधा चेष्टा स एव मदस्याभिनयः । स एव च भावशब्देन सूत्रे कथितः । तच्चेष्टापञ्चकमाह—कश्चिदित्यादिना। हर्षशोकहासक्रोधमोहानां मदेनैकस्थायिकत्वं दर्शयति । प्रकृतिभेदेन उत्तमस्तरुणमद एव मध्यमस्य मध्यम इत्यत्र न नियमः कश्चित् । अधमप्रकृतिरेव तु नष्टस्मृत्यादिस्वभाव इति। अनेन च तरुणो मदः सर्वेषां मध्यमो मध्यनीचयोरुत्कृष्टो नीचस्यैवेति दर्शितं भवति । शेत इत्यतिपाने सतीत्यर्थः । हृष्टा सरोमाञ्चा तनुरस्याः । सुकुमारं कृत्वा आविद्धा ईषत् स्खलन्तीत्यर्थः । कविनटोपदेशायाह । रङ्गे पिबत इति । कारणया प्रेरणया प्रयत्नकृतया सन्त्रासादिनिमित्तज्ञापनया उपगत आयातः । एतदुक्तं भवति— त्रासादिनिमित्तमेव मदा-

१. अनुभाव ॥ २. उत्तम ॥ ३. अवकृष्ट ॥

दजानन् कथं त्रासादिना क्षीणमदः स्यात्तस्मात्तन्निमित्तपरिज्ञानं यत्नतो विधेयमिति । द्रुतमित्यनेनोत्क्रम्येति दर्शितं क्रमत्यागं व्याचष्टे । प्रसङ्गादन्यदपि एवंजातीयकं दर्शयति । अभ्युदयसुखैरिति । अभ्युदयेन वाच्येन सुखयन्तीति तथोक्तानि । वाक्यग्रहणं प्रमाणोपलक्षणम् ॥ ५॥

श्रमो नामाऽध्वव्यायामसेवनादिभिर्विभावैः समुत्पद्यते । तस्य गात्रसंवाहननिःश्वसितमुखविकूणनविजृम्भणाङ्गमर्दमन्दपदोत्क्षेपणादिभिरनुभावैरभिनयः प्रयोक्तव्यः। अत्रार्या।

अध्वगतेर्व्यायामान्नरस्य सञ्जायते श्रमो नाम ।
निःश्वासवदनखेदैस्तस्याभिनयः प्रयोक्तव्यः ॥ ६ ॥

आलस्यं नाम स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावैः समुत्पद्यते । स्त्रीनीचानां तदभिनयेत् सर्वकर्मविद्वेषशयनाऽऽसनतन्द्री[द्रा]निद्रासेवनादिभिः । अत्रार्या ।

आलस्यं त्वभिनेयं खेदोपगतं स्वभावजं वाऽपि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥

खेद इति श्रमो विवक्षितस्तेन भावो भावान्तरे विभावतां प्रतिपद्यते एवेति दर्शितम् । सौहित्यमतितृप्तता । आहारवर्जितानामिति । अलसोऽपि ह्यवश्यमाहारं करोत्येव । आरम्भाश्चतुर्वर्गोपायप्रवृत्तयस्तेषामनारम्भेण आरम्भव्यतिरिक्तेन शयनसेवनादिनेत्यर्थः ॥७॥

दैन्यं नाम दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते । तच्चाऽऽवृतशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम् । अत्रार्या ।

चिन्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम् ।
सर्वमृजानां परिवर्जनैश्च विविधैरभिनयोऽस्याः ॥

चिन्ता नामैश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेन्निःश्वसितसन्तापध्यानाऽधोमुखचिन्तनकार्श्यादिभिरनुभावैः । मृजा शरीरसंस्कारः ॥८॥ अत्रार्ये ।

ऐश्वर्येष्टद्रव्यापहारजनिता बहुप्रकारा तु ।
हृदयवितर्कोपगता चिन्ता नृणां समुद्भवति ॥
सोच्छ्वसितैर्निःश्वसितैः सन्तापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनैरधृत्या च ॥

ऐश्वर्यभ्रंशस्तात्कालिकः । दारिद्र्यं तु कुलक्रमायातमपि भवतीति विशेषः । चिन्तनं स्मरणमिति मन्तव्यम् । चिन्तानुस्मृतेरन्यैव । चिति स्मृत्यामित्यादि त्वदूरविप्रकर्षेणार्थ-

---

१. प्रत्यक्षादि । ख. ॥ २. उद्वर्त्तनम् श्रमरूपः ख एव । –ऽऽलस्ये ख एव ॥ मृजा शरीरसंस्कारः ॥ ८ ॥ अयं पाठः कपुस्तके चिन्ता नाम ... इत्यस्मात् प्राग् वर्तते ॥ ३. प्रणिधानरूपा ॥

निर्देशः । सर्वधातूनां ह्यर्थोऽन्योऽन्यतो भिद्यत एव । तथा हि खेलृ गताविति यद्यपि पठ्यते तथाऽपि सविलासगमनमेव विशिष्टं खेलनमिति प्रसिद्धं खेखेलगामीत्यादौ । ग्रसनं च अक्रमकगर्वक्रोधावेशनिर्भरनिगरणविशिष्टमदनं न त्वदनमात्रमेवमन्यत्रावधेयम् । हृदये वितर्कस्योपगमो यस्याः सकाशाद् वितर्काद्वोपगमो यस्याः । अनेन चिन्तायाः पूर्वोत्तरकक्ष्ययोर्वितर्को भवतीति शिक्षयति ॥९॥

मोहो नाम दैवोपघातव्यसनाऽभिघातभयावेगपूर्ववैरानुस्मरणादिभिर्विभावैः समुत्पद्यते । तस्य निश्चैतन्यभ्रमणपतनघूर्णनादिभिरनुभावैरभिनयः प्रयोक्तव्यः भवत्यपि च

अस्थाने तस्करान् दृष्ट्वा त्रासनैर्वा पृथग्विधैः ।
तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥

अत्रार्या—

व्यसनाऽभिघातभयपूर्ववैरसंस्मरणजो भवति मोहः ।
सर्वेन्द्रियसम्मोहात्तस्याऽभिनयः प्रयोक्तव्यः ॥

दैवोपघातोऽग्न्युदकाद्युपद्रवः । व्यसनं पीडादि । तत्कृतोऽभिघात इति केचित् । अभिघातस्तु मर्मप्रहारादिः पृथगेव पुष्कलार्थः । भावान्तरमपि विभावतामेतीत्याशयेनाह—भयेति । व्यभिचारिणि च स्थायीभावो यद्यपि विभाव एव । तथाऽपि भयग्रहणं भये मोहस्य बाहुल्यसूचनार्थम् । भ्रमणमनवस्थानं चित्तस्य घूर्णनं तु देहस्य । तत्प्रतीकारशून्यस्येत्यनेन मोहस्य प्रागवस्थां किंकर्त्तव्यतालक्षणामपि मोहशब्दवाच्यां दर्शयति सर्वेन्द्रियसम्मोहादित्यनेनाऽन्तरस्य संवेदनस्य मूढेऽप्यनष्टतां दर्शयन् मोहस्य चित्तवृत्तिरूपतामाह ॥१०॥ स्मृतिर्नाम सुखदुःखकृतानां भावानामनुस्मरणम् । स्वास्थ्यजघन्यरात्रनिद्रोच्छेदसमानदर्शनोदाहरणचिन्ताऽभ्यासादिभिर्विभावैः समुत्पद्यते । तामभिनयेच्छिरःकम्पनाऽवलोकनभ्रूसमुन्नमनादिभिरनुभावैः । अत्रार्ये ।

सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम् ।
चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्योऽसौ ॥
स्वास्थ्याऽभ्याससमुत्था श्रुतिदर्शनसम्भवा स्मृतिर्निपुणैः ।
शिरउद्वाहनकम्पैर्भ्रूत्क्षेपैः साऽभिनेतव्या ॥

सुखदुःखयोः कृतं निष्पत्तिर्यतस्तेषामित्यनेन स्मृतेरशेषविषयव्यापकतामाह— जघन्यः पश्चिमो रात्रेर्भागः । धातुसाम्यकारीति स्मृतिहेतुर्यथोक्तं रात्रियामस्तुरीयः काल इति ।

---

१. श्लोकः ॥ २ शिरोभेद ॥

निद्रोच्छेदोऽर्द्धरात्रादावपि । सद्दशस्य दर्शनं श्रवणं वा । चिन्ता प्रणिधानम् । अभ्यासः पुनः पुनः परिशीलनं अवलोकनमिति सद्दशस्य । सुखदुःखमिति तज्जनकमित्यर्थः । विभावितमिति पटुप्रत्ययपरिगृहीतत्वमाह ॥ ११ ॥

धृतिर्नाम विज्ञानश्रुतविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभक्रीडादिभिर्विभावैः समुत्पद्यते । तामभिनयेत् प्राप्तानां विषयाणामुपभोगादप्राप्तोऽतीतोपहतविनष्टानामननुशोचनादिभिरनुभावैः । अत्रार्ये—

विज्ञानशौचविभवश्रुतशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविभावाद्यै रहिता तु सदा प्रयोक्तव्या ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
अप्राप्तैश्च न शोको यस्यां हि भवेद् धृतिः सा तु ॥

विज्ञानं विवेकज्ञानं, श्रुतविभवो बाहुश्रुत्यं[1], शौचाचरणं तपःसेवादि, अधिकस्याऽर्थस्य मनोरथाविषयस्य लाभः मनोरथस्य चार्थस्य लाभः । मनोरथ ईप्सितः । मन एव रथः प्राप्त्युपायो यस्मिन् । अत्र[3] कस्यचिद्विषयता, ईप्सितलाभे हि धृतो भवति सन्तुष्टत्वात् । कस्यचित् करणता, क्रीडया विनोद्यमानो दुःखितो धृतिं लभते । कस्यचिदुभयरूपता, विज्ञानश्रुतविभवादेरिवं[2] प्राप्तानां विषयाणामुपभोगमवलम्ब्य यदप्राप्तादीनामननुशोचनं तदादिभिरनुभावैरिति सम्बन्धः । तेन प्राप्तोपभोगपूर्वकत्वं सर्वेषामनुभावानामित्युक्तं भवति । न तु पृथगनुभावता प्राप्तभोगस्य । अप्राप्तः स्थितोऽपि तस्याऽविषयः । अतीतः स्थितोऽपि तद्विषयत्वादपगतः । उपहतो जीर्णादिरूपतां प्राप्तः । विनष्टो ध्वस्तः ॥ १२ ॥

व्रीडा नाम अकार्यकरणात्मिका गुरुव्यतिक्रमणाऽवज्ञानप्रतिज्ञाऽनिर्वहणपश्चात्तापादिभिर्विभावैः समुत्पद्यते । तां निगूढवदनाऽधोमुखविचिन्तनविलेखनवस्त्राङ्गुलीयकस्पर्शननखनिस्तोदनादिभिरनुभावैरभिनयेत् । अत्रार्ये ।

किञ्चिदकार्यं कुर्वाण एव यो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ॥
लज्जानिगूढवदनो भूमिं विलिखन्नखांश्च विनिकृन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥

अकार्यकरणशब्देन तज्ज्ञानमुच्यते । अकरणीयं मयैवं कृतमित्येवंभूतविज्ञानस्वभावेत्यर्थः । अत एव स्त्रीबालादेरपूर्वपुरुषसन्निधौ लज्जा दृष्टा, विनाऽप्यकार्यकरणात् । अकार्यकरणादात्मा यस्या इत्यन्ये । तत्पक्षे च गुरुव्यतिक्रमणादिप्रपञ्चमात्रं यत् पूर्वं स्वयं त्यक्तं

१. बहुश्रुतत्वम् ॥ २. एतेषु विभावेषु मध्ये ॥ ३. यथा ॥

पश्चात्तापं करोति ततो विवेकवतो लज्जा भवति । पूर्वापरविचारशून्यं मां लोकः कलयतीति विलेखनं भूम्यादेः । शुचिभिरिति उचितकार्यकारिभिरित्यर्थः । अकार्यकारिणां तु मध्ये मयैवाकार्यं कृतमिति न भवति संवित् । पश्चाद्यस्तापो मानसो विवेकः स हि तदा कृतस्योत्पुंसनायोगात् केवलं तापयत्येव । विनिकृन्तन् कुर्यादिति नात्र शत्रानुभावयौगपद्यं द्योत्यते किन्तु नखादीनि निकृन्तति वस्त्रादीनि वा स्पृशतीत्येव परमेतत् ॥ १३ ॥

चपलता नाम रागद्वेषमात्सर्याऽमर्षेर्ष्याप्रतिकूलादिभिर्विभावैरुत्पद्यते । तस्याश्च वाक्पारुष्यनिर्भर्त्सनसंप्रहारवधबन्धताडनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या ।

अविमृश्य तु यत् कार्यं पुरुषो वधताडनं समारभते ।
अविनिश्चितकार्यत्वात् स हि खलु चपलो बुधैर्ज्ञेयः ॥

वधताडनमिति । यत् पापरूपं सहसा न करणार्हं तदपीत्यनेनान्यदपि सूचितम् । स खलु चपल इति तेनाऽविमृश्याऽपर्यालोच्य कार्यकरणं चापल्यमिति यावत् ॥ १४ ॥

हर्षो नाम मनोरथलाभेप्सितावाप्तीष्टजनसमागमपरितोषदेवगुरुराजभर्तृप्रसादभोजनाच्छादनधनलाभोपभोगादिभिर्विभावैरुत्पद्यते । तमभिनयेन्नयनवदनप्रसादप्रियभाषणकण्टकितपुलकिताऽश्रुस्वेदादिभिरनुभावैः । अत्रार्या—

प्राप्ये वाऽप्राप्ये वा लब्धेऽर्थे प्रियसमागमे वाऽपि ।
हृदयमनोरथलाभे हर्षः सञ्जायते पुंसाम् ॥

**परितोष**—इति । पुत्रादिगतस्य हर्षस्य हर्षकारणत्वं वदन् मुनिः सजातीयोऽपि भावोऽन्यगतो भावस्य कारणं भवत्येव । यथा रामगतो निर्वेदचिन्तादिर्लक्ष्मणस्य निर्वेदचिन्ताद्युत्पत्तौ हेतुरिति सूचयति । अप्राप्य इति असम्भावनीयप्राप्तिके इत्यर्थः । हृदयं यद्यत्र वस्तुनि सारभूतं तल्लाभे हर्ष उत्पद्यते । तद्यथा सुवर्णार्थिनो देशान्तराणि भ्राम्यतोऽनन्तसुवर्णमूल्यरत्नलाभे मनोरथस्य तु हृदयग्रहणमाङ्गिक[1]व्यापाराणां व्युदासायेति तु न युक्तं तेषां [2]मनोरथेष्वसम्भाव्यत्वात् ॥ १५ ॥

आवेगो नाम उत्पातवातवर्षाऽग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाऽभिघातादिभिर्विभावैरुत्पद्यते । तत्रोत्पातकृतो नाम विद्युदुल्कानिर्घातप्रपतनचन्द्रसूर्योपरागकेतुदर्शनकृतः । तमभिनयेत् सर्वाङ्गस्रस्तताविमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः । वातकृतं पुनरवगुण्ठनाऽक्षिमर्दनव[3]स्त्रसंगूहनत्वरितगमनादिभिः । वर्षकृतं पुनः सर्वाङ्गसंपिण्डनप्रधावनछन्नाश्र[4]यगादिभिः । अग्निकृतं तु धूमाकुलनेत्रताङ्गसंवेगविधूननातिक्रान्ताऽपक्रान्तादिभिः ।

१. आधारभावेन भवनमङ्गानामाङ्गिकव्यापाराः ॥ २. मनोरथविषयेऽधिकरणत्वं न घटत इत्यर्थः ॥ ३. वस्त्रसंवरण ॥ ४. छादितस्य गृहस्याश्रयणम् ॥

कुञ्जरोद्भ्रमणकृतमपि त्वरितापसर्पणचपलगमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतमप्यभ्युत्थानालिङ्गनवस्त्राभरणप्रदानास्रपुलकितादिभिः । अप्रियश्रवणकृतमपि उर्वीपतनवलनपरिवर्त्तितपरिभावितविलापाक्रन्दादिभिः । व्यसनकृतं तु सहर्षापक्रमणशस्त्रवर्मधारणगजतुरगाऽऽरोहणसम्प्रधारणादिभिः

इत्येषोऽष्टविधो ज्ञेय आवेगः सम्भ्रमात्मकः ।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः ॥

अत्रार्ये । अप्रियनिवेदनाद्वा सहसा ह्यवधारितारिवचनस्य ।
शस्त्रक्षेपत्रासादावेगो नाम सम्भवति ॥
अप्रियनिवेदनोद्यो विषादभावाश्रयोऽनुभावोऽस्य ।
सहसारिदर्शनाच्चेत् प्रहरणपरिघट्टनं कार्यम् ॥

आविष्टहृदयानामेव प्रयोगयोग्यत्वादावेगः सर्वत्र प्रयोगे जीवितमित्याशयेन प्रतिविभावमस्यानुभावभेदेन प्रयोगवैचित्र्यं दर्शयति । तत्रोत्पातकृतो नामेत्यादिना । अतिक्रान्तापक्रान्ते चार्यौ ताभ्यामपसर्पेदित्यर्थः । उत्क्रान्तमर्यादं भ्रमणमुद्भ्रमणम् । अप्रियश्रवणे कैस्यचिदावेगस्तत्र च शैकानुभावा एवोपर्युपरिपातिनः क्षिप्रगतयश्च पश्चात्तु शोकः, धीरस्य तु प्रथममेव शोक इति **श्रीशङ्कुकः** । तच्चासत् । एवं ह्यावेगस्य स्थायित्वं स्यात् शोकस्य च व्यभिचारिता । तस्मादधीरप्रकृतेः शोक उत्पन्न एव द्वितीय एव क्षणे आवेगेनाक्रम्यते । धीरप्रकृतेस्तु भवन्नप्यावेगो धैर्येणाऽवहित्थोचितेन संव्रियते न तु नोद्भवति । तथा च वक्ष्यति । स्थैर्येणोत्तममध्यानामिति । न च व्यभिचारिसाहचर्यरहिता काचिदपि स्थायिनो दशास्ति । न च स्थायिभित्तिसम्भववन्ध्याव्यभिचारिचित्रस्थितिः । अपसर्पणैरिति । बहुवचनं प्रकारसूचकम् । पलायनादिभिः प्रकारैरित्यर्थः । अपसर्पणं च कुञ्जराग्न्यादिकृते आवेगे भूयसा भवतीत्युपात्तम् । अप्रियनिवेदनाद्य आवेगोऽस्य विषादाश्रयोऽनुभाव इति वदनव्यभिचारिणो व्यभिचार्यन्तरे इत्थं स्थितिर्भवतीति दर्शयति । दर्शितं चैतदादावेवास्माभिः सहसेति । पूर्वमनुपलब्धा गमनस्यारेर्दर्शनाद्यद्यावेगः सम्भवति तदा प्रहरणपरिघट्टनं चलनं कार्यम् ॥ १६ ॥

जडता नाम सर्वकार्याप्रतिपत्तिः । इष्टाऽनिष्टश्रवणदर्शनं व्याध्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेदकथनाभाषणतूष्णीभावाऽनिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः । अत्रार्या —

इष्टं वाऽनिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥

---

१. आवेगः ॥ २ अधीरप्रकृतेः । ख. ॥ ३. स्थायि ॥

कार्यविषयेऽप्रतिपत्तिरित्यनेन विवेकाभावो जडता। चक्षुर्भ्यामपि पश्यतः श्रोत्राभ्यामपि शृण्वत इति दर्शयन् मोहादस्याः स्वरूपान्तरं दर्शयति। अकथनं प्रश्ने कृतेऽप्युत्तरस्य अभाषणं तु सामान्येन सुहृदादौ वचनस्याप्रवर्त्तनम्। मोहादिति मोहात् पूर्वं परतो वा भवतीति सम्बन्धः ॥ १७॥

गर्वो नाम ऐश्वर्य-कुल-रूप-यौवन-विद्या-बलादिभिर्विभावैरुत्पद्यते। तमसूयाऽवज्ञाधर्षणानुत्तरदानाभाषणाङ्गावलोकनविभ्रमाऽपहसनपारुष्यगुरुव्यतिक्रमणाऽधिक्षेपणादिभिरनुभावैः। भवति चात्र।

विद्यावाप्ते रूपादैश्वर्यादथ धनागमाद्वापि।
गर्वः स च नीचानां दृष्टयङ्गविचारणैः कार्यः॥

विभ्रमः स्त्रीणां गर्वेऽनुभावस्तस्य लक्षणम्।

विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम्।
मदरागहर्षजनितो व्यत्यासो विभ्रमो ज्ञेयः॥

मदादेरुपलक्षणत्वाद्गर्वोऽप्यत्र गृहीत एव भवति। स चेति चोऽवधारणे। ये पूर्वं विद्यादिष्वयोग्यास्तेषां नीचानां तदाप्तौ गर्व एव भवति। भवत्येव च दृष्टयङ्गानां च विविधैरेव विकारपूर्वकैः सञ्चारणैरिति। तेन धारावाहितया स तेषां तिष्ठत्युत्तमानां तु क्षणद्युतिवद् भवत्येवेत्यावेदितमेव ॥ १८ ॥

विषादो नाम कार्यानिस्तरणदैवव्यापत्तिसमुत्थः। तमभिनयेत् सहायान्वेषणोपायविचिन्तनोत्साहविघातवैमनस्यादिभिरुत्तममध्यमानाम्। अधमानां तु विपरिबाधनाऽवलोकनमुखशोषजिह्वापरिलेहननिद्राश्वसितध्यानादिभिः। अत्रार्या—

कार्याऽनिस्तरणकृतश्चौर्याभिग्रहणराजदोषाद्यैः।
दैवादिष्टो योऽर्थस्तदसंप्राप्तौ विषादः स्यात्॥
वैचित्त्योपायचित्ताभ्यां कार्य उत्तममध्ययोः।
निद्रानिःश्वसितध्यानैरधमानां तु दर्शयेत्॥

उपायैरप्यनुक्रान्तस्य कार्यस्य अनिस्तरणं फलासम्पत्तिर्यतस्तथाभूता या दैवव्यापत्तेरदृष्टप्रतिकूलताया विषाद इति वदन् दैवदोषजां सदुपायेभ्योऽपि फलासम्पत्तिं विषादस्य विभावत्वेन सूचयति। क्रोधेऽयं न व्यभिचारीति केचित्तदसत्। दृश्यते हि रौद्रप्रकृतीनामपि विषादः— यथा रामाभ्युदये—

१. विरोधे ॥

एतत्तु क्षतिमातनोति मनसो यद्व्रजधाराङ्किते
कौर्येच्छाप्रणयः प्लवङ्गनखरैः प्राप्तः प्रहस्तोरसि । इति ।

मनःक्षतिर्हि दौर्मनस्यं विषादानुभावः । ये च प्लवङ्गाः पलायनैकशरणाः पशवस्तेषामेवंविधे कौर्येच्छैवानुचिता । किन्तु तदीयः प्रणयो यावदभिलषितवस्तुपरिपूर्णतेति दैवकृतेयं सदुपायेनाऽपि फलासम्पत्तिरित्येनुभाव उक्तः । न चैतद्विषादस्य क्रोधव्यभिचारित्वं युक्त्यागमानुभवैर्विरुध्यत इत्यलम् ॥ १९ ॥

औत्सुक्यं नाम इष्टजनवियोगानुस्मरणादिभिर्विभावैः समुत्पद्यते । तद्दीर्घनिःश्वसिताऽधोमुखविचिन्तननिद्रातन्द्राशयनाभिलाषादिभिरभिनयेत् । भवत्यपि च

इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या ।
चिन्तानिद्रातन्द्रागात्रगुरुत्वैरभिनयोऽस्य ॥

उत्सूयत इत्युत्सूशब्देनाङ्कुराद्यभिमुखीभूतो बीजादिः । ततः प्रतिकृति'के' केऽणो ह्रस्वे उत्सुक इति रूपम् । तस्य भाव औत्सुक्यम् । वियोगग्रहणं विप्रलम्भेऽस्य प्राधान्यं ख्यापयति । इष्टजनस्यालम्बनता । स्मृतेस्तूद्दीपनत्वमिति स्मरणग्रहणेन दर्शयति । शयनाऽभिलाषो विनाऽपि निद्रया भवतीति भेदेनोपात्तः ॥ २० ॥

निद्रा नाम दौर्बल्यश्रमक्लममदालस्यचिन्ताऽत्याहारस्वभावादिभिर्विभावैरुत्पद्यते । तामभिनयेद्वदनगौरवशिरोलोलनानेत्रघूर्णनजृम्भणगात्रमदोच्छ्वसितनिःश्वसितसन्नगात्रताऽक्षिनिमीलनसर्वक्रियासम्मोहादिभिरनुभावैः । अत्रान्तरे आर्ये ।

आलस्याद्दौर्बल्यात् क्लमाच्छ्रमाचिन्तनात् स्वभावाद्वा ।
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति ॥
तां मुखगौरवगात्रपरिलोलननयननिमीलनजडत्वैः ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयेत्प्राज्ञः ॥

दौर्बल्यं व्याध्यादिना क्षीणबलत्वं क्लमो घर्मादिकृतः ॥ २१ ॥

अपस्मारो नाम देवनागयक्षब्रह्मराक्षसभूतपिशाचादीनां ग्रहणाऽनुस्मरणोच्छिष्टशून्यागारसेवनाऽशुचिकालान्तरातिपातधातुवैषम्यादिभिर्विभावैरुत्पद्यते । तस्य स्फुरितकम्पितनिःश्वसितधावनपतनस्वेदस्तम्भवदनफेनजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भवति चात्र ।

भूतपिशाचग्रहणाऽनुस्मरणोच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशूचेश्च भवत्यपस्मारः ॥

१. प्रहस्तोरसि । ख. ॥ २. मनःक्षतिरूपम् । मनःक्षतिलक्षणः । ख. ॥

सहसा भूमौ पतनं प्रवेपनं वदनफेनमोक्षश्च ।
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे ॥

देवादिभिः पिशाचाद्यन्तैर्ग्रहैर्यदनुस्मरणमधिष्ठानाय। हीनसत्त्वो वा तान् स्मरन्नपस्मारी भवति । ग्रहणं तु प्रतीतम् । अशुचेः सतः कालान्तरातिपातश्चिरावस्थानम् । धातूनां वातपित्तश्लेष्मणां वैषम्ये सति बुद्धिस्थाने समावृते सत्यपस्मारो यदाहुस्तं[1]च धीसत्त्वसंप्लवात् ॥ २२ ॥

सुप्तं नाम निद्रासमुत्थम् । तदुच्छ्वसितनिःश्वसितसन्नगात्रताऽक्षिनिमीलनसर्वेन्द्रियसम्मोहस्वप्नायितादिभिरनुभावैरभिनयेत् । भवति चात्र ।

निःश्वासैः सोच्छ्वासैर्मन्दाक्षिनिमीलनेन निश्चेष्टः ।
सर्वेन्द्रियसम्मोहात् सुप्तं स्वप्नैश्च युञ्जीत ॥

निद्रासमुत्थमित्यनेन निद्राया एव गाढावस्था सुप्तमिति दर्शयन्निन्द्राया विषयेभ्य उपरिरंसात्मकत्वं स्वरूपमाह—**स्वप्नायितम्** इति प्रलपनमिति लोके प्रसिद्धं, स्वप्नादसाधारणतात्कालिकविषयज्ञानाद्भिन्नमेव । स्वप्नस्य अयितं प्रतीतिर्यतः स्वप्ने ह्यनुस्मरन् किञ्चित्तथा प्रलपति प्रलापाच्च तस्य तथा स्मृतिरनुगीयते लोकैः ॥ २३ ॥

विबोधो नाम निद्राछेदाहारविपरिणामस्वप्नान्तशब्दस्पर्शादिभिर्विभावैरुत्पद्यते । तं जृम्भणाऽक्षिविमर्दनशयनमोक्षणाऽङ्गवलनभुजाक्षेपाङ्गुलित्रोटनादिभिरभिनयेत् । अत्रार्या—

आहार विपरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणवदनाक्षिपरिमर्दैः ॥

निद्राया नियतमर्यादावशादाहारपरिणामादिना विनाऽपि छेदो भवतीति पृथग् निद्राच्छेद उक्तः । स्वप्नस्य योऽन्तः परिसमाप्तिः । शब्दादयस्तद्गता एवेति घण्टुकः[2] । बाह्या एवेति युक्ततरम् ॥ २४ ॥

अमर्षो नाम विद्यैश्वर्यधनबलाधिकैराक्षिप्तस्यापमानितस्य वा समुत्पद्यते । तं शिरःकम्पनप्रस्वेदाऽधोमुखविचिन्तनाऽध्यवसायध्यानोपायान्वेषणादिभिरभिनयेत् । भवति चात्र ।

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ।
नृणामुत्साहसम्पन्नो ह्यमर्षो नाम जायते ॥
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तनैः ।
शिरःप्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत पण्डितः ॥

---

१. सुप्तस्य ॥ २. वैषम्यम् ॥ ३. ज्ञापको हेतुः ॥

**अमर्ष** इति । प्रतिकरणेच्छारूपोऽयं क्रोधादन्य एव । ध्यानं निर्लक्षतयाऽवस्थानमिति चिन्तातो भिद्यते । उत्साहसम्पन्न इति निरुत्साहानां प्राकृतानां न भवतीत्यर्थः । उत्साहाऽध्यवसायशब्देन तदनुभावाः ॥ २५ ॥

अवहित्थं नाम आकारप्रच्छादनात्मकम् । तच्च लज्जाभयगौरवजैह्म्यादिभिर्विभावैरुत्पद्यते । तस्यान्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भवति चाऽत्र—

धार्ष्ट्यजैह्म्यादिसम्भूतमवहित्थं भयात्मकम् ।
तच्चागणनया कार्यं नातिचोत्तरभाषणात् ॥

आक्रियते बहिः प्रकाश्यते चित्तवृत्तिर्यैस्तेषां भ्रूविकारमुखरागादीनां संवरणमाच्छादनकारि यच्चित्तवृत्तिरूपं तदवहित्थं न बहिस्थं चित्तं येनेति निरुक्तं पृषोदरादित्वाच्च रूपमित्याहुः । जैह्म्यमगोपनीयेऽपि गोपनेच्छाकुटिलाशयत्वम् । प्रगल्भो ह्याकारं संवरीतुं जानातीति धाष्टर्चग्रहणम् । सलज्जोऽपि ह्यप्रगल्भो न जानाति तेन धाष्टर्चं सर्वविभावेष्वऽस्याऽनुयायीति मन्तव्यम् । अगगना तस्यार्थस्यावलेपेन स्थापनम् ॥ २६ ॥

अथोग्रता नाम चौर्याभिग्रहणनृपापराधा सत्प्रलापादिभिर्विभावैरुत्पद्यते । तां च वधबन्धताडननिर्भर्त्सनादिभिरनुभावैरभिनयेत् । भवति चाऽत्र—

चौर्याभिग्रहयोगान्नृपापराधात्तथोग्रता भवति ।
वधबन्धताडनादिभिरनुभावैरभिनयस्तस्याः ॥

चौर्यमुपलक्षणमकार्याणां तन्निमित्तं गृहीते जने राजादीनामौग्र्यं निर्दयत्वम् । एवं राजन्यपराध्यत्यसत्प्रलापिनि मिथ्यादोषवादिनि[२] ॥ २७ ॥

मतिर्नाम नानाशास्त्रचिन्तनोहापोहादिभिर्विभावैरुत्पद्यते । तामभिनयेच्छिष्योपदेशार्थविकल्पनसंशयच्छेदनादिभिरनुभावैः । भवति चाऽत्र—

नानाशास्त्रार्थनिष्पन्ना मतिः सञ्जायते नृणाम् ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ॥

मतिरिति । अपूर्वप्रतिभानरूपा । ऊहापोहावन्वयव्यतिरेकप्रत्ययौ विधिनिषेधविषयौ वा सम्भावनाप्रत्ययौ । नानाशास्त्राणां योऽर्थः प्रयोजनं विवेकलाभस्ततः सम्पन्ना जाता शिष्योपदेशलक्षणेन प्रयोजनेन ये देहविकारा भ्रूत्क्षेपादयस्तैरस्या अभिनयः ॥ २८ ॥

व्याधिर्नाम वातपित्तकफसन्निपातप्रभवस्तस्य ज्वरादयो विशेषाः । ज्वरस्तु द्विविधः । सशीतः सदाहश्च । तत्र सशीतः प्रवेपितसर्वाङ्गोत्कम्पनहनुचलनास्यविकूणनमुखशोषण-

---

१. औग्र्यमिति योगः ॥ २. जने ॥

रोमाञ्चाश्रुपरिदेवितादिभिरनुभावैरभिनेयः। सदाहस्तु विक्षिप्ताङ्गकरचरणभूम्यभिलाषाऽनुलेपनशीताभिलाषपरिदेवितोत्क्रुष्टादिभिः। ये चान्ये व्याधयस्तेऽपि मुखविकूणनगात्रस्तम्भस्तनितोत्क्रुष्टवेपनादिभिरभिनेयाः। अत्र श्लोकः—

समासतस्तु व्याधीनां कर्त्तव्योऽभिनयो बुधैः।
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः॥

ज्वरस्य सर्वव्याधिमध्ये प्रधानत्वादुपादानम्। मदनविकारे च ज्वरस्य सम्भवात्। व्याधिसमये च या तत्तद्व्याधिसमुचिता व्याधिमतश्चित्तवृत्तिः सैवेह व्याधिशब्देन विवक्षिता। व्याधिसन्निधौ हि चित्तं न स्वरूपेणावतिष्ठत इति॥ २९॥

उन्मादो नाम इष्टजनवियोगविभवनाशाऽभिघातवातपित्तश्लेष्मप्रकोपादिभिर्विभावैः समुत्पद्यते। तमभिनयेदनिमित्तहसितरुदितोत्क्रुष्टाऽसम्बद्धप्रलापशयनोपविष्टोत्थितप्रधावितनृत्तगीतपठितभस्मपांसववधूलननिर्माल्यचीरघटवक्तृशरावाभरणस्पर्शनोपभोगैरन्यैश्चाव्यवस्थितचेष्टाकरणादिभिरनुभावैः। भवति चाऽत्र—

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्।
विविधाच्चित्तविकारादुन्मादो नाम सम्भवति॥
अनिमित्तहसितरुदितोपविष्टगीतप्रधावितोत्क्रुष्टैः।
अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत॥

इष्टजनवियोगादुत्तमस्यापि विप्रलम्भे भवत्युन्मादः पुरुरवस इव। विभवनाशात्त्वनुत्तमस्य। भवनशोके व्यभिचारी। अत एवानुभावाः प्रकृत्यौ[1]चित्येन विभजनीयाः। चित्तं विकरोतीति चित्तविकार इति **टीकाकाराः**। **भट्टतोतस्तु**। चित्तस्य यो विकारो विकीर्णता एकत्राविश्रमगमनिश्चये सति तत उन्मादो भवतीति। तथाहि— **पुरूरवसो** झटिति प्रियामपश्यतस्तन्निमित्तं[2] च किञ्चिदप्यलभमानस्योन्मादः। एतदेव हि प्रतिजागरितं **कवि[3]कुलचक्रवर्त्तिना** तिष्ठेत् कोपवशादित्यादिना। अनिमित्तता प्रसिद्धनिमित्ताभावात्। व्याधावन्तर्भूतोऽप्युन्मादो विप्रलम्भादौ प्रयोगसौन्दर्यविचित्रचेष्टाभिः करोतीति पृथगुपात्तः। **एवमपस्मारे** वाच्यम्। स हि बीभत्सभयानकादेर्वैचित्र्यावहः॥ ३०॥

मरणं नाम व्याधिजमभिघातजं च। तत्र यद्दोष[4]वैषम्यगण्डपिटकज्वरविचर्चिकादिभिरुत्पद्यते तद् व्याधिप्रभवम्। अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथयानपातवि[5]नाशप्रभवम्। एतेष्विदानीमभिनयविशेषान् वक्ष्यामः। तत्र व्याधिजं विषण्ण-

१. उत्तममध्यमाधमरूप ख एव॥ २. प्रियाऽदर्शन ख॥ ३. कालिदासेन॥ ४. वातादीनाम्॥ ५. अवयवानाम्॥

गात्रं व्यायताङ्गविचेष्टितं निमीलितनयनं हिक्काश्वासोपेतमनवेक्षितपरिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् । अत्र श्लोकः ।

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ॥

अभिघातजे तु नानाभिनयविशेषाः । यथा शस्त्रकृते तावत् सहसा भूमिपतनविकम्पनस्फुरणादिभिरभिनयः प्रयोक्तव्यः । अहिदष्टे विषपीते वा नानाविषवेगाः । यथा— कार्श्यवेपथुदाहहिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः । अत्रानुवंश्यौ श्लोकौ भवतः ।

कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुं तथा ।
दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥
फेनं च पञ्चमे कुर्यात् स्यात् षष्ठे स्कन्धभञ्जनम् ।
जडतां सप्तमे कुर्यात् अष्टमे मरणं तथा ॥
श्वापदगजतुरगरथोद्भवं तु पशुयानपतनजं वाऽपि ।
शस्त्रकृतवत् कुर्यादनपेक्षितगात्रसञ्चारम् ॥
इत्येतन्मरणं प्रोक्तं नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यं बुधैः सम्यक् यथाभावाङ्गचेष्टितैः ॥

व्याधीनामेकभाव इति । एकत्वेन तुल्यत्वेन भवनमित्यनेन सर्वेभ्यो व्याधिभ्यो मरणं भवदेकरूपत्वेनैवाभिनीयत इत्युक्तं भवति । यदि वा व्याधीनां यदेकत्वेन निष्प्रतिद्वन्द्वित्वेन भावनमनेन व्याधिना न मे निवर्त्तितव्यमित्येवं रूपं चित्तं तदेव मरणमभिनीयमानमुच्यते । स एव हि प्राणानां त्यागः । तेन म्रियमाणावस्थैव चित्तवृत्तिरूपेह विवक्षिता न तु मृतावस्था । तत्राऽनुभावादेरभावात् । विषण्णानि च तानि अत एव निश्चेष्टानि गात्राणि तैः । इन्द्रियैर्वर्जितोऽभिनय इति सर्वेन्द्रियसम्मोहमाह । विषं पीतमनेनेति समासः । जातिकालसुखादिभ्य इति निष्ठातस्य परनिपातः ॥ ३१ ॥

त्रासो नाम विद्युदुल्काऽशनिपातनिर्घाताम्बुधरमहासत्त्वपशुरवादिभिर्विभावैरुत्पद्यते । तं संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलयादिभिरनुभावैरभिनयेत् । भवति चाऽत्र—

महाभैरवनादाद्यैस्त्रासः समुपजायते ।
त्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत् ॥

भीरून् जनान् त्रासयतीति भैरवः । शेष इत्यण् । झटिति विधूननकारी चमत्कृति-

१. विभाव, ख. एव ॥ २ सामान्याऽभिनयम् ॥ ३. प्रकर्षेण लीनता ॥

स्वभावस्त्रासो भयात् पूर्वापरविचारपूर्वकादन्य एवेत्यक्षिनिमेषैरिति बहुवचनेन सूचयति ॥ ३२॥

वितर्को नाम सन्देहविमर्शविप्रत्ययादिभिर्विभावैरुत्पद्यते । तमभिनयेद्विहृतविचारितप्रश्नसम्प्रधारणमन्त्रसंगूहनादिभिः । भवति चात्र–

विचारणादिसम्भूतः ससन्देहो नयात्मकः ।
वितर्कस्त्वभिनेयोऽसौ शिरोभ्रूक्षेपकम्पनैः ॥

सन्देहः किञ्चिदित्युभयावलम्बी प्रत्ययः संशयरूपः । विमर्शो विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । बाधकप्रमाणेन पक्षान्तराभावप्रतीतिमात्रं विप्रत्ययः । विप्रतिपत्तिर्वा । एभ्योऽनन्तरं भवितव्यताप्रत्ययस्वभाव एकतरपक्षशैथिल्यदायी पक्षान्तरं तुल्यकक्ष्यभावाच्च्यावयन् उन्मग्नतामन्यस्य दर्शयंस्तर्कः । स च संशयात् पृथगेव संशयेन तत्त्वबुभुत्सादिरूपस्य विमर्शादेः स्वीकारेऽपि कविशिक्षार्थं भङ्क्त्वा निरूपणम् । **अन्ये** तु धर्मिणि सन्देहो धर्मे तु विमर्शो भ्रान्तिज्ञानं विप्रत्यय इत्याहुः । विहृतेति धिया कार्यकलापानां पुनः पुनरुत्यागप्राप्ती विवक्षिते । मन्त्रसङ्गूहनग्रहणेनाऽस्यावहित्थेन तुल्यस्थायिकतामाह । विचारणापौर्वापर्यादिपरामर्शः । आदिग्रहणेन बाधकप्रमाणादि ततो ह्येकपक्षस्य शैथिल्यं जायत इति विचारणादिपूर्वक इत्युक्तम् । नयस्य षाड्गुण्यप्रयोगस्यात्मा, यतः अन्यपक्षबलवत्त्वगतात् सम्भावनाप्रत्ययादेव हि सर्वो नीतिप्रयोगः । तथा च–दैवमचिन्त्यं पुरुषकारस्तु चिन्त्य इति वदन् **चाणक्याचार्य**स्तर्कपूर्वकमेव समस्तं व्यवहारमाह । उक्तं च **भट्टतातेन** ।

सम्भावनाप्रमाणो हि तीक्ष्णप्रज्ञोऽपि यद् वदेत् ।
मा गा व्याप्तं नभोऽम्भोदैरम्बुभारानतैरिति ॥

एतदुपसंहरति ॥ ३३ ॥ त्रयस्त्रिंशदमी भावा इति त्रयस्त्रिंशदमी इति । अन्येषां त्वत्रैवान्तर्भावः । तद्यथा

दम्भस्यावहित्थे । उद्वेगस्य निर्वेदे । क्षुत्तृष्णादेर्ग्लानौ । एवमन्यदप्यूह्यम् । **अपरे** तु मन्यन्ते कः खलु चित्तवृत्तीर्गणयितुं समर्थः । गणने वा **तार्किक**तर्कितात्मगुणनवकेन वा, **साङ्ख्य**सङ्ख्यातबुद्धिधर्माष्टकविपर्ययादिप्रत्ययचतुष्टयेन वा शोच्यशिक्षितचित्तचैत्तद्वयभेदेन वा सर्वसङ्ग्रहे किमियता । अथ कविनटशिक्षार्थमेतावतो निरूपणमपरे तर्हि वक्तव्या एव । उक्ता एव वा सामान्याभिनये मुनिना पुरुषप्रमदागतभावचेष्टालङ्कारनिरूपणेन । इहाऽपि विभावाऽनुभावगणनायां सूचिताः । तथा हि–ग्लानौ क्षुत्तृष्णयोरभिधानं विभावत्वेन केवलमतिप्रसिद्धत्वात् । कविनटोपयोगिलक्षणमेषां नातीवोपयुज्यत इति न लक्षिताः ।

---

१. अनेन भवितव्यमिति ॥ २. तर्कात् ख एव ॥ ३. वितर्क ॥ ४. भरताध्यायभेदे ॥

**अन्ये** त्वाहुः इयतामेव प्रयोगे सौन्दर्यं भवति । तथा ह्येतावत्स्वेव सहचारिष्ववस्थाविशेषेषु प्रयोगे प्रदर्शितेषु स्थायी चर्वणयोग्यो भवति । **एके** तु मन्यन्ते एते तावद्विज्ञेया एतज्ज्ञानदिशा त्वन्येषां लक्षणमूह्यमिति । **रसकारणत्वेन** इति रसजनकत्वेन । **भावानाम्** इति रत्यादीनाम् । **चित्तवृत्त्यात्मकत्वाद्** इति व्यभिचारिषु स्थायिनि च सम्बन्धनीयम् । **न सह** इति क्रमभावित्वाच्चित्तवृत्तिविशेषाणाम् । **स्थायी तु** इति स्थायिव्यपदेशभाक् पुनरनुपचित एव स्थायीत्यर्थः । **अनुकार्ये** इति मुख्यवृत्त्या रामादौ रामादिरूपतानुसन्धानवशान्नर्त्तकेऽपीत्यर्थः । **विभावाद्ययोग** इति । किल स्थाय्येव वासनात्मतया स्थितोऽवगम्यमानो विभावादिभिः संयुक्तो रसः इतश्च विभावादिभिः संयोगात् प्राक् स्थायिनो विभावादि लिङ्गं विनाऽवगतिरपि कथमित्येको हेतुः १ ।

अपि च स्थाय्येव विभावादिभिरुपचितो रस इति स्थाय्यनुवादेन रसविधेयतायां स्थायिभावाः पूर्वमभिधेयाः स्युः । अथ चादावेव रसानामुद्देशो लक्षणं चाऽभिहितं पश्चात्तु स्थायिनामिति द्वितीयः २ ।

अन्यच्च स्थायिनां ये विभावादयोऽभिहितास्तैरेव योगे स्थायिनः स्फीता भवेयू रसा स्युरित्यर्थः । अयोगे तु स्थायिन एवेति किं रसावस्थाऽपरपर्यायायां स्फीतदशायां पुनर्विभावादिप्रतिपादनेन । इतश्च स्थायिरसानामुपभयेषामपि विभावादयः प्रतिपादिताः । केषुचित्केषांचिल्लेशेनापरेषां **विस्तरेण** इति । तथा ह्युत्साहो नामोत्तमप्रकृतिः । स चाविषादशक्तिशौर्यादिभिर्विभावैरुत्पद्यते । तस्य धैर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासम्मोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य धैर्यस्थैर्यत्यागशौर्यवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्य इति तृतीयः ३ ।

इतरच्चानुपचितः स्थायी स्थाय्येव तूपचितो रस इत्युच्यमाने एकैकस्य स्थायिनो मन्दतममन्दतरमन्दत्वादिविशेषापेक्षया आनन्त्यापत्तिः । रसस्याऽपि तीव्रतीव्रतरतीव्रतमत्वादिभिरसङ्ख्यत्वप्रसक्तिरिति चतुर्थः ४ ।

अथोपचयकाष्ठां प्राप्त एव रस इत्युच्यते, तर्हि स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितमिति षोढात्वं हास्यरसस्य कथं भवेदिति पञ्चमः ५ ।

अपरं चोत्तरोत्तरप्रकर्षतारतम्यवशेन ।

प्रथमे त्वभिलाषः स्याद् द्वितीये त्वर्थचिन्तनम् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्त्तनम् ॥

---

१. भरते । ख. ॥ २. एतस्य व्याख्या ॥ ३. स्थायिनाम् ख. एव ॥ ४. रसानाम् ख एव ॥ ५. लक्षणान्तरम् ॥

उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते।
उन्मादः सप्तमे ज्ञेयो भवेद् व्याधिरथाष्टमे।
नवमे जडता प्रोक्ता दशमे मरणं भवेदिति॥

दशावस्थः कामोऽभिहितः। तत्राऽपि प्रत्यवस्थमुत्तरोत्तरप्रकर्षतारतम्यसम्भवात् कामावस्थासु दशस्वसङ्ख्याताः शृङ्गाररसरतिभावादयः प्रसजेयुरिति षष्ठः ६।

किञ्च रसभावानामुत्तरोत्तरक्रमेण प्रकर्ष एव प्रसज्यते। अथ च शोकक्रोधादीनां कालवशात् कारणवशाच्च विपर्ययो दृश्यत इति सप्तम इति सप्तहेतवः। यदि वा प्रथमो द्वितीयस्य हेतोर्हेतुरिति षडेव। तदानीं हि द्वितीयस्य हेतोरित्थं व्याख्यापूर्वमिति विभावाद्ययोगावस्थायां रत्यादीनां रत्यादिशब्दैरभिधेयता काव्ये प्रसजतीति। तस्मादिति यस्माल्लोल्लटप्रभृतिव्याख्यानमसमीचीनं तस्मादन्यथा व्याख्यायत इत्यर्थः। **अनुकर्तृस्थत्वेन** इति नटस्थत्वेन। **लिङ्ग** इति लिङ्गबलं हेतुसामर्थ्यं गम्यगमकभावलक्षणः संयोगः सम्बन्धस्तस्मात्। **प्रतीयमानः** इति। अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनाऽन्याऽनुमीयमान विलक्षणस्तत्र[1]ासन्नपि सामाजिकानां चर्व्यमाण इत्यर्थः। **स्थायीभावः** इति। स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावः। **अनुकरणरूपत्वाद्** इति अनुकार्यगता हि चित्तवृत्तिरनेकस्वभावा विभाव्यते अनुकरणरूपा तु परमास्वादरूपैवेत्याशयः। **काव्य** इति। सेयं ममाङ्गेष्वित्यादिकाव्यबलात्। ननु वाडवेनेत्यादि काव्यबलादपि स्थाय्यवगतिः सम्भवति, तत्कथं विभावादीनां त्रयाणामेव हेतुत्वमुक्तं ननु स्थायिनोऽपीत्याह। **स्थायी तु** इति। **अनुसन्धेयः** इति अनुसन्धातुं शक्यः। **वाडवेनेव** इति। अस्य पूर्वमर्द्धम्।

विवृद्धात्माप्यगाधोऽपि दुरन्तोऽपि महानपि।

एतद्वाक्यं [2]**कृत्यारावणे** रामेण स्वशोकस्याऽभिधायकमुक्तं नाभिनयः। **शोकेन कृतः** इति। अस्योत्तरमर्द्धम्।

हृदयस्फुटनभयार्त्तै रोदितुमभ्यर्थ्यते सचिवैः।

इदं **तापसवत्सराजे** विनीतदेववाक्यमुदयनगतं शोकमभिदधाति नाभिनयः। एतद् व्यतिरेकेणाह

भाति पतितो लिखन्त्यास्तस्या वाष्पाम्बुशीकरकणौघः।
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि॥

**अत एव** इति। यतः काव्यबलादपि स्थायी नावगन्तुं शक्यते। **भिन्नविभक्तिकमपि** इति। आस्तां विभावानुभावव्यभिचारिस्थायिसंयोगादित्येकविभक्तिकत्वेन

---

१. नटे॥ २. नाटके॥

भिन्नविभक्तिकमपि स्थायिना रसनिष्पत्तिरिति स्थाय्येव रसीभवतीति वेत्येवंरूपतया। **तेन** इति। यतः प्राक्कथमपि न स्थायी प्रतीयते। विभावादियोग एव ह्यनुकरणरूपः स प्रतीयते। अत एव शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मक इति तल्लक्षणं समीचीनम्। **अर्थक्रिया** इति। तेन स्थाय्यनुकरणरूपो रस इति नानुपादेयमित्यर्थः। न च स्फुरन्ननुभवः कथञ्चित् पर्यनुयोक्तुं शक्य इत्याह— **न च** इति। **नर्त्तक एव** इति। सुखित्वधर्मेण सदृशेनाभेदोपचाराद् राम एवायमित्यर्थो लभ्यते। **अयं न सुखी** इति अयं न राम इत्यर्थः प्रतिभातीति। **सन्देहस्तत्सदृश** इति रामः स्याद्वा न वायमित्येषोऽपि सन्देहार्थो व्याख्येयः। तत्त्वनर्त्तक एव सुखीति। अयमेव राम इति च विपर्ययोऽयं न सुखीति धीरिति यः सुखीत्यादिना व्याख्यातम्। **नासौ** इति। न पुनरसावेवाऽयं राम एवायमिति प्रतीतिरस्ति। अनेन सन्देहविपर्ययावपि व्यवच्छेद्यौ सङ्गृह्येते। **विरुद्धा** इति। विरुद्धा सन्देहाद्यात्मिका। **अविवेचित** इति असंवेदितानेकरूपताप्रतिभासः। **रोमाञ्च**— इति। सात्त्विका अनुभावाः। **भुजाक्षेप**— इति आङ्गिकाः। **भ्रूक्षेप** इति उपाङ्गिकाः। **तैः** इति कृत्रिमत्वेन गृहीतैः।

**कारणान्तर** इति प्रसिद्धाद्रतिलक्षणात् कारणाद्रत्यनुकरणं नाम कारणान्तरम्। तत्प्रभवाश्चेदनुभावाः स्युस्तथैव च विशेषविदा यदि विज्ञायेरन् तदा रत्यनुकरणलक्षणस्य वस्त्वन्तरस्यानुमानं समञ्जसं स्यात्। न चैवं तत्कथमिव रत्यनुकरणप्रतीतिः। अविशेषविदा च तथाविधानुभावदर्शने रतिरेवानुमीयते। तच्च मिथ्याज्ञानमेवेत्यर्थः। **यथा** इति। गोमयप्रभवाद् वृश्चिकाद्गोमयस्यैवानुमानं, वृश्चिकप्रभवाद्वा तस्माद् वृश्चिकस्यैव युक्तमिति सुशिक्षितपक्षे दृष्टान्तोऽयम्। अन्यद् वृश्चिकप्रभवाद् वृश्चिकाद्गोमयस्यानुमानं मिथ्याज्ञानमेवेति। **यत्राऽपि** इति। अकृत्रिमत्वग्रहणपक्षोऽयम्। **नैतावता** इति। क्रुद्धेन सदृशो नट इति हि सादृश्यमात्रं तत् न तु क्रुद्धानुकारो नटः क्रोधानुकारो वा रौद्रः कश्चिद्वस्तुभूत इत्यर्थः। **तथा प्रति** इति अस्येयमिति यो न सम्बन्धप्रतीत्युत्पादहेतवः [ तुः ? ]। **तस्यैव** इति। स्थायिन एव। **अस्मिन्** इति। अस्मिन्नटेऽयं स्थायी। **उक्तम्** इति जडत्वेनेत्यादिना। **नाऽपि वास्तु** इति तृतीयः पक्षः। **अन्यथाऽपि** इति। सदृशकरणार्थत्वं परिहृत्यानुसरणार्थत्वेनाऽपि। **तदनुकारेऽपि च** इति। तच्छब्देन रतिः परामृश्यते। अभ्युपगमोऽयम्। अनुकरणरूपत्वादेव च नामान्तरं प्रवर्त्तेत इति हि **तत्रभवन्तः**। ततश्च रत्यनुकारे कान्तवेषगत्यादयोऽप्यनुकार्याः। अनुकरणरूपत्वे च तेषां कृतानि नामान्तराणि यैस्ते व्यपदिश्यन्ते मुनिवचनेषु तावन्नोपलभ्यन्त इति भावः।

**तत्र यदि** इति। अनेन ग्राह्य ईत्यन्तेन परोक्तस्य सामान्येनायमर्थो यथा हरितालादि-

---

१. शंकुक ख एव ॥

संयोगाद्गोप्रतीतिस्तथा विभावादिसंयोगाद्रतिप्रतीतिः । विशेषेण त्वयं यथा सन्निवेशविशेषावस्थितहरितालादिसंयोगाद्गवानुकारप्रतीतिस्तथा विभावादिसंयोगाद्रत्यनुकारप्रतीतिरित्येवमर्थद्वयं मनसि परिकल्प्य घटमानसंयु[1]ज्यर्थविषयनिर्विशेषणहरितालादि[2]शक्तिप्रदर्शनेन प्रथमपक्षं मूलत एव निरस्य यथावस्थितदृष्टान्तवस्तुतत्त्वविवेकपुरःसरं दृष्टान्तदार्ष्टान्तिकवैषम्योपदर्शनेन द्वितीयमपि पक्षमधिक्षिपतीति । **सिन्दूरादिभिः** इति हरितालस्य वा सिन्दूरस्य वा मुख्यत्वं भवतु न काचित्क्षतिः । **नैवम्** इति । यथा सिन्दूरादिसमूहविशेषो गोसदृशताप्रतिपत्तिविषयो न तथेत्यर्थः । **तेन** इति । स्थायिभावान्न सत्त्वमुपनेष्यामः । स्थाय्येव तु रसीभवेदित्यादिषु मुनिवचनेषु विरोधो मा भूत् । प्रामाणिकजनश्च दूषणाविष्करणामौखर्येण मा बाध्यतामिति सामग्रीलक्षणकारणोपचारःस्थायिलक्षणकार्ये साङ्ख्यदृग्दुर्विदग्धेन येन विधीयते तस्यैवंविधसाहसविधातुः किमाचक्ष्महे इत्यर्थः । **तन्त्र**–इति नाट्यतन्त्रम् । **रसो न प्रतीयत** इति रसस्य प्रतीत्यभिव्यक्ती मुख्यतया उत्पत्तिश्चो[3]पचारेण **भट्टतोत**स्याभिमता । एष एव च पक्षो **यथोपाध्यायं** शिष्या इत्या[4]**चार्यस्या**ऽनुमतोऽत एव च प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इत्यादिना तत्र तत्र रसस्य प्रतीत्यादिक**माचार्यः** स्वयं व्यवस्थापयिष्यतीति **शङ्कुका**दिमतनिरसनानन्तर**मुपाध्याय**मतं न प्रदर्शितम् ।

**करुणे दुःखित्वम्** इति । ततः करुणप्रेक्षासु पुनरप्रवृत्तिर्भवेदित्यर्थः । किञ्च रामादिचरितमयात् काव्यादसौ प्रतीयते । ततश्च स्वात्मगतत्वेन प्रतीतौ स्वात्मनि रसस्योत्पत्तिरेवेत्यभ्युपगतं स्यात् । **सा चायुक्ता** इत्याह । **न च सा** इति । **अविभावत्वाद्** इति सामाजिकं प्रतीत्यर्थः । न च स्वकान्तास्मरणं मध्ये संवेद्यत इत्याह– **स्वकान्ता** इति । कान्तात्वं साधारणं वासनाविकाशहेतुर्विभावतायां प्रयोजकमिति चेद्देवतावर्णनादौ तदपि कथमित्याह– **देवतादौ** इति । **समुद्र**– इति । अलोकसामान्यानां च रामादीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयुः । न चोत्साहादिमान् रामः स्मर्यतेऽननुभूतत्वादित्याह– **न च तत्त्वतः** इति । **सरसता** इति रसोपजनः । **दूषणम्** इति जातावेकवचनम् । तेन स्वगतपरगतत्वविकल्पपुरःसरं करुणे दुःखित्वं स्यादित्यादीनि दूषणानीत्यर्थः ।

**तस्माद्** इति । यतो न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः । किन्त्वन्य[5]शाब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात् । तत्राऽभिधायकत्वं वाच्यविषयं भावकत्वं रसादिविषयं भोग[6]कृत्त्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः । तत्राभिधाभागो यदि शुद्धः स्यात्तत्तन्त्रादिभ्यः शास्त्रन्यायेभ्यः श्लेषा[7]द्यलङ्काराणां को भेदः ।

---

१. निर्वर्त्यर्थ ख एव ॥ २. निर्वर्तनरूप ॥ ३. चर्वणयोत्पत्तिर्यतः ॥ ४. अभिनवगुप्तस्य ॥ ५ शास्त्राख्यायिकादि ॥ ६. काव्यस्य ॥ ७ यदि रसविषयं भावकत्वं न स्यादित्यर्थः ॥

वृत्तिभेदवैचित्र्यं चाकिञ्चित्करम् । श्रुतिदुष्टादिवर्जनं च किमर्थम् । तेन रसभावनाख्यो द्वितीयोऽपि व्यापारो यद्वशादभिधापि विलक्षणैव । तच्चैतद्भावकत्वं रसान् प्रति यत् काव्यस्य[1] तद्विभावादीनां साधारणत्वापादनं नाम । भाविते च रसे तस्य भोगो योऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुतिविस्तरविकाशनामा रजस्तमोवैचित्र्यानुविद्धसत्त्वमयनिजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणः परब्रह्मास्वादसविधः स एव च प्रधानभूतोंऽशः सिद्धिरूप इति । तथा चाह

अभिधा भावना चाऽन्या तद्भोगी[2]कृतिरेव च ।
अभिधा[3]धामतां याते शब्दार्थालङ्कृती[4] ततः ॥

ततोंऽशत्रयमध्यादित्यर्थः ।

भावनाभाव्य एषो[5]ऽपि शृङ्गारादिगणो मतः ।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः ॥ इति ।

**तत्र** इति तेषु पक्षेषु । **पूर्वपक्षः** इति । स्थाय्येव विभावानुभावादिभिरुपचितो रस इति प्रथमो व्याख्याप्रकार इत्यर्थः । **अयम्** इति । अपरे हि व्याख्याप्रकाराः केचिदुपाध्याय**भट्टतोतेनैव** निरस्ताः । केचिच्च कथञ्चिदभ्युपगम्यन्ते । प्रथम एव च प्रकार इदानीं हेयतया चक्षुषोरग्रतः परिस्फुरित इतीदमा तस्य निर्देशः ।

**तद्दूषणम्** इति । विभावाद्ययोगे इत्यादि उपायवैलक्षण्यादिति । यथा प्रतीतिमात्रत्वेनाविशिष्टत्वेऽपि प्रात्यक्षी आनुमानिकी आगमोत्था उपमानप्रभवा प्रतिभा न कृता योगिप्रत्यक्षजा प्रतीतिरुपायवैलक्षण्यादन्यान्यनामिका, तद्वदियमपि प्रतीतिश्चर्वणास्वादभोगापरनामा भवतु तन्निदानभूताया हृदयसंवादाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वादित्यर्थः । **रसः** इति रसः स्यान्न तृतीया गतिरिति सम्बन्धः । तच्च नित्यत्वमसत्त्वं च रसस्य भवतापि नाभ्युपगम्यत इत्युत्पत्त्यभिव्यक्ती कथञ्चिदङ्गीकर्तुमुचिते इत्यर्थः । प्रतीतिरप्यभ्युपगन्तुं योग्यैवेत्याह— **न चाऽप्रतीतम्** इति । किन्तु पिशाचवदव्यवहार्यमेव भवेदित्यर्थः ।

**गुणानाम्** इति । सत्त्वरजस्तमसाम् । **संसर्गादिः** इति । यथा भावनानियोगादिप्रधाने शास्त्रे[6] फलस्यापूर्वलक्षणस्य प्रधानस्य भावनादेवैकत्वात् संसर्गो[7] भेदो वा वाच्यार्थस्तद्वदेवात्र व्यापारप्रधाने काव्ये नियतश्रोतृगतप्रतिष्ठालक्षणसिद्धिपरमफलहेतोश्चर्वणास्वादापरपर्यायभोगलक्षणस्य फलस्य करणादेवैकत्वात् शृङ्गारादी रसः काव्यार्थो मत

१. कर्त्तरि षष्ठी ॥ २. भोगीकरणम् ॥ ३. अभिधैव धाम ययोरभिधाया उपरीत्यर्थः ॥ ४. शोभावचनोऽलङ्कृतिशब्दस्तेन दोषाभावो गुणाश्च गृहीताः ॥ ५. अपिः पुनरर्थे ॥ ६. मीमांसारूपे ॥ ७. दृष्टान्तद्वयं वक्ष्यमाणदार्ष्टान्तिकस्य ॥ ८. अयं सहृदय इत्येवंरूपा ॥

इत्यर्थः। **तद्विषयः** इति। आस्वादरूपप्रतीतिगोचरः तेन **भट्टतोते**नापि सर्वमेतदभ्युपगम्यत एवेत्याशयः। **न त्वेवम्** इति। न त्वेकोऽन्यथा व्याचष्टेऽपरोऽन्यथेतरश्चान्यथेत्येवं रसतत्त्वमलब्धप्रतिष्ठं कथमास्तामिति निर्विण्णप्रायस्य जिज्ञासोः प्रश्नः। **किं कुर्मः** इति। निराम्नायं नाद्यागमरहस्यं न कश्चिद्वेत्तीति सजुगुप्सम**आचार्य**स्योक्तिः— **धिगनागमित्वम्** इति। तथा ह्यनागमज्ञो **लोलट**प्रभृतिः स्थाय्येव विभावानुभावादिभिरुपचितो रस इत्यादिना प्रकारेण किं न दूषयति। सर्वमप्यसङ्गतार्थं प्ररूपयतीत्यर्थः। यद्येवं कुत इह **तेन्**मतनिराकरणेन **अन्यविहित**तन्मतनिराकरणानुवादेन (?) चात्मनो दुर्जनत्वमाविष्क्रियते इत्याह— **ऊर्ध्वोर्ध्वम्** इति। **शोधितानि** इति। कुतस्तेष्ववकरप्रायं यदासीत्तत् परिहृतमित्याह—**पूर्व**— इति। **योजनाः** व्याख्याः। **मूल**— इति। मूलभूतस्य **मुनि**मतस्याम्नायागतस्य या प्रतिष्ठा स्थिरीकरणं सैव फलं प्रयोजनमिति।

**काव्यार्थान्** इति। वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावा इति परिपूर्णं **भाष्य**वाच्यम्। अस्यार्थः—पदार्थवाच्यार्थौ रसेष्वेव पर्यवस्यत इत्यसाधारण्यात् प्राधान्याच्च काव्यस्यार्था रसाः अर्थ्यन्ते प्राधान्येनेत्यर्थाः। नन्वर्थशब्दोऽभिधेयवाची। स्वशब्दानभिधेयत्वं हि रसादीनां दर्शितमेव। एवं काव्यार्था रसास्तान् कुर्वते ये स्थायिव्यभिचारिणस्ते भावाः। स्थायिव्यभिचारिकलापेनैव हि आस्वाद्योऽलौकिकोऽर्थो निर्वर्त्यते। पूर्वं हि स्थाय्यादिकमवगच्छति ततः सर्वसाधारणतया आस्वादयति तेन पूर्वावगमगोचरीभूतः सन् स्थाय्यादिरुत्तरभूमिकाभागिन आस्वाद्यस्य रसस्य भावको निष्पादक उच्यते। **केन भावयन्ति** इति करणं दर्शयति। **वागङ्ग**— इति। वागादयस्तत्कर्मसु वर्तन्ते तेन वर्णनाद्यात्मना वाचिकेन सन्निवेशवलनादिना आङ्गिकेन अन्तर्बहिरात्मना सात्त्विकेन करणभूतेनोपेतान् सम्बद्धान्[2] करणं हि कर्मणि कर्तरि च यद्यपि सम्बध्यते तथाऽपीह भाव्यस्य[3] प्राधान्यात्तत्सम्बद्धं दर्शितमिति भावैर्हि यः काव्यार्थो भाव्यते स एव रस इत्याह— **तद्** इति।

**अर्थित्वादि** इति। पुत्रार्थित्वादि। **प्रतिपत्ति** इति वाक्यार्थप्रतिपत्तिमात्रात्। **इतिवृत्त** इति। इतिवृत्तम् इतिकर्त्तव्यतेत्यर्थः। **उमापि** इति **हरस्तु** इति चामूभ्यां वाक्याभ्यां परस्परमुमाहरयो रतिः प्रदर्शिता तत्प्रतीतिस्वरूपं च प्रथमवाक्यसमुत्पन्नभयप्रतीतिस्वरूपप्रदर्शनेनैव चरितार्थमिति न निरूपितम्। **त्रासकस्य** इति मृगपोतकादेः। **अपारमार्थिकत्वाद्** इति। अत्र हेतुविशेषरूपत्वाभावादिति। **व्याप्तिग्रह इव** इति। यत्र यत्र धूमस्तत्र तत्राग्निरिति यत्र यत्र वा [4]कम्पस्तत्र तत्र भयमिति व्याप्तिग्रहणकाले यथा विततं

१. भट्टनायक ॥ २ ज्ञापकज्ञाप्यरूपः सम्बन्धः ॥ ३. रसस्य ॥ ४. विशिष्ट ख. एव ॥

साधारण्यं तथाऽत्राऽपीत्यर्थः । **अन्योन्य**– इति । काव्यार्पितैर्वस्तुसन्तो वस्तुसद्भिश्च काव्यार्पिता देशादयोऽन्यथाभावेन प्रतिबध्यन्त इत्यन्योन्यप्रतिबन्धः । **रम्याणि वीक्ष्य** इति । इदं प्रतीतिसंविच्चमत्काराऽपरपर्यायत्वेनाऽभ्युपगता स्मृतिरूपत्वेनास्फुरन्ती या स्मृतिस्तस्यामुदाहरणम् । अत्र हि स्मरतीति या स्मृतिरुपदर्शिता सा न तार्किकप्रसिद्धा पूर्वमेतस्यार्थस्याननुभूतत्वादपि तु प्रतिभानापरपर्यायसाक्षात्कारस्वभावेयमिति । **रतिरेव** इति रतिमात्रम् । **विशेष** इति विशेषान्तरं देशकालाश्रयाद्यालिङ्गितत्त्वम् । **नानिर्वाच्ये-** ति वस्तुभूतत्वात् । **तदारोपादि** इति । तच्छब्देन लौकिकी परामृश्यते । आरोपो वस्त्वन्तरे वस्त्वन्तरोपचारः । आदिग्रहणेनाध्यवसानम् । **सम्भावना** इति । अयोग्यता व्याख्यानमिदम् । तेन सत्यैव विघ्नाः । **निःसामान्य**– इति । सुकुमारराजपुत्रादीनां निःसामान्योत्कर्षोपदेशविषया या व्युत्पत्तिः सैव प्रयोजनं यस्य तस्मिन् । **यथासम्भवम्** इति । **तज्जिहासया** इति **तद्गोपनेच्छया** इति चास्मिन् द्वये तच्छब्देन दुःखसंवित् परामृश्यते । **कार्यो नाऽतिमसङ्गः** इति । अनेन ग्रन्थेन पल्लवप्रदर्शितेन यत्पूर्वरङ्गानि-गूहनं तेनेत्यर्थः । **प्रस्तावना** इति ।

> सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः ।
> प्रसाद्य रङ्गं विधिवत् कवेर्नाम च कीर्त्तयेत् ॥
> प्रस्तावनां ततः कुर्यात् काव्यप्रज्ञापनाश्रयाम् ।

इत्यनेन यत् प्रस्तावनावलोकनं[1] तेनेत्यर्थः । **स्वरूपस्य निह्नवाद्** इति । रूपा-न्तरस्य चाऽऽरोपितस्य सत्यतदीयरूपनिह्नवमात्र एव पर्यवसानादिति च प्रतीत्य भवने हेतुद्वयम् । **स्वरूपे** इति आरोपिते रूपे । **प्रतिपदार्थ**– इति । पदार्था आसीनपुष्प-गण्डिकादयो रञ्जनोपयोगिनः । **शब्दलिङ्ग** इति । शब्द एव लिङ्गं शब्दलिङ्गम् । **न प्रतीतिर्विश्राम्यति** इति । न प्रतीतिः स्फुटा भवतीत्यर्थः । **स्फुटप्रतीतिरूपेति** । अस्फुटत्वाभावे हेतुरयम् । **तदपसारणाद्** इति । अलातचक्रादिप्रमित्यपसारणात् । **अभि-नया** इति । प्रतीतेः प्रतीतिस्फुटत्वस्य चोपायभूता एवैते इत्यर्थः । **तदतिरिक्तः** इति । तदन्यः प्रधानभूत इत्यर्थः । **तथा** इति संविद्विश्रान्तिलक्षणचर्वणापात्रम् । तथा चर्वणा-पात्रत्वे हेतुभूतं तावत् कासाञ्चित् स्थायिसंविदां पुरुषार्थनिष्ठत्वेन प्राधान्यमुपदर्शयति । **तत्र** इति । **पुरुषार्थनिष्ठा** इति काश्चित् संविदः प्रधानमिति सम्बन्धः । **तत्प्रधानेषु** इति क्रोधप्रधानेषु रूपकेषु । **भावः** इति शमनामा । **शोकसंविच्चर्वणेऽपि** इति । लोक-प्रसिद्ध्या सम्भाव्यमानदुःखात्मकेऽपीत्यर्थः । **हृदयविश्रान्तिः** इति । आनन्द इत्यर्थः ।

१. नाटकार्थं ॥ २. दर्शनम् ॥

**रत्यादीनाम्** इति चतुर्णाम् । **हासादीनाम्** इति पञ्चानाम् । **एतावताम्** इति नवानाम् । **अभीष्टवियोग–** इति शोकसंवित् । **अशक्तौ तु** इति **अपरिचित–** इति चोभयप्रकारा भयसंवित् । **किञ्चिद्** इति जुगुप्सासंवित् । **किञ्चिच्च** इति निर्वेदप्राय[1]भावसंविच्चोपदर्शिता । **अस्थायिता** इति व्यभिचारिता । **उद्बोधका** इति न तु जनकाः स्थायिभावानिति उपनेष्याम इति शेषः । ये स्थायिनो भावा लोके चित्तवृत्त्यात्मानो बहुप्रकारपरिश्रमप्रसवनि[2]बन्धनकर्त्तव्यताप्रबन्धाधायिनस्तानपि नाम रसत्वं विश्रान्त्येकायतनत्वेनोपदेशदिशा नेष्यामः । **सामान्यलक्षणशेषभूतया** इति । विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरित्यादिना ।

[3]यथा बीजाद्भवेद्वृक्षो वृक्षात् पुष्पफलं पुनः ।
तथा मूलं रसाः सर्वे ततो भावा व्यवस्थिताः ॥ इति

पर्यन्तेन ग्रन्थसंदर्भेण यद्रसनिष्पत्तिसामान्यलक्षणमभिहितं तत्पर्यन्तवर्त्तिन्येत्यर्थः । **विशेषलक्षणनिष्ठया** इति । ते[4]षामुत्पत्तिहेतवश्चत्वारो रसा इत्यादिना ग्रन्थेन यद्विशेषलक्षणं प्रपञ्चितं तत्परयेत्यर्थः । **गुण–** इति । एकस्य प्रधानतायामितरयोर्गुणभाव इत्यादिना । **अर्थः** इति वासनात्मतया स्थितः स्थायी । **शङ्कुकादिभिः** इति आदिग्रहणात् **लोल्लट**प्रभृतिभिः इति पश्चानुपूर्व्या लभ्यते । असत इति स्थाय्यनुकरणस्य वस्तुसत इति स्थायिनः । **शल्यभूतम्** इति । स्थाय्येव रस इत्येवमसम्भवदर्थसमर्पणात् । **औचित्याद्** इति । औचित्यमात्रात् । **औचित्यम्** इति । यत उद्यानादीनां विभावादित्वावलम्बनं ततः स्थायिनो रसीभावौचित्यमित्यर्थः । **तत्स्थायी** इति तस्मिन् स्थायिनि । **एतेषाम्** इति तारतम्याश्रयेणावबोधज्ञानानुभवेत्यनेकशब्दव्यपदेश्यानां संवेदनानामित्यर्थः ।

**अर्[5]जनादि** इति । अर्जनादि विघ्नान्तरोदयेन ताटस्थ्यहेतुकाऽस्फुटत्वेन विषयावेशवैवश्येन च कृतो यः सौन्दर्यविरहस्तस्मात् । **स्वात्मैकगतत्व–** इति । विषयावेशवैवश्यस्य । **परगतत्व–** इति ताटस्थ्यास्फुटत्वस्य । **तद्विभावादि** इति च विघ्नान्तरोदयस्याऽसम्भवे हेतवो योजनीयाः पश्चानुपूर्व्यपि हि समाश्रीयमाणा [6]पद[7]वाक्य[8]प्रमाणतत्त्वविदुषां वैदुष्यमतिशयवत् **द्योतयति** इति । **अत एव** इति । यतोऽलौकिकविभावादिसंयोगबलोपनतैवेयं चर्वणा इतरसंवेदनेभ्यश्च विशिष्टा । **किं तर्हि** इति । यदि न जनका न च ज्ञापकास्तर्हि किमेतत् । **एवम्** इति अप्रमेयरूपत्वम् । **तत एव** इति । यतोऽवस्तु-

१. शम ख. एव ॥ २. विभावादि ख एव ॥ ३. यथा पुष्पफलं मूलं तथा रसा मूलं कारणं प्रयोजनस्थायिनां निरूपणाया इत्यर्थः ॥ ४. रसानां मध्यात् ॥ ५. उपचारेण ॥ ६. व्याकरणम् ॥ ७. मीमांसा ॥ ८. तर्क ॥

सत्यारामधिया वस्तुसती नटबुद्धिरनया च सा प्रतिबध्यत इत्यन्योन्यप्रतिबन्धः । **तत्र** इति नटे । **तद्वासना** इति तच्छब्देन रतिपरामर्शः । **नियत**– इति । नियतस्वात्मैकगत-कारणतया । **विभावादिभिः** इति । पर्यायतो गुणप्रधानभावेनावस्थितैरित्यर्थः तत्र विभावप्राधान्यं यथा—

केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ,
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः ।
आपातेऽपि विकारकारणमहोवक्त्राब्जजन्मासवः,
सत्यं सुन्दरि वेधसस्त्रिजगतीसारं त्वमेका कृतिः ॥

अत्र च विभावभूतं तत्सौन्दर्यं प्राधान्येन भाति । तदनुगतत्वेन केलीविभ्रमभङ्गुर-नर्मपदमहिम्ना चानुभाववर्गो भङ्गीक्रमविकारादिशब्दबलाच्च व्यभिचारिवर्गः प्रतिभातीत्यत एव नास्फुटत्वाशङ्काऽत्र रत्यास्वादमये शृङ्गारे विधेया । अनुभावप्राधान्यं यथा । **यद्वि-श्रम्य विलोकितेषु** इति । अत्र विश्रम्येति बहुश इति प्रतिदिनमिति पदसमर्पितो व्यभिचारिगणः कृष्ण इत्यादिपदार्पितश्च विभावो गुणत्वेन प्रतिभासते । विश्रान्तिलक्षण-स्तम्भविलोकनवैचित्र्यगात्रतानवतारतम्यपुलकवैवर्ण्यप्रभृतिस्त्वनुभावसञ्चयः प्रधानतया । **पुलक**– इति तनुतानिर्देशसाहचर्यात् पुलककण्टकप्रतीतिः । अत्र व्यभिचारिणां तु प्राधान्यम् । तद्विभावानुभावप्राधान्यकृतम् । तत्राद्य यथा—

आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।
अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् ॥

इत्यत्र सुकुमारमुग्धप्रमदाजनभूषणभूतस्य व्यभिचारिवर्गस्य वितर्कत्रासशङ्कादेः प्राधान्यं तद्विभावानां प्राधान्यात् सौन्दर्यातिशयकृतम् । आत्तमित्याद्यर्पितानुभाववर्गस्तु तदनुयायी । तदनुभावप्राधान्यकृतं च स्वयमुदाहार्यम् । एवं द्वयप्राधान्यभेदे [१]समप्राधान्ये [२]चोदाहार्यम् । किन्तु समप्राधान्य एव रसास्वादस्योत्कर्षस्तच्च प्रबन्ध एव भवति । वस्तु-तस्तु **दशरूपक** [३]एव । तद्विचित्रं चित्रपटवद्विशेषसाकल्यात् । तदुपजीवनेन मुक्तकेऽपि । तथा च तत्र सहृदयाः पूर्वापरमुचितं परिकल्प [?] इद्गत्र वक्ताऽस्मिन्नवसरे इत्यादि बहुतरं पीठबन्धरूपं विदधते ।

**शृङ्गारादि** इति रसवदर्शितस्पष्टेत्यत्र श्लोके । **तद्विपरीतः** इति । सापेक्षभाव-शृङ्गारविपरीतः । **तन्निमित्तम्** इति । करणस्य निमित्तभूतः । **तद्विभाव–** इति । रुधि-रान्त्रप्रभृतयो हि ये भयस्य विभावास्ते बीभत्सस्यापीति तद्विभावसाधारण्यसम्भवः । ननु

१. वसन्तस्य ख. एव. ॥ २ त्रयाणां प्राधान्ये ख. ॥ ३. –ऽभिनेये ख. एव ॥

शृङ्गारादिभ्यो हास्यादीनां कथमुत्पत्तिरित्याह—**शृङ्गारानुकृतिः** इति । पदपदार्थ-वाक्यार्थव्याख्यां स्वयमेव कर्त्तुमाह—**अयमर्थः** इति । **यावान्** इति सर्वे रसाभासैर्हास्यरस आक्षिप्यत इत्येकः । कस्यचिद्रसस्य कार्यानन्तरं द्वितीयरसेनावश्यं भवितव्यमिति द्वितीयः । कश्चिद्रसो रसान्तरं फलत्वेनाभिसन्धाय प्रवर्त्त्यत इति तृतीयः । कश्चिद्रसस्तुल्यविभावत्वान्नियमेन रसान्तरं सहचरमाक्षिपतीति चतुर्थ इति चतुस्सङ्ख्यः ।

**तदाभासत्वेन** इति । एतत्तदनुकाररूपतयेत्यस्य शृङ्गारानुकृतिपर्यायस्य व्याख्यानम् । शृङ्गारादिरसाभासत्वेनेत्यर्थः । **सूचितम्** इति तेन शृङ्गारादयः शृङ्गाराद्याभासत्वेन स्थिता हास्यहेतवो भवन्तीति स्थितम् **तद्वशाद्** इति । व्यभिचारिरूपत्वेऽपि स्थायिकल्पत्वेनाभानवशात् । **आतश्च** इति । पूर्वं हि कामनाभिलाषमात्ररूपत्वं रत्याभासत्वे हेतुस्तद्वशाच्च विभावादीनामाभासताधुना तु विभावाभासतैव रत्याभासत्वे हेतुरुपदर्श्यते । **लीयेत** इति नश्येत् । **करुणाद्याभासेषु** इति । हास्याभासस्य हि हास्यत्वं सुप्रतीतमेवेत्यनतिदिष्टमप्यत्र द्रष्टव्यम् । **तदाभासतायाम्** इति । मोक्षविभावाभासतायाम् । **प्रहसन**— इति । प्रहसनरूपकेण हि राजपुत्रादीनां सर्वपुरुषार्थेष्वनौचित्यत्यागविषया व्युत्पत्तिराधीयत इत्यर्थः । **हास्याभासः** इति हास्याभासोऽपि हास्य एवेत्यर्थः । **तेन** इति । यदभिनन्दनीयेऽपि वस्तुनि हाससुखरत्वं लोकस्य ।

**अस्य** इति शृङ्गारस्य । **शृङ्गारात्तु** इति । न हि शृङ्गारकार्यं किञ्चित्तथाविधं यद्विभावकेनावश्यं करुणेन भाव्यम् । **व्याप्रियते** इति । अङ्गतया तु शृङ्गारः करुणजन्मन्युपयुज्यत इत्यर्थः । **शोकः** इति । अङ्गतयाऽपि शृङ्गारो नास्तीत्यर्थः । **करुणोत्पत्ति** इति । एवं चाद्यैवावां रणमित्यत्रापि हि रौद्रकर्मविभावकत्वं नोपपद्यत इति भावः । **यदाह**— इति । क्रोधविच्छेदे उक्तमात्रप्रदर्शनपरं न च बन्धुत्वमात्रमिति अपि तु तत्तच्छृङ्गारचेष्टानुभवस्मृतिविशिष्टम् । **नात्र** इति । अत्र भयानकोत्पत्तौ यथाविधिविनियोजितसामाद्युपायपुरस्सरपरपराजयादेरुत्साहकर्मणो विभावत्वेनासम्भाव्यमानत्वात् । **कर्त्तव्य**— इति । कर्त्तव्यस्य परपराजयपुरस्सरप्रतापार्जनस्य । **युद्धवीरे च** इति युद्धवीरे हीत्यर्थः । **या या** इति । या यानुकृतिः स स हास्य इति हेतुहेतुमतोरभेदोपचारः । उपचारप्रयोजनं चान्यवैलक्षण्येन कार्यकारित्वप्रतिपत्तिः । **एवंविभावकः** इति अनुकृतिविभावकः । **तस्य** इति वधादेः । **दर्शनम्** इति । दृश्यते बीभत्सो येन विभावादिना तत् बीभत्सदर्शनं विभावादिलक्षणमित्यर्थः । **पूर्वतः** इति अद्भुतात् । **अयमेव च** इति । अयं चाक्षेपप्रकारश्चतुर्धैव सम्भाव्यत इति । **योजना इति** इति । शृङ्गाराद्धिभवेद्धास्य इत्यनयैव चतुःप्रकाराक्षेपोक्त्या ।

---

१. यथाशास्त्रम् ॥

**शान्तस्यापि** इति विषय विपैरिवृत्त्याऽन्तर्मुखतालाभेन सर्वरसानां शान्तप्राय एवास्वादः केवलं वासनान्तरोपहित इति हि वक्ष्यते। ततश्च सर्वरसप्रकृतिभूतस्य सामान्यरूपस्य शान्तस्याक्षेपो विशेषरूपाणां रसानामाक्षेप उक्ते उक्त एव भवतीत्यर्थः। **व्यभिचारिरूपायाः** इति। रतेरिति शेषः। **चित्तवृत्तिम्** इति स्थायिरूपाम्। **अन्यत्र**- इति सामाजिके। **व्यभिचारिणः** इति वेषशब्दवाच्याः। **ते च** इति चकाराद् विभावा अनुभावाश्च गृहीताः।

**शृङ्गाररूपेण** इति शृङ्गारलक्षणेन। **तद्दशाद्वयेऽपि** इति। सम्भोगदशायां हि रतेः स्वाद्यमानं रूपं शृङ्गार इति। **प्रतीतमेव** इति विप्रलम्भदशायामेव तत्प्रत्यायनपरोऽपि शब्दोऽत एव चास्यैवार्थस्य समर्थनाय विप्रलम्भे विशेषतो रतिरुपचीयत इत्येतद्दर्शनपरमेवोक्तमादर्शयिष्यति स्नेहानिति। **अत एव** इति। यतो दशाद्वयेऽपि रतेरास्थाबन्धात्मिकायाः स्वाद्यमानं रूपं शृङ्गारः। **अत्रैव** इति उभयाधिष्ठाने शृङ्गारे। **सत्यत** इति। अन्यतरस्यां हि दशायामुपचरितवृत्तिरित्यर्थः। **ऋतु**– इति। ऋतुर्वसन्तादिः। **माल्यं** कुसुमापीडः। **अनुलेपनं** समालम्भनम्। इयत्कामस्योदीपकम्। **अलङ्कारः** कटकादिः इष्टजनश्चैतद्द्वयमुत्तमत्वसूचकम्। **विषया** गीतादयः। तदन्तर्भूतमपि माल्यादिप्राधान्यात् पृथगुक्तम्। **वरभवनं** हर्म्यादि। एतद्देशविशेषोपलक्षणम्। एषामुपभोगः उपवनस्योद्यानस्य गमनेनाऽनुभवनम्। श्रवणं वा वरभवनस्थस्याऽपि। एतत् संकल्पादेरप्युपलक्षणम्। **क्रीडा** जलावगाहनादिका। **लीला** इष्टस्यानुकृतिः। **नयन**– इति नयनचातुर्यादिना कान्तादृष्टिर्लक्ष्यते। तथा च तल्लक्षणम्।

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा।
सभ्रूत्क्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते॥
भ्रुवोरुद्गतिरुत्क्षेपः सममेकैकशोऽपि वा।

इति भ्रूत्क्षेपः तारकाख्यस्य दृष्टिमण्डलस्य विचित्रतया गतागतविश्रान्तिप्रबन्धेन वर्त्तनं कटाक्षः। एवं च योजना नयनानां चातुर्येण भ्रूत्क्षेपेण कटाक्षेण च यत् सञ्चारणं ललितं मन्थरं मधुरं नयनाभिरामं च कृत्वा यान्यङ्गानां हरणानि स्वकर्त्तव्यता काले ललितानि सुन्दराभिधेयानि मधुराणि च श्रवणसुखकराणि यानि वाच्यानि। इयता उपाङ्गाभिनय आङ्गिको वाचिकश्च लक्षितः। **विप्रलम्भ** इति। विप्रलम्भो विडम्बनं प्रसिद्धमिह तूपचारात्तदीयं फलं विरहात्मकं गृह्यते। तेन हि परस्परं रतिमतोरत्र विडम्बनमस्ति तेन विरहेण कृतः सुष्ठुतमां पोषित इत्यर्थः। **व्याध्युन्माद**– इति। व्याध्युन्मादापस्मा-

१. निवृत्त्या॥

राणां या नात्यन्तं कुत्सिता दशा सा काव्ये प्रयोगे च दर्शनीया । **वाक्यभेदेनापि** इति । आस्तां विधेयतया पदबन्धत्वेन । **विदधान**– इति सामाजिकानामित्यर्थः । **असाधारण्याद्** इति । न हि सामाजिकानां सीतादिः कश्चिदिति सोऽपीतिहासस्वभाव एवेति सम्बन्धः । **विकृत**– इति । विकृतवेषादीनां हासहेतुतेति सम्बन्धः । **त्रिभावसाधारण्याद्** इति विकृतवेषादयः सामाजिकानामपि हासहेतवो भवन्ति ।

**श्मशान**– इति भयजुगुप्सयोरुभयोरपि साधारणोऽयं विभावः । **ओष्ठनासेति** । ओष्ठादीनां स्पन्दनेन सम्बन्धः । **व्याकोशो** विकाशः । **आकुञ्चग**मीषन्निमीलनम् । एतद्द्वयं दृष्ट्या योज्यम् । पार्श्वयो**र्ग्रहणं** पीडनं **तन्द्रेति** मोहः । **वेषः** इति । केशादिरचना । **अयं सङ्क्रमणस्वभावः** इति । अयमेव सङ्क्रमणस्वभावो नान्ये इत्यर्थः । **तद्विभावकः** इति । ते एव विकृतवेषादयो विभावाः । **अस्य** इति आर्याद्वयस्येति । आत्मस्थपरस्थहास्याभिधायकस्य **स्त्रीनीचे**ति । स्त्रिया उपलक्षितो नीचप्रकृतिरिति समासः । नन्वेकः स्थायीति का भूयिष्ठतेत्याह–षड्भेदाश्चेति । **सौष्ठव**– इति सौष्ठवमनुल्बणता । **द्विजम्** इति । द्विजा दन्ताः । **धीरम्** इति मन्थरं कृत्वा ईषत्त्वं निवार्याह–**विकसितै**रिति । **अथ** इति स्मितानन्तरं सङ्क्रमणकाल इत्यर्थः । **तद्** इति स्मितमेव सङ्क्रान्तं सदेवंरूपतामेतीत्यर्थः । **जिह्म**– इति ।

लम्बिताकुञ्चितपुटा शनैस्तिर्यग्निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥

इति जिह्माख्यया दृष्ट्या निरीक्षणं यत्र । **विक्रुष्ट**– इति विक्रुष्टः श्रवणकटुः । **उपघात**– इति उपघातः पुत्रादिमरणम् । विभवनाशादयो हि स्वात्मगता नोत्तमप्रकृतेः शोकं कुर्युर्मध्यमाधमप्रकृतीनां तु कुर्युरेवेत्यादिग्रहणम् । **निःश्वास**– इति । निःश्वासेनाऽनन्तरभावी उच्छ्वासोऽप्यूर्ध्वश्वसनरूपो लक्ष्यते । स्मृतिलोपेन स्तम्भप्रलयौ लक्ष्येते । **स्तम्भ**– इति स्तम्भादयो व्यभिचारित्वाभिनयत्वोपजीवनायैव व्यभिचारिमध्ये निर्दिष्टाः । एवमन्यत्राऽपि ।

**इष्टवध**– इति । वधशब्दो बन्धादेरप्युपलक्षणम् । विप्रियमिष्टजनवधादि येन वाक्येनोच्यते तस्य श्रवणात् । **सस्वन**– इति । अनुभावांस्तद्द्वारेण च व्यभिचारिणोऽप्युपलक्षयितुमिदमार्यान्तरम् । बहुवचनं प्रकृतिदेशकालदशाहेत्वादिभेदेनानेकप्रकारत्वज्ञापनार्थम् । देहस्य आयासनं पातनवेष्टनादि । अभिघात उरस्ताडनादिः । **रक्षः** इति । रक्षो दानवोद्धतमनुष्याः स्वभावक्रोधनत्वात्तदनुकारिणि नटे रौद्र आस्वाद्यत इति प्रकृतिश्चर्वणोदयहेतुर्यस्य । स च सङ्ग्रामहेतुकश्चेत्युभयविशेषणसमासः । नन्वेते स्वभावक्रोधना अपि किमुद्दीपनमपेक्षन्ते । ओमित्याह– **स च** इति । **ताडन**– इति । ताडनं तत्राव-

भिघातः, पाटनं द्विधाकरणं, पीडनं मर्दनं, छेदनं कर्त्तनं, भेदनं परस्परं मित्रादिवियोजनं, भावे ण्यतौ प्रहरणा नाम समन्ताद्धरणम्। सम्प्रहारेण रुधिराकर्षणमिति विग्रहः।

**भ्रुकुटी** इति भ्रुवोर्मूलसमुत्क्षेपो भ्रुकुटी। **हस्त**– इति हस्ताग्रयोरन्योन्यं निषेधः संघर्षणम्। **तदु** इति अत्र उ इति निपातो वितर्के। **लभ्या** इति लभ्यते। **न रौद्र एव** इति। अन्येऽपि रसाः सम्भवन्ति किन्तु यथा बाहुल्येन रौद्रो न तथाऽन्य इत्यर्थः। **युद्ध**– इति विकृतं छेदनं व्यङ्ग्यादिकरणम्। सङ्ग्रामाय सम्भ्रमः शस्त्राहरणादौ त्वरा। **उग्रकर्मत्वम्** इति। उग्राणि औग्र्यप्रधानानि शिरःकर्त्तनादीनि कर्माणि यत्र स तथा तस्य भावः। **तस्य स्थैर्य** इति। स्थैर्यमचलनम्। शौर्यं युद्धादिक्रिया। **स्थिति**– इति स्थितिः स्थैर्यम्। वीर्यं शौर्यम्। **स्वजन**– इति स्वजनस्य यौ वधबन्धौ **तयोर्दर्शनं** प्रत्यक्षेण श्रवणम् आगमेन कथाचिरातिक्रान्तयोरपि पुनरनुसन्धानेन स्मरणम्।

**येऽपि च** इति। सत्त्वसमुत्थमित्यादेः कारिकाभागस्य व्याख्यानमिदम्। **कार्यम्** इति कर्त्तव्यमित्यस्य व्याख्यानमिदम्। **मृदु**– इति मृदुचेष्टितैरनुभावैः कार्यमिति पूर्वेणैव सम्बन्धः। **यतः** इति सामर्थ्यलब्धं हेतुत्वम्। **तथैव** इति। अन्तरितयोरपि संबन्धो दर्शितः। **पुरुषार्थ**– इति कार्यमित्यस्य व्याख्यानमिदम्। **यत्र तु** इति। भयानके **परानुग्रहाय** इति। परे हि तं राजगतं क्रोधादिं दृष्ट्वा भीताः सन्तो मर्यादया वर्त्तन्त इति। **शमस्थायी** इति। तत्त्वज्ञानात्मज्ञानापरपर्याय आत्मस्वभाव एव शमशब्देन मुनिना व्यपदिष्टः। यदि तु तत्त्वज्ञानोत्थित निर्वेदशब्देन व्यपदिश्यते ततोऽपि न कश्चिद् बाधः सर्वभावान्तरभित्तिस्थानीयत्वात्। **स्थायितमश्वासौ** इति **तत्त्वज्ञानार्थ**– इति शमापरपर्यायतत्त्वज्ञानार्थस्थायिभावात्मक इत्यर्थः। **रत्ने**– इति। सिततरसूत्रस्थानीये आत्मस्वरूपे रत्नस्थानीया रत्यादय इत्यर्थः। **तथा भावेनापि** इति उपरञ्जकत्वभावेनाऽपि। तथा हि– शान्तस्य जनकादेर्यदि कुतोऽपि निमित्तादुत्साहादयो जन्ममध्ये कदाचिदुद्भवेयुस्ततोऽपि न ते तदात्मस्वरूपं शमलक्षणमन्यथा कर्तुं समर्था इति न्यायसिद्धमेतत्। **लोकोत्तरानन्दवनम्** इति। एतदेकं हृदयस्य विशेषणम्। **अभिधानम्** इति। श्रृङ्गारहास्येत्यत्र श्लोके सर्वप्रकृतितेति,

स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्त्तते।
पुनर्निमित्तापायेन शान्त एव प्रलीयते॥

इत्यादिना हि सान्तरप्रकृतित्वमुपदर्शितम्। **भावः** इति रत्यादिः। **वित्रासितकम्** इति। संज्ञायां कन्। **व्यक्ति** –इति अभिव्यक्तिरित्यर्थः। **तान्त्रिक** –इति।

१. आप्तवचनेन॥

नाट्यतन्त्रप्रसिद्धो यो रसशब्दस्तदभिधेया इत्यर्थः। **चित्तवृत्तिभेदेन** इति। रतेरमी विभावादयो हासस्यामी इत्येवंलक्षणेन संयुज्यमानानामिति। विभावानुभावेत्यादि रसस्तत्रोक्तसंयोगशब्दार्थकथनम्। **अस्याभिप्रायः** इति। तथाविधोदाहरणदर्शनात्। **पदार्थः** इति। काव्यधर्मरूपो रूपकादिसदृशः। **पदार्थः** इति रूपकादिसदृशः। **पक्षी** इति पक्षिपङ्क्तिरेव रशना यस्या इति सम्बन्धः।

**इयं नदी** इति। इदम्‌शब्दपरामर्शलब्धोऽयं नदीलक्षणोऽर्थः। न पुनः श्लोकोपात्तनदीशब्दसम्बन्ध इयमित्यस्योपदर्शितः। तस्य हि भावशब्देन समासे गुणीभूतत्वात्। एवं योजनायां हि किलाव्यक्ते गुणसन्दोहे नपुंसकवचनमेव प्रयुज्यत इति। कथमियमिति स्त्रीत्वेन निर्देश इति चोद्यस्य नावकाश इत्यभिप्रायः। **समुदयः** इति संयोगः। **तथाविध–** इति तथाविधा अनेकार्थाः। **निर्विषयत्व–** इति। विषयो विभावः। **लक्षण–** इति विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरित्यस्य लक्षणस्य।

**निश्चायक–** इति विनिहतेषु प्रोषितेषु च पतिषु प्रमदाजन एवं विचेष्टमानो विलोक्यत इत्यालम्बनविभावादिस्वकारणसामग्र्याः संदिग्धत्वात्। विप्रलम्भे तु केयं प्रवासरुचितेत्यादि विशिष्टं लिङ्गमुपलभ्यत इत्याह—**प्रवासविप्रलम्भस्येति**। ननु च प्रबोधावसरे करुणस्यैव रिक्तबाहुवलयत्वरोदनलक्षणतथाविधविभावानुभाववत्त्वोपपत्तेर्वाक्योपारूढपदार्थसमर्थ्यमाणत्वं स्वप्नान्तेऽपि प्रियतमेषु विप्रियमसम्भावयमानः प्रमदाजनः प्रवासजमेव विप्रयोगं मन्यत इति युक्त्या तथाविध विभावानुभाववत्त्वं चोभयमपि सम्भवतः करुणस्योपपन्नमिति झगिति कथमसौ विप्रलम्भः परिस्फुरतीत्याह— प्रबोधावसरे चेति। अथ करुणरसस्य निश्चयः तर्हि कुतो विप्रलम्भस्य पृथक्त्वव्यपदेशगन्धोऽपीत्याह— **करुणरसस्येति**। **तस्यैव** इति करुणरसस्यैव। व्यभिचार्यौचित्येति व्यभिचारिणो रतिस्वप्नविबोधप्रभृतयः।

**यदि वा** इति। अनेन भवद्भिर्निहतवल्लभ इति व्याख्यानादन्यद् व्याख्यानमभ्युपगम्यत इत्यर्थः। **न पुनः** इति। ननु पर्यायोक्तन्यायेन त्वया रिपवो हता इति युष्मदर्थविषयः प्रेयोरूपः प्रधानभूतो वाच्यार्थो वाच्यान्तरवक्तव्योऽनेन करुणस्वभावार्थप्रतिपादकेन वाच्येन समर्थ्यमाण उपनिबद्धो न चान्योपदेशन्यायेन निमित्तवताऽनेन करुणात्मनार्थेनाप्रस्तुतेन प्रस्तुतो निमित्तभूतः प्रेयोरूपोऽर्थोऽत्र प्रत्याय्यमान उपनिबद्ध इत्यर्थः। **कवि–** इति। कविकर्म काव्यं प्रभवन्तीति। कुत इत्याह— स्वरूपादिति शब्दार्थेति च। **स्वरूपाद्** इति स्वरूपादतिरिक्तस्य परस्याप्रतिभासनादिति नोपपद्यत इति सम्बन्धः। **अलङ्करणत्वानुपपत्तिः** इति। पूर्वं हि परस्याप्रतिभासनादिति दूषणप्रपञ्चेऽलङ्कार्यश्चेद्रसस्तदन्येन केनचिदलङ्करणेन भवितव्यं, न तु तस्यैवालङ्करणत्वमुपपद्यत इति यद्दूषणमुप-

पादितं तदनेनोट्टङ्कितमिति । **उदाहरणान्तरैः** इति । यत्र वस्तुनः प्राधान्येन वर्णनीयत्व-मुपोढरागेणेत्यादौ तस्मादन्यैरुदाहरणैरित्यर्थः । तेषु हि रसस्य प्राधान्येन वर्णनीयत्वम् । **परिहृत**– इति यदि हि रसस्यैवालङ्करणत्वमभ्युपगम्येत स्यादयं दोषः । स्वात्मनि क्रिया-विरोधात्तस्यानुपपत्तिरिति । न चैवमुदाहरणान्तरेषु तेषु रसेन तुल्यं वर्त्तत इति यो रसव-दलङ्कारो रूपकादिस्तस्यैव रसं प्रत्यलङ्करणत्वं न तु स्वात्मानं प्रति रसस्येत्यर्थः ।

**कपोले पत्राली** इति । अत्रापि प्रधानवृत्तेः श्रृङ्गारस्योभयार्थप्रतिपादकप्रिय-शब्दबलादारोपप्रतिपत्ते रूपकं रसवदलङ्कारः शोभातिशयमावहतीति । **तत्तुल्यवृत्तान्त-तया** इति । चलापाङ्गामिति, कपोले पत्रालीति चेति पूर्वोक्तयोरुदाहरणयो रूपकस्य यो न्यायो वृत्तान्तापरपर्यायस्तत्तुल्यतयेत्यर्थः । तत्तत्र रसवदलङ्कारः श्लेष उपमा चेति द्वयो-रुपनिबन्धे संसृष्टिव्यपदेशः सङ्करव्यपदेशो वा प्रसजन्न प्रत्याख्यातुं शक्यत इत्याह– न चेति । **उपमादीनाम्** इति । उपमारूपकश्लेषाणां केवलस्येति उपमादिविरहितस्य रस वदलङ्कारस्य यतः प्रस्तुतरसपरिपोषो न निष्पद्यते । **अत्र** इति । अत्र पदार्थस्वभावमिवादि-शब्दं वा विनापि रसवदलङ्कारेण हेतुना यः समन्वयसम्भवः स कविना श्लेषस्य श्लेषो-पमयोश्चोपनिबन्धात् कामपि कमनीयतामधिरोपित इति वाक्यार्थः । **पदार्थ**-- इति । न ह्यत्र देवदत्तः कटं करोतीतिवत् शरद इन्दुप्रसादनं घटते, न च लिम्पतीन तम इत्यादि-वदत्रेवशब्दादिरस्ति । **प्रतीत्यन्तर**– इति । प्रतीत्यन्तरं सापराधत्वादिविषयम् । **अत्रापि** इति । अस्मिन्नप्युदाहरणे रत्यादिवदाचरणमिति श्रृङ्गारादिरसतुल्यतया । **तद्वद्** इति श्रृङ्गाररसतुल्यम् । [ ॥६०॥ ]

**स्वसम्बन्धिनः** इति कार्यकारणभावलक्षणेन सम्बन्धेन । **गृहकार्य**– इति रिंसा-नवच्छिन्नत्वे हेतुरयम् । **रोचमान**– इति रोचमानोऽभिलष्यमाणः । **पूर्वत्वे** इति पूर्वं कथितं चतुर्थीविधाने 'चतुर्थी सम्प्रदान' इति यत् सम्प्रदानं तत् पूर्वशब्देनाऽभि-धीयते । ततश्च पूर्वत्वे सम्प्रदानत्वे इत्यर्थः । **तादर्थ्य**– इति तादर्थ्यविधिनैव तादर्थ्य इति ह्युपसङ्ख्यानम् । सा च स्त्रीणामिति भवतीति शेषः रत्यादिभावानामिति यानि सूचनानीति सम्बन्धः । **अत एव** इति । यतोऽनुमितिपुरस्सरं साधारण्येन प्रतिपद्यन्ते ॥६१॥

**इयम्** इति । द्विःसन्धानाऽकरणलक्षणाऽन्यायवृत्तिः क्षत्रधर्मविलङ्घनादित्यर्थः । क्षत्रधर्ममेव दर्शयितुमाह– **शत्रौ** इति । **आततायी** इति ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ ६२ ॥ इति

---

१. ख पुस्तके एव ॥ २. रूपकलक्ष [ णस्य ] ख. एव ॥

**तत्संसर्गे** इति । रसवदाद्यलङ्कारसंसर्गे । **संसर्गः** इति संसृष्टिरित्यर्थः । **एषाम्** इति रसवदादीनाम् । **नास्ति विषयः** इति वाक्यार्थीभावेन रसवदादीनां प्रायशः सर्वत्र सम्भवात् । **रसभाव–** इति शास्त्राविरुद्धा रसभावाः प्रसिद्धा एव तदाभासास्तु व्याख्यास्यन्ते **अनौचित्य** इति । **वृत्तेः** इति । वृत्तिः स्वाश्रयसम्बन्धात्मिका । आश्रयश्च विभावादिः । **रसान्तर–** इति रसान्तरस्योत्तरस्याश्रित्तवृत्तेरित्यर्थः । **अनुभावानाम्** इति शृङ्गाररससम्बन्धिनाम् । **मानमस्याः** इति गुणप्रधानभावाभ्युपगमपक्षे । **भूषणैः** इति उत्प्रेक्षादिभिरलङ्करणैः [ ॥ ६३ ॥ ] ।

**एवं हि** इति । अनेन स्नेहस्य सद्भावेऽसद्भावे वा य आशीरलङ्कारः केषाञ्चिन्मतः स उभयरूपोऽप्यप्राप्तप्राप्तीच्छालक्षणः प्राप्तकालताभ्यनुज्ञास्वभावो वा भवतीति वक्तुमुपक्रमते– **आशास्ताम्** इति । आशासनमप्राप्तप्राप्तीच्छारूपं मा वेति । अपि तु प्राप्तकालतया अभ्यनुजानात्वित्यर्थः । [ ॥६४॥ ]

**श्लेषे** इति । श्लेषे हि द्वितीयोऽप्यर्थोऽभिधीयते । न त्ववगम्यते । **सौक्ष्म्याद्** इति । "इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मम्" इति लक्षितात् सूक्ष्मालङ्कारादित्यर्थः । **भूमिकान्तरम्** इति । तत्र हीङ्गिताकाराभ्यां कार्यरूपाभ्यां भावलक्षणोऽर्थः कारणभूतो लक्ष्यतेऽत्र त्वनुकरणेनाऽनुकार्यरूपः स इति भूमिकान्तरमेतत् । **अत्र वक्तुम्** इति इह वक्तुमक्षमतायां सत्यामिङ्गिताकारावपि यतः प्रतीयेते प्रतीयमानत्वाच्च तावक्षमौ भावमवगमयितुमतस्तदवगतेरिदं भूमिकान्तरं भवतीत्यर्थः । **अनुकार्य–** इति कार्यकारणभूमिकातोऽनुकार्योऽनुकरणभूमिकाऽन्यैवेत्यर्थः [ ॥ ६५ रू ॥ ] ।

**प्रतिपिपादयिषितं यत्र** इति प्रतिपादयितुमिष्टं सत् यत्र प्रतिपादयितुमुपमेयोत्कर्षकरं विशेषं कुर्वीत तत्पूर्वविलक्षणं साम्यमित्येवं शेषकारिकार्थो योजनीयः । **उपमा** इति उपमातो रूपकाच्च विलक्षणत्वे । **योगायोगादि** इति आदिग्रहणेन क्रियाजात्युभयादि योगायोगा गृह्यन्ते । **पूर्वादि** इति आदिग्रहणेनोत्तरा दृष्टान्तोक्तिः पूर्वोत्तरोभयरूपा च सामान्यतो विशेषतश्च भवतीति लभ्यते । तेन क्रियादियोगकृतसाम्याश्चतस्रः क्रियाद्ययोगकृतसाम्याश्च चतस्र इत्यष्टदृष्टान्तोक्तयः । **मलिणया** इति । स्खलितसमुद्भवा राहुसम्पर्कजा च । **विसम–** इति । वैषम्यं विधिवशोद्भवसामग्र्यभावादिजनितं दृढश्लिष्टदृषत्कूटप्रभवं च । **स्फुरितसूर्य–** इति । सूरशब्दस्य द्वितीयोऽयमर्थः । **जं जमिति** । **विद्दुमवेढमिति** सम्बन्धः । **ताणेति** । **प्लवगानां साम्योत्कर्ष–** इति । उपमानोपमेययोः साम्येनोपमानस्योत्कर्षेणापकर्षेण किञ्चिदुत्कर्षेण च प्रकृताश्चतस्र उपमानोपमेययोः

१. प्रकारान्तरम् । ख. एव ॥ २. साम्यम् ख. पुस्तके एव ॥

साम्येनोपमेयस्योत्कर्षेणापकर्षेण किञ्चिदुत्कर्षेण च प्रकृताश्चतस्र उपमानोपमेययोः साम्येनोपमेयस्योत्कर्षेणापकर्षेण किञ्चिदुत्कर्षेण च विकृताश्च चतस्र इत्यष्टौ प्रपञ्चोक्तयः। **निवृत्तमेव** इति मृतोऽपि वल्लभो जनो जीवत एव, यदि जीवति तदा त्रिदिवेन न किञ्चित् प्रयोजनमित्यर्थः । **छायाम्** इति । पूर्वोत्तरोपन्यासरूपां प्राकृतवैकृतसाम्यादिरूपां च । तेन दृष्टान्तोक्तिच्छायया विधावृजुपूर्वा वक्रोत्तरा च निषेधे ऋजुपूर्वा वक्रोत्तरा चेति चतस्रः प्रपञ्चोक्तिच्छायया विधावृज्वी वक्रा च । निषेधे ऋज्वी वक्रा चेति च चतस्र इत्यष्टौ प्रति वस्तूक्तयः [॥६६॥]।

**प्रतिपिपादयिषुः अपि** इति **लक्षण**– इति संज्ञाशब्दश्रवणाद्गौणस्य चार्थस्य रूपकविषयत्वेन प्रतिज्ञानादीदृक् प्रतिपादनेच्छोपवर्णिता । यदि हि लाक्षणिकस्यार्थस्यालङ्कारभावं प्रतिपादयितुं नेच्छेत्तदा गौणस्यैवार्थस्य प्रकारान्तरं परिकल्प्यानध्यारोपिततद्भावो गौण एवार्थो वक्रोक्तेर्विषय इत्येवं परं लक्षणमेतस्या विदध्यान्न च लक्षणाशब्दं प्रयुञ्जीत । अथवाऽभिधेयेन सम्बन्धादित्यादौ सादृश्यनिबन्धनाऽपि शब्दवृत्तिर्लक्षणाशब्दवाच्यत्वेनोपनिबद्धा दृश्यते । तथैव च कविलोकेऽपि भूयसी प्रसिद्धिरिति तदनुसरणेनात्र न किञ्चिदयुक्तम् । केवलं तद्भावानध्यारोपो वक्तव्य इति । **गौण एवायम्** इति रूपकमेवात्रेत्यस्याऽभिप्रायः [॥६७-६८॥] । **सन्देहनिर्णयान्तः** इति । एष ह्यर्थः संशये निर्णीतः । **चित्ते निवेश्य** इति अत्र शक्तस्य स्रष्टुः सम्बन्धिनी स्त्रीरत्नसृष्टिरिति तत्त्वानुपातित्वम् अपरेत्यतत्त्वानुपातित्वं चेत्युभयात्मा वितर्कः [॥६९-७०-७१-७२॥]। **एतद्** इति । अर्थापत्तिद्वयमिदमित्यर्थः [॥७३॥] ।

थ इति पादपूरणे निपातः **प्रसीद** इति । अत्र रोषस्य खकुसुमकल्पत्वेनात्यन्ताभावः । **न मर्त्यलोकः** । इति । अत्र मरणलक्षणस्य प्रध्वंसाभावस्याऽग्रे न भवनमिति प्रागभावः । **निवृत्तमेव** इति । अत्र मृत इति प्रध्वंसस्तस्य च प्रध्वंसो जीवतीति । **नामलितम्** इति । अत्र मलितमिति मलनं प्रध्वंसस्तस्य च समस्तेन नञा प्रागभावः । तस्याप्यसमस्तेन नञा भाव इति । **एषा प्रवासम्** इति अत्र प्रवासमिति संयोगप्रध्वंसस्तस्य चातीत्येति प्रध्वंसस्तस्याऽपि याता पुनः संशयमिति प्रध्वंसाभावः । **शासनेऽपि** इति । अत्र धनञ्जयादन्य एष इति न धनञ्जयोऽन्य एवैषे नान्य एषे धनञ्जय एवेतीतरेतराभावस्तस्य चाभाव इति । **मावगा** इति । **अनाप्त**– इति अनाप्तपुण्योपचयैर्दुरापेति सामर्थ्याभावः । दिवो वीतबलाहकाया वृष्टेस्तुल्येत्यत्यन्ताभावः । तस्योभयस्याऽपि भवदर्शनसम्पदेषेत्यभावः [॥७४॥] ।

**कमलेक्षणे इति** इति एष रूपकोपमेययोः सन्देहात् सन्देहसङ्करः । **शब्दा**-

---

१. विष्णुः ॥ २ अर्जुनः ॥

**लङ्कारसंसृष्टिः** इति । शब्दालङ्कारयोर्यमकानुप्रासयोः संसर्ग इत्यर्थः । **रूपकादीनाम्** इति । आदिग्रहणात् श्लेषोपमे । **राजभुजङ्ग**– इति । अप्सरःपक्षे नृपकामुकेति । कदलीपक्षे प्रधानविषधरेति च । **पल्लववन्मृदुः** इति । पल्लववन्मृदुः पल्लवैश्च मृदुरिति । **रूपकादीनाम्** इति । आदिग्रहणादुपमाश्लेषौ । **मयूर** इति । मयूनामश्वमुखानामूराः सोद्यमा ईषत् शब्दाः कलध्वनयस्तैर्वाचालामपि सोद्यमानामुत्साहपराणां हि मयूनां ध्वनयोऽपि सोद्यमाः सोत्साहा उच्यन्त इति । अयं शब्दश्लेषः। स तडिल्लतामिति रूपकम् । महाटवीमिवेत्युपमा । **चापानि** इति । **घनाः** इति च धनुर्लक्षणैकार्थवाचकत्वेऽपि शक्रकार्मुकप्रसिद्धकोदण्डलक्षणोऽनेकोऽत्रार्थ इति चापशब्द एव यद्यप्यर्थश्लेषो घनशब्देन चार्थभेदाच्छब्दभेदेऽपि समानप्रयत्नोच्चार्यतया जलधराऽनेकत्वलक्षणार्थद्वयवाचित्वे शब्दश्लेषस्तथा**ऽप्यौद्भट**मतानुसारेणोभयत्राऽप्यर्थश्लेषः प्रतिपत्तव्य इति [ ॥७५॥ ]

**झटिति** इति । **आमुखे तुल्योदय**– इति अत्रार्थश्लेषोत्प्रेक्षारूपकाणामनुग्राह्यानुग्राहकभावसङ्करः। **उभयसमान**– इति । उभयस्य द्वयोर्बह्वीनां च प्रतिपादकत्वे तुल्यं यदनेकपदं तस्योपादानमित्यर्थः । **अनुद्भटमतम्** इति । **उद्भटो** ह्यलङ्कारोत्तरान्तरप्रतिभोत्पत्तिहेतुमेव श्लेषं प्रतिजानीते, तेन येन ध्वस्तमनोभवेनेत्यत्राऽपि तुल्ययोगिताप्रतिभयः सङ्कर एव स्यादिति श्लेषस्य निर्विषयत्वापत्तिस्तदवस्थैवेति । **जयति** इति सर्वोत्कर्षेण वर्त्तते ॥

**इति कल्पपल्लवशेषे कल्पलताविवेकेऽर्थालङ्कारनिर्णयो नाम चतुर्थः परिच्छेदः समाप्तः ।**

**इति समाप्तः कल्पलताविवेकाभिधानः कल्पपल्लवशेषः ।**

कल्पपल्लवमात्रेण न ये कल्पलतां विदुः ।
कल्पपल्लवशेषोऽयं निर्मितस्तद्विदेऽपरः ॥ १ ॥

[1]अपर इति एकस्मिन् विवरणे कृतेऽ[2]परविवरणकरणं श्रोतृणामवबोधहेतुतया श्रेयस एवेत्यर्थः ।

पल्लवकलशविराजिनि कल्पलताविबुधमन्दिरे रचितः ।
शेषध्वजो विजयतां छेदपरु[?]र्ध्वनिपताकोऽयम् ॥

सं[3]वत् १२०५ श्रावणसुदि १४ शनौ ।

॥ मङ्गलं महाश्रीः ॥

---

१. पुनरिति ॥ २. पुनर्वि– ॥ ३. अयं पाठः ग. पुस्तके नास्ति । अन्यत्र च अस्मिन्स्थाने ग्रन्थाग्रं ६५०० एवमस्ति ॥

# परिशिष्टं प्रथमम् ।

## प्रमाणानामुदाहरणानां च पद्यानामकाराद्यनुक्रमः ।

# परिशिष्टं द्वितीयम् ।

## प्रमाणानामुदाहरणानां च पद्यांशानामकाराद्यनुमेण सम्पूर्तिः ।

पृ० प०

अतः परं प्रवक्ष्यामि चोत्थापनविधिक्रियाम् ।
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दीपाठकाः ॥ [भ. ना. शा. ५ २१] ३८ १६

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ १२ ११

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामीक्ष्वाकूणामिदं हि कुलव्रतम् ॥ [रघु ३ ७०] ९२ ११

अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ [रघु. १ ४] ९२ २७

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ [कु. सं ३ ६५] १४१ टि.५

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥ १ २५

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ [किराता. ३ ५] ३१९ २६

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥ [ध्व. का ७० परिकरश्लो.] १७२ १३

अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ [शि.पा.व. १६ २] १२ १४

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ [वामनका. सू. ३ २ १०] १६ ७

अलंकृतीनां शक्तावप्यानुरूप्येण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ [ध्व.का. ७०] १७३ १३

अवधानातिशयवान् रसे तत्रैव सत्कविः ।
भवेत् तस्मिन् प्रमादो हि झगित्येवावभासते ॥ [ध्व. का. ८५] १७९ १

अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे ।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥ [ध्व.का ८०] १७८ २७

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥ [कु. सं. ३ ५३] १४१ टि.५

असितर्तितुगद्रिच्छित्स्वःक्षितांपतिरद्रिहक् ।
अमिद्धिः शुभ्रहग्दद्यैर्द्विषो जेष्मियिषीष्ट वः ॥ [भामहका. १ ४६] १३ ९

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ [कु. सं. १ १] ९२ २३

अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्यतोऽन्येन किमुक्तेनाप्रियेण ते ॥ [भामहका. २ ६९] ११९ २०

आत्मा जानाति यत्पापमत्र वाऽन्यत्र जन्मनि ।
प्रत्यक्षं वा परोक्षं वा स्वल्पं वा भूरि वा कृतम् ॥ १५ १३

आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे ।
सङ्गमात्पाण्डुशब्दस्य गण्डः साधु यथोदितः ॥ [भामहका. १ ५६] ८ १४

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥ [ध्व.का. १३ इयामुदाहृतम् ।] ११५ २३

इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ॥ [ध्व. का. ६७] १७३ १२

उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि ॥ १६५ १५, १६६ २
१२९ २७

उत्तमयुवप्रकृति–

उद्दीपनप्रशमने यथाऽवसरमन्तरा ।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः । [ध्व. का. ६९] ८७ १८, १७३ १२

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥ ११४ २६ १९० ६

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ [शि पा व. ३ ८] २४२ २४

उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ [कु.सं. ३ ६२] १४१ (टि.५)३०८ २४

उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ [कु.सं. ६ ८२] २८० २४

उसुरुसुंभियाए १२७ १७

एकस्मिन् शयने १२७ १६

एकाकिनी यदबला ११८ १४

एतत्तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥ [भल्लटशतके] ११६ १९

कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः । [वामनका. सू. २, २, ४] १६ १९

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
  यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
  तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ १३ १२

"कुसुमभरः" ७८ २

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
  नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
  धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥ ८१ ११

क्लिष्टं व्यवहितं विद्यादन्यार्थं विगमे यथा ।
विजहुस्तस्य ताः शोकं क्रीडायां विकृतं च तत् ॥ [भामहका. १ ४०] १४ २६

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
  दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
  चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ १२७ १८

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
  गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
  कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ १२९ ७

ख्यातेऽर्थे निर्हेतोरदुष्टताऽनुकरणे तु सर्वेषाम् ।
वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥ [का.प्र. ७ ५९] २ १

"गण्डफलकैः" २५५ ३

गावो व पावनानां [१३९ १४ द्रष्टव्यम्] ११५ ६

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा ।
रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ [ध्व. ६२] १६७ २२, १६८ १

गूढशब्दाभिधानं च न प्रयोज्यं कथञ्चन ।
सुधियामपि नैवेदमुपकाराय कल्पते ॥ [भामहका. १ ४५] १३ ८

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।
न भुञ्जते द्विजास्तच्च रसदाननिवृत्तये ॥ [भामहका. ३ ९] ११६ ४

'गोप्यैवं गदितः सलेशम्" १८३ २०

चकासे पनसप्रायैः पुरी षण्डमहाद्रुमैः । १० १३

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
  रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम्
  वयं तत्त्वान्वेषान्मधुकर हतास्त्वं च सुकृती ॥ [अभि.शाकु. १ २०] ३१७ ८

| | | | |
|---|---|---|---|
| चंदमऊहेहि णिसा णलिनीकमलेहिं कुसुमगुच्छेहिं लआ ।<br>हंसेहिं सरअसोहा कव्वकहा सज्जनेहिं करइ गरुई ॥ | | १६४ | १६ |
| जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ।<br>तथा चार्या प्रयुक्तायामुमा तुष्टा भवेदिह ॥ | [भ.ना.शा. ५ ५३] | ३३ २८, ४० | १९ |
| "जीवन् जीवकः" | | २५८ | १,१८ |
| ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।<br>नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ | [म.भा.द्रो.प. ८ ४०८] | २३१ | ११ |
| तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।<br>दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ | [रघु. १ ८] | २५० | २१ |
| तदाशु कुर्वन् वचनं महर्षेर्मनोरथान् नः सफलीकुरुष्व ।<br>प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥ | [किराता. ३ ५४] | २८३ | १६ |
| तद्वल्गुना युगपदुन्मिषितेन तावत् सद्यः परस्परतुलामधिरोहतां द्वे ।<br>प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ | [रघु.स. ५ ६८] | २४२ | १८ |
| तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-<br>मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।<br>तालैः सिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे<br>यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ | [उ.मे.दू. १९] | १७६ | १ |
| तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी<br>मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।<br>श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां<br>या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ | [उ.मे.दू. २२] | २३५ | १ |
| तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।<br>अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ | [ध्व. २९] | १६८ | १५ |
| तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति<br>स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।<br>तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं<br>सा चात्यन्तमदर्शनं नयनयोर्यातेति कामं विधिः ॥ | [विक्रमो. ४ २] | १२७ | १०,१५ |
| तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रये ।<br>पदेनैकेन कथ्येते सहोक्तिः सा मता यथा ॥ | [भामहका. ३ ३९] | | |
| तुष्यन्त्यपि च गन्धर्वा आरम्भे सम्प्रयोजिते ।<br>आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति सर्वशः ॥ | [भ.ना.शा. ५ ४६] | ४० | ६ |
| "ते जाने" | | १३२ | २२ |
| तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।<br>इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ | | १३ | २५ |
| तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।<br>प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ | [श्री.भ.गी. ७ १७] | ७३ | ६ |

त्रयस्त्रिंशदमी भावा विज्ञेया व्यभिचारिणः ।
सात्त्विकांस्तु पुनर्भावान् व्याख्यास्याम्यनुपूर्वशः ॥ [भ.ना.शा. ७ ९२] ३०२ १९

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ [मे.दू. ८] १५६ ७

दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्यसारः कच्चित्स एवासि धनञ्जयस्त्वम् ॥ [किराता. ३ ४७] ३१९ २५

दृष्ट्या केशवगोपरागहृतया किञ्चिन्न दृष्टं मया
तेनैव स्खलितास्मि नाथ पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥ १३८ २३, १४४ ३

दृष्ट्वा प्रयुज्यमानानेवं प्रायांस्तथा प्रयुञ्जीत ।
अन्यत्रैतेऽनुचिताः शब्दार्थत्वे समानेऽपि ॥ [रुद्रटका.लं ६ २६] १० ३

देवा कानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥ [किराता. १५ २५] ७६ १४

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ [कु.सं. ५ ७१] २२ ४

धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः ।
षड्जोदीच्यवतीजातेर्भिन्नषड्ज उदाहृतः ॥ ३३ ११

ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ [ध्व. ३८] १३६ २२

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ [विक्रमो. ४ १] १६७ २

नवमे जडता प्रोक्ता दशमे मरणं भवेत् ।
स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत ॥ [भ.ना.शा. २४ १६२] ३०४ ३

न स शब्दो न तद् वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥ [भामहका ५ ४] ४५ १६

न सा धनोन्नतिर्या स्यात्कलत्रसुखदायिनी ।
परार्थबद्धकक्ष्याणां यत्सत्यं पेलवं धनम् ॥ [वामनका.सू. २ २२] १३ १४

नातिदूरे च कण्ठेन ह्युरसा च समीपतः ।
उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः ॥ [भ.ना.शा १९ ४२] १०२ २०

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥ [भट्टवार्तिके अरुणाधिकरणे] १० २२

निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम्॥ [ध्व. ४२] १३६ २२

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखा निष्यन्दरेखाङ्किताः॥ [अभि.शाकु. १ १४] १८७ ९

नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान्कवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः॥ [ध्व. ७५ परि. श्लोकः] १७८ २५

नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः॥ [भामहका. ३ २२] ११६ ६

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजिता प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥ [हनुमन्ना. १४ ६] १५ १, १८६

न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिं च तां विदुः।
अतो न्यायविरोधीष्टमपेतं यत्तया यथा॥ [भामहका. ४ ३९] ४१ २५

'परस्परोपकारेण" ११८ १६

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥ १२३ ६

परिपोषं गतस्यापि पौनःपुन्येन दीपनम्।
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च॥ [ध्व. ७५] ९० २

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताऽऽक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्॥ १२२ ६

(परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः) निदर्शना।
अभवन्वस्तुसम्बन्ध उपमापरिकल्पकः॥ [का.प्र. ९७] २६३ १८

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥ ८१ ११

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥ [रघु. ६ ६०] २७ ४

पुरस्तादपि प्रविचलेद् यदि यद्यधोऽपि यायात् यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन॥ [भल्लटशतक. ७९] २६४ ९

पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः।
तान् समाश्रित्य न त्याज्या नीतरेषा मनीषिणा॥ [ध्व. ७५ परि. श्लो.] १७८ २५

यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं दूनाब्जिनिनालवत् ।
दुर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥ ३११ ११

[यन् ]मनोरथशतैरगोचरं २६२ २६

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ [किराता. ३ ४०] २१ १०

यस्तु तालं न जानाति न स गाता न वादकः ।
अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः ॥ [भ.ना.शा. ३२ ५३०] ३७ १९

" यस्तु सरिदद्रि— " २५ ५

यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥ [ध्व. ५८] १६७ १७

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ [हय वधः] ११६ ४

"याते गोत्रविपर्यये" १२७ १३

यान्त्या मुहुर्वलितकन्धरमाननं तद्-
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ [मालतीमा. १ २९] २४२ ८

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥ १३७ १०, १३८ १७

' ये यान्त्यभ्युदये ' ११६ २०

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभिः
लीलापानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥ २० ३

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥
[वे सं. ३.३२] १३४ १३, १६९ टि.७

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ [शि. पा. व. १ १०] ३२ २५

रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ [शि.पा.व. ३. ५३] १४९ १८, १५२ २३

रसवद्दर्शितस्पष्टश्रृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम् ॥ [भामहका. लं. ३. ६] ३११ २

रसभावतदाभासभावशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ [ध्व. २५] ३१७ ३

रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥ [ध्व. ७८] १७८ २६

रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥ [ध्व. ८३] १७८ २७

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासि यष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्ति दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥
[सुभाषितावली २५९५ हर्षदत्तः] २२ ९

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकले नान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिला ताम्रच्छविः पातु वः ॥ २१ २५

''लाउलकलणियाह'' २३ ७

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ [वे. सं. १. ८] १८३ २२

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलीकाण्डमृणालदण्डाः ॥ १५२ १८ १८० ७

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ [मृच्छक १. ३४] २४१ २४

''वदतु यदिहान्यद्'' १७ ५

वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ [ध्व. ७५ तम्यामुदाहृतः] १७८ २५

विकसितसहकारभारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥ १६ १३

विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाधिगच्छति ॥ [सर. कण्ठा] ११ २६

विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ [ध्व. ८६] १७९ १

विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ [ध्व. ६६) १७३ १२

विमिश्रः श्यामान्तेष्वररी[र]पुटसीत्कारविरुतैः । [वामनका.सू. २ २ ४] १६ २७

विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ [ध्व. ८१] १७८ २७

विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत् ।
विशेषतस्तु शृङ्गारे सुकुमारतरो ह्यसौ ॥ [ध्व. ८४] १७९ १

विरोधिरससम्बन्धिविभावादिपरिग्रहः । ( पूर्वार्धम् ) ८० १७

विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ ( उत्तरार्धम् ) [ध्व. ७४] ८९ २६, १७८ २४

विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ [ध्व. ४१] १३६ २२

विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ [ध्व. ७६] १७८ २६

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥ १५ १८, १९

वेत्रशाकुञ्जे शैले लेऽजेऽकुकशात्रवे ।
यात किं विदिशो जेतुं तुंजेशो दिवि किं तया ॥ [किराता. १५ १८] ७६ १५

'व्युत्पत्तिर्यस्य नास्ति'' १२ २५

''शरा वारिधारा'' २४६ १५

शृङ्गारानुकृतिर्या तु स हास्य इति संज्ञितः ।
रौद्रस्यापि तु यत् कर्म स ज्ञेयो करुणो रसः ॥ [भ.ना.शा. ६ ४०] १२७ २१

शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः । [वामनका.सू. २ २ ४] १६ २७

श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते ।
आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ॥ [भामहका. २ ३] ९१ ३

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गताऽसुखाः ॥ १५ १५

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय ॥ [शि.पा.व. ११ १] ३३ ९

'सग्गं अपारियायं' ११६ २०

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २० ११

'सत्त्वसमुत्थं' ३१५ ११

सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥ [ध्व ७० परि.श्लो.] १७३ १३

सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ [ध्व. ६८] १७३ १२

सन्निवेशविशेषात्तु दुरुक्तमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥ [भामहका. १ ५४] १० २०

सपदि पङ्क्तिविहङ्गमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥ १२ ५

"समीहा रतिभोगार्था विलासः परिकीर्तितः ।
दृष्टनष्टानुसरणं परिसर्पस्तु वर्ण्यते ॥ [भ.ना.शा. २१ ७८] ८९ २१

"सम्भोगो विप्रलम्भश्च" १३५ १४

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥ [विक्रमो. ४ २७] १७८ ४

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिरुपमा सुप्रयुज्यते ॥ [भामहका. २ ४३] २४६ ५

संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यापि स जातिमात्रविहितो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥ १५ १०

संसर्गादिर्यथा शास्त्र एकत्वात्फलयोगतः ।
वाक्यार्थस्तद्वदेवात्र शृङ्गारादी रसो मतः ॥ ३०७ २४

संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ [वा.प. २ ३१७] ३ २

साधर्म्यमुपमा भेदे पूर्णा लुप्ता च साऽग्रिमा ।
श्रौत्यार्थी च भवेद् वाक्ये समासे तद्धिते तथा ॥ [का. प्र ८७] २३६ २०

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः १५ १२

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ३ ४

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ [कु.सं. ३. २०] १७७ १९

सूर्याचन्द्रमसौ यत्र चित्रं खद्योतपोतकौ ।
नित्योदयजुषे तस्मै परस्मै ज्योतिषे नमः ॥ [कल्पलतामङ्गलम्] १ ८

